आनन्दाश्रमसंस्कृतग्रन्थावलिः ।

ग्रन्थाङ्कः १९

श्रीमद्वाग्भटाचार्यविरचितः

# रसरत्नसमुच्चयः ।

बापट इत्युपनामकेन विनायकसूनुना कृष्णराव-
शर्मणा संशोधितः ।

स च

महादेव चिमणाजी आपटे

इत्यनेन

पुण्याख्यपत्तने

आनन्दाश्रममुद्रणालये

आयसाक्षरैर्मुद्रयित्वा

प्रकाशितः ।



शालिवाहनशकाब्दाः १८१२



मूल्यं पादोनरूपकचतुष्टयम् ।

# आदर्शपुस्तकोल्लेखपत्रिका ।

अथ रसरत्नसमुच्चयस्यास्य हस्तलिखितपुस्तकानि यैः परहितैकतया संस्करणार्थं प्रदत्तानि । तेषां नामादीनि कृतज्ञतया पुस्तकानां संज्ञाश्च प्रकाश्यन्ते ।

( क ) इति संज्ञितम्—कैलासवासिनां वेदशास्त्रसंपन्नानां माटे इत्युपाह्वानां पुण्यग्रामीपबालशास्त्रिणाम् । लेखनकालः शके १७३१ ।

( ख ) इति संज्ञितम्—पुण्यपत्तननिवासिनां लागवणकर इत्युपाह्वानां वे. शा. सं. बलवन्तराव इत्येतेषाम् । लेखनकालः शके १७६६ ।

( ग ) इति संज्ञितम्—मोहमयीराजधानीनिवासिनां बी. ए. एम्. डी. उपाधिधारिणां कुण्टे इत्युपाह्वानां श्रीमतां अण्णासाहेब इत्येतेषाम् । लेखनकालः शके १८०३ ।

( घ ) इति संज्ञितम्—कैलासवासिनां वे. शा. संपन्नानां भाटवडेकर इत्युपाह्वानां कृष्णशास्त्रिणाम् ।

( ङ ) इति संज्ञितम्—कैलासवासिनां विंचूरकर इत्युपाह्वानां श्रीमदण्णासाहेब इत्येतेषाम् ।

( च ) इति संज्ञितम्—मोहमयीराजधानीनिवासिनां बी. ए. एम्. डी. उपाधिध[illegible] देशमुख इत्युपाह्वानां श्रीमन्मोरेश्वरराव गोपाळर[illegible] इत्येतेषाम् ।

( छ ) इति संज्ञितम्—वैराजक्षेत्रनिवासिनां रा. रा. बापटोपाह्वानां कृष्णराव विनायक इत्येतेषाम् ।

( ज ) इति संज्ञितम्—करवीरनिवासिनां वे. शा. संपन्नानां द्रविड इत्युपाह्वानां भिकुशास्त्रिणाम् ।

( झ ) इति संज्ञितम्—श्रीमन्महाराज छत्रपतिसरकार करवीर इत्येतेषाम् । लेखनकालः शके १६७९ ।

( ञ ) इति संज्ञितम्—खेटकग्रामनिवासिनां रा. रा. नागोभाउ वकील इत्येतेषाम् । लेखनकालः शके १७२९ ।

( ट ) इति संज्ञितम्—जनस्थाननिवासिनां चिवलकरोपाह्वानां वे. शा. सं. गोपाळरावजी वैद्य इत्येतेषाम् । लेखनकालः शके १७८० ।

( ठ ) इति संज्ञितम्-पुण्यपत्तननिवासिनां महाजनोपाह्वानां वे. शा. सं
श्रीपतिशास्त्री वैद्य इत्येतेषाम् ।

( ड ) इति संज्ञितम्-पुण्यपत्तननिवासिनां आडघरे इत्युपाह्वानां वे. शा. सं
भाऊसाहेब इत्येतेषाम् ।

# अथ रसरत्नसमुच्चयस्य भूमिका ।

अथ खलु पूज्ये धराहृदये कर्मभूम्यभिधेऽस्मिन्भरतखण्डे छत्रिणो गच्छन्तीतिन्यायेन साम्प्रतं कलिकलुषितान्तःकरणानां नानाविधदुर्व्यसनलोलुपानां वेदोपवेदशास्त्रपुराणादिष्वनादरवृद्धचेतसां कपर्दकचुम्बकानां सार्वभौममहाराज्ञ्युपदेशताडनविह्वलानां परम्परागतवर्णधर्मोदासीनानां मण्डलाधिपतीनामाश्रयाभावाद्वैद्यशास्त्रपठनपाठनविरलप्रचारेण गुरुपरम्पराखण्डनाल्लेखकप्रमादादिवशाच्चातीवाशुद्धिङ्गतोऽप्ययं रसरत्नसमुच्चयग्रन्थ एतन्मुद्रणात्प्राग्दुष्प्राप्य आसीत् । न जानेऽस्य रसग्रन्थस्य प्रचारलुप्ततायाः कियच्छतकानि गतानि पूर्वम् । ग्रन्थोऽयं समीचीनान्रसविद्यारूपान्रससिद्धमार्गान्क्रमानुगतान्सुव्यवस्थिततयाऽऽदधाति । ग्रन्थस्यास्याऽऽधारभूतानां सप्तविंशतिसंख्याकप्राचीनरसतन्त्रकाराणामन्येषां च रसशास्त्रप्रणेतॄणां नामनिदर्शनमपि निष्कपटधिया ज्ञापयति च ॥

अपिच । येन वृद्धवाग्भटो निर्मितः । येन कलियुगेऽस्मिन्धरणीतले धन्वन्तरेः पुनरवतरणद्योतनार्थमिव तथाऽमृतपूर्णकुम्भाद्भुतशक्तिप्रदर्शनार्थमिव तस्य [ वृद्धवाग्भटस्य ] प्राणहरणं विना हृदयमपि सजीवं पृथक्कृतं दर्शितं विद्वज्जनेषु । एतद्धृदयं नामाष्टाङ्गहृदयं वाग्भट इति नाम्ना व्यवह्रियते । यत आत्रेयचरकसुश्रुतसंहितापेक्षया लघीयस्त्वाद्वाचि स्थापयितुं योग्यो भटो ग्रन्थो वैद्यकग्रन्थः । अत एव वाग्भट इत्यष्टाङ्गहृदयस्य नाम सूपपन्नम् । यस्य वाच्येव भटा ग्रन्था विद्यन्तेस्म । नाम । मुखोद्गताः सार्वायुर्वेदशास्त्रग्रन्था यस्य । किंवा वाग्देवतायाः प्राप्ता भटा यस्य । नाम । प्रसन्नसरस्वत्याः वरेणैव अधीतशास्त्रार्थो य इत्यर्थः । अनया व्युत्पत्त्या स्वनाम्नः सार्थकता दर्शिता येन । स एव वाग्भटः सर्वशास्त्रार्थकुशलः कर्ताऽस्य रसरत्नसमुच्चयस्य । एतदेव निश्चीयते पूर्वोक्तग्रन्थत्रयपरिशीलनेन । वृद्धवाग्भटेऽपि श्रीमद्वाग्भटाचार्यैः स्वनाम प्रत्यक्षतो नोल्लिखितम् । तद्यथा । सुतोऽभवत्तस्य च सिंहगुप्तस्तस्याप्यहं सिन्धुषु लब्धजन्मा । अष्टाङ्गहृदयापरपर्याये लघुवाग्भटे तु ग्रन्थकर्तृनामधामादि किंचिदपि न दृश्यते । तथाप्यष्टाङ्गहृदयं श्रीमद्वाग्भटेन रचितमिति सर्वैः परम्परया श्रुतमस्ति । हेमाद्रिरपीत्थमेव वक्तिस्म । तद्यथा । आयुर्वेदं व्याचिख्यासुः श्रीवाग्भटाचार्यः प्रथमश्लोकेनेष्टदेवतां नमस्करोति । रागादिरोगानिति ॥ तृतीयग्रन्थेऽस्मिन्रसरत्नसमुच्चयेऽष्टाङ्गसङ्ग्रहवच्छ्रीमद्वाग्भटाचार्यैः

स्वनामधेयं प्रत्यक्षतो नोच्चारितम् । तद्यथा । रसरूपरत्नान्युच्चीयन्ते संगृह्यन्ते यस्मिन् । एतादृशः संग्रहो नाम रसचिकित्सासंग्रहोऽष्टाङ्गसंग्रहवन्नानारसतन्त्राण्यालोच्य सिंहगुप्तस्य सूनुना क्रियते । अत्र स्वनामप्रकाशने किंचिच्चातुर्यं लीनता च दृश्येते । सिंहगुप्तस्य सूनुनेत्यस्मिन्पितामहपौत्रयोर्वाग्भटयोर्भ्रान्तिर्न जायते । अपि च । स्वनामापेक्षया पितृचरणाभिधानेन स्वप्रकाशनं प्रगल्भतरम् । अपरं च । वैद्यकुलतिलकोऽन्यः सिंहगुप्तो वैद्यशास्त्रे प्रसिद्ध इति केनापि न श्रूयते । अन्यच्च । कश्चिद्वाग्भटबन्धुर्वैद्यशास्त्रे प्रसिद्ध इति न श्रूयते । किं बहुना । आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोरिति स्मृतेश्च । पितामहपौत्रभ्रमनिरासेन पितृचरणप्रकाशनद्वारा स्वनामाविष्करणायैव सिंहगुप्तस्य सूनुरिति पदं सर्वत्रैवोपयुज्यते । किंच । पितामहपितृनाम्नोः स्पष्टकथनेनैवैतत्सिध्यति । तद्यथा । ग्रन्थप्रकटीकरणकाले वाग्भटपितृपितामहौ सुविख्यातावायुर्वेदमहापण्डितौ सर्वविद्याचारसंपन्नौ सुप्रसिद्धभिषग्वरावास्ताम् । अन्यथा पूर्वजकीर्तनस्वारस्यहानिप्रसङ्गात् । व्यवहारेऽप्येवं नित्यं दृश्यते । यदा कश्चित्सोज्ज्वलकीर्तिर्भवति तदा तत्सुतः कस्त्वमिति पृष्टे सति स्वनामोत्कीर्तनापेक्षया सपद्येतद्वदति । अहममुकस्यामुकस्य पुत्रोऽस्मीति । अनेन वाग्भटस्य पितृपितामहावतीव विख्यातावास्तामिति निष्पद्यते । पुनश्च । हस्तलिखितजीर्णपुस्तकानुसारेणेत्थमेव ज्ञायते । तद्यथा । इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चयः संपूर्णः । इत्यनेन । परम्परागतलोकसमाख्यया । प्रस्तुतग्रन्थस्थस्वनामप्रकटीकरणेन च । श्रीमद्वाग्भटाचार्य एवास्य रसरत्नसमुच्चयस्य कर्तेति प्रसक्तिरुत्पद्यते ॥

संग्रहादौ । तमेकवैद्यं शिरसा नमामि वैद्यागमज्ञांश्च पितामहादीनित्यादिना । सकलवेदोपवेदादीनामुत्पत्तिस्थानभूतम् । संपूर्णदेवर्षिप्रजापत्यादीनां कर्तारम् । चतुराननम् । श्रीब्रह्मदेवम् । यः प्रणमति । स वाग्भटो वैदिकमार्गपूजक आसीदिति व्यक्तमेव । तथाऽनुभूयते च तद्ग्रन्थानुशीलनेन शतशः प्रमाणैः । अत एव बुद्धाय तस्मै नम इत्यस्मिन्निकटवर्तिपद्ये बुद्धाय नाम ज्ञातं सर्वं येन । तस्मै प्रजानते । त्रिकालज्ञानिने । परमपुरुषायेति सरलार्थः ॥

उच्यतेऽत्रेदं प्रसंगात् । वृद्धवाग्भटविरचनाकालात्पूर्वं न च बौद्धधर्मप्रवर्तको बुद्धः कीकटेषु प्रसूत आसीदिति वाच्यम् । अन्यथा तद्ग्रन्थोपक्रम इष्टदेवतानमस्कारमङ्गलसमये वेदतत्कर्मणोर्निन्दाकर्तुर्बुद्धस्य नामोच्चारणेन श्रौतस्मार्तकर्मनिष्ठे पुरुषे तदुत्पन्नत्रासानुस्मरणेन बुद्धशब्दप्रयोगदर्शनाभावसंभवात् । वि-

शिष्टशब्दोच्चारणेन विशिष्टानुस्मरणं सहजम् । यथा । द्रौपद्याः पुरतो दुर्योधनशब्दोच्चारणम् । सीतायाः पुरतो रावणशब्दः । नलस्य तु कलेः । तथा बुद्धस्य पश्चाज्जातानां श्रौतस्मार्तकर्मानुष्ठातॄणां पुरतः संदिग्धार्थकबुद्धशब्दप्रयोगदर्शनं त्रासोत्पादकम् । इदं तु ग्रन्थोपक्रममङ्गलाचरणे श्रुतिपथानुसारिवाग्भटमुखान्निःसृतम् । तस्यागामिकाले भविष्यत्रासस्य पूर्वं तदभावादित्यनेन न विरुद्धम् । अतः श्रीमद्वाग्भटाचार्यो बुद्धात्प्राक्समजनीत्यनुमानं सूपपन्नम् । अनुमीयते जैनग्रन्थेभ्यो द्वासप्तत्यधिकनवशतमिते युधिष्ठिरशकवत्सरे बुद्धोऽजनिष्ट ।

न मात्रामात्रमप्यत्र किञ्चिदागमवर्जितमिति वृद्धवाग्भटापरपर्यायाष्टाङ्गसंग्रहस्थप्रतिज्ञया श्रीमद्वाग्भटः प्रमाणपरतन्त्र आसीदिति ज्ञायते । तत्पारतन्त्र्यं वैदिकमार्गावलम्बिन्येव । बौद्धास्तु स्वतन्त्रा युक्तिवादकर्तारश्च । मन्वादिभिः स्मृतिकारैर्ब्रह्मचर्यव्रतादेशनं कृतोपनयनस्यैवाऽऽदिष्टम् । आयुर्वेदोपदेशयोग्यशिष्यगुणान्वक्तुकामो वाग्भटः संग्रहापरपर्यायाष्टाङ्गसंग्रहस्थशिष्योपनयनीयाऽध्याये त्वेतद्ब्रवीति । तद्यथा । ब्रह्मचारी जितद्वन्द्वो धीरः सुचरितः स्थिरः । शिष्योऽध्याप्यो गतो यावदन्तं तन्त्रार्थकर्मणाम् । नाकालविद्युत्स्तनिते भूकम्पे राहुदर्शने । पञ्चदश्यामचन्द्रायां परोक्षे वा गुरोः पठेदित्यादिश्लोकेषु ब्रह्मचारीत्यनेन विशेषणेन कृतोपनयनो द्विजस्तद्व्रताधिकारीत्यर्थः । एतदुपनयनं द्विजस्यैवाभिहितं धर्मशास्त्रे । एतत्प्रमाणैः श्रीमद्वाग्भटः श्रौतस्मार्तधर्मपरो द्विज आसीदित्यवगम्यते । परमपूज्येन हेमाद्रिणाऽपि वाग्भटमुद्दिश्येत्थमभ्यधायि लघुवाग्भटटीकोपक्रमे । तद्यथा । आयुर्वेदं व्याचिख्यासुः श्रीमद्वाग्भटाचार्यः प्रथमश्लोकेनेष्टदेवतां नमस्करोति । रागादिरोगानिति । एवं धर्माधिकरणमहापण्डितश्रीहेमाद्रिमुखादप्याचार्यपदवीं गतः श्रीमद्वाग्भटो धन्वन्तरिरिवापरः कलियुगे भूदेवरूपेणेन्द्रप्रस्थपश्चिमदिग्वर्तिमरुदेशनिकटवर्तिनि सिन्धुसंज्ञके धृतराष्ट्रजामातृजयद्रथदेशे प्रादुरासीदिति श्रुतं परम्परयाऽस्माभिः । हन्त । वर्णधर्मद्वेषिभिर्यवनैः पादाक्रान्तेषु सिन्धुष्वनेकविद्वज्जनमण्डितब्राह्मणस्थलानि विलयं गतानीति श्रूयते । अनेन कारणेन किंचिदप्याचार्यस्य जीवनवृत्तं न ज्ञायते । तथाप्यत्रेयं किंवदन्ती । एतद्ग्रन्थकर्ता श्रीमद्वाग्भटाचार्यो युधिष्ठिरस्य परिषदि भिषगग्रगण्यो बभूव ॥

अपिच । हेमाद्रिणा चतुर्वर्गचिन्तामणिविधायिना । तदुक्तव्रतदानादिसिद्ध्यङ्गारोग्यसिद्धये । क्रियतेऽष्टाङ्गहृदयस्यायुर्वेदस्य सुग्रहा । टीका चरकहारीतसुश्रुतादिमतानुगेत्यनेन लघुवाग्भटटीकाकारश्चतुर्वर्गचिन्तामणेः कर्ता हेमाद्रिरासीदिति निश्चीयते । अयं हेमाद्रिस्तु प्रतिष्ठाननगरस्थचन्द्रसेनस्य राज्ञो,

मन्त्रिणो हेमाडपन्तापरपर्यायाद्धेमाद्रेर्भिन्न इति प्रतिभाति । अयं वाग्भटटीकाकारो हेमाद्रिः स्वयं चक्रवर्तिनृपतिः श्रीकृष्णवंशोत्पन्नस्य कस्यचित्कामदेवस्य राज्ञः पुत्र आसीत् । अयं हेमाद्रिनृपस्तु त्रयस्त्रिंशच्छतकेभ्यः प्राग्जातस्याशोकनृपतेः पूर्वं समजनीत्यनुमीयते । अतो हेतोर्लघुवाग्भटटीकाकारापेक्षया श्रीमद्वाग्भटाचार्यस्तु प्राचीनोऽस्तीति ख्यापनमनवश्यमेव ॥

किंच । श्रीमद्वाग्भटाचार्यसमयमपेक्ष्य कियद्वर्षाणि व्यतीतानीत्यनुमातुमेतद्रसरत्नसमुच्चयग्रन्थोद्धृता एतद्ग्रन्थाधारभूतानां प्राचीनरसशास्त्रप्रणेतॄणां रसग्रन्थानां च कतिचिन्नामनिर्देशा अत्र प्रदर्श्यन्ते। तद्यथा । नागार्जुनः । सोमदेवः । नन्दी । करवालभैरवः । भैरवः । सोमसेनानी । ब्रह्मज्योतिर्मुनीन्द्रः । रससिन्धुः । रससंहिता । मृगचारी । रसनिगमः । स्वर्णाख्यलोकनाथः । रसार्णवादिशास्त्राणि । देवीशास्त्रम् । श्रीकृष्णदेवः । आगमः । भैरवनाथः । नन्दीश्वरः । नागबोधिः । शम्भुः । भालुकिः । सिद्धनाथः । मर्यलार्यः । पिनाकी । बुद्धमुनिः । नासत्यः । सोमसत्यः । त्रिपुरा । चम्पकारण्यवासिनः पूर्णामृताख्ययोगीन्द्राः । शङ्करः । शम्भुदेवः । हरः । दस्रौ । आस्तिकः । भैरवानन्दयोगी । सिद्धघणः । महादेवः । वासुदेवः । हरिः । ईश्वरः । रसेन्द्रतिलकः । गृङ्गार्षिः । योगी । मन्थानभैरवः । काकः । चण्डीश्वरः । रसाङ्कुशः । स्वच्छन्दभैरवः । खण्डः । कापालिकः । ब्रह्मा । गोविन्दः । लम्पटः । सुरानन्दः । यशोधनः । इन्द्रदः । गोमुखः । कम्बलिः । व्याडिः । रत्नकोशः । सात्त्विकः । नरवाहनः । कपाली । मत्तः । विशारदः । भास्करः । शूरसेनकः । आदिमः । चन्द्रसेनः । लङ्केशः । माण्डव्यः ॥ नागार्जुनादिमाण्डव्यान्तानि सर्वाण्यपि पूर्वोक्तान्येतद्ग्रन्थाधारभूतरसग्रन्थतत्प्रणेतृनामावतरणानि युधिष्ठिरात्प्राक्तद्राज्यसमये वा वर्तमानानां देवाषनृपसिद्धानां द्योतकानि भासन्ते । अत एवावरान्नवशताधिकवर्षसहस्रचतुष्टयादूर्ध्वतनकाले श्रीमद्वाग्भटाचार्यप्रादुर्भावसंभवोऽस्तीति तर्क्यते स्थूलदृष्ट्या । अनेनानुमानेन कलौ वाग्भटनामाचेत्यस्य हारीतसंहितोक्तस्य वचनस्य सार्थक्यं भवति ॥

अस्मिन्रसरत्नसमुच्चये ग्रन्थे वाग्भटतन्त्रपश्चाज्जातेभ्यो रसरत्नाकराद्यन्यग्रन्थेभ्यः कतिपये श्लोकाः कैश्चित्कैश्चित्क्वचित्क्वचित्संमिश्रिता दृश्यन्ते । अस्माद्धेतोः प्रायः सर्वाण्यप्यादर्शपुस्तकानि किञ्चिन्न्यूनाधिकग्रन्थानि विद्यन्ते । एतत्प्रदर्शनाय द्वितीयावृत्त्यां यितप्रियं। रसरत्नाकरापेक्षया वाग्भटतन्त्रं प्राचीनमिति विद्वद्भिः सुज्ञातमस्ति ॥

अत्र रसरत्नसमुच्चयेऽष्टाङ्गहृदयवेदिनामेवाधिकारः । आयुर्वेदस्याष्टाङ्गाना-

मध्ययनं विनाऽष्टाङ्गान्तर्गतचिकित्सास्थानान्तर्गतकेवलरसचिकित्सैकाङ्गज्ञानं निष्फलं स्यात् । इदमायुर्वेदस्य रसचिकित्साङ्गं पृथक्त्वेन प्रतिपाद्यते तत्प्रणेतृभिरिति परम्परया संप्रदायो दृश्यतेऽतिभूयस्त्वाद्देवर्षितपस्विसुशीलधार्मिकद्विजसच्छूद्रसूपयोगित्वात्संस्कारवशादेव सुसाध्यत्वाच्च । चिकित्सा त्रिविधाऽस्ति । दैवी । मानुषी । आसुरीति । एतद्रसरत्नसमुच्चये दैवी चिकित्सा संगृहीता । दैवैर्महेश्वरादिभिरचिन्त्यप्रभावैर्योगिभिः प्रोक्ता रसचिकित्सा । अतो हेतोर्दैवीति सा कथ्यते । रसखण्डम् । प्रयोगखण्डम् । वादखण्डम् । रसायनखण्डम् । मन्त्रखण्डं चेति पञ्चखण्डात्मकं यद्रसशास्त्रं तदतीव बीजरूपेणात्र संगृहीतम् ॥

सर्वेष्वादर्शपुस्तकेषु यस्मिन्कस्मिन्पुस्तके यत्र कुत्रापि यत्किंचिदधिकं दृष्टं तत्सर्वमानन्दाश्रमस्थपण्डितैरस्य परिशिष्टे संगृहीतम् । तत्सर्वमेतद्ग्रन्थप्रचारतत्परैश्चिन्त्यम् ।

यस्य कृपयैतादृशो रसग्रन्थो दुष्प्रापोऽपि सुलभतमो जातः स महोदयः पुण्यपत्तनस्थानन्दाश्रमाधिपतिर्महादेवराव आपटे इति व्यावहारिकनाम्ना भरतखण्डे विश्रुतश्चोत्तरोत्तरमधिकमधिकमुत्कर्षं दधानश्चिरजीवी भूयादिति श्रीविनायकनन्दनः प्रार्थयते ।

वैराजक्षेत्रनिवासी
कृष्णरावशर्मा ।

# अथ रसरत्नसमुच्चयस्य परिशिष्टम् ।

३ अध्याये २५ श्लोकात्परम्

शतवारं कृतं चैवं निर्गन्धो जायते ध्रुवम् ॥

४ अध्याये ५६ श्लोकात्परम्

रत्नानां शोधनं श्रेष्ठं मारणं न गुणप्रदम् ।
भस्मना वीर्यहानिः स्यात्तस्मात्तानि च शोधयेत् ॥
रसे रसायने दाने धारणे देवतार्चने ।
सुलक्ष्माणि सुजातीनि सर्वाण्युक्तानि शोधयेत् ॥
शुद्धिं चरन्ति रत्नानि निम्ब्वम्बुनि तुषाम्बुनि ।
विशुध्यन्ति त्रिदिवसैर्विधृतानि च सर्वशः ॥

८ अध्याये ४३ श्लोकात्परम्

नागं निरुत्थितं कृत्वा खर्परैः षड्गुणैःसह ।
षष्टिश्चतुर्थवेधेन तारमायाति काञ्चनम् ॥

९ अध्याये ५८ श्लोकात्परम्

रससंमूर्च्छितं स्थूलपात्रमापूर्य काञ्जिकैः ।
द्वियामं स्वेदयेदेवं रसोत्थापनहेतवे ॥

१२ अध्याये ८ श्लोकात्परम्

ज्वरितो हितमश्नीयाद्यथा नास्यारुचिर्भवेत् ।
अन्नकाले ह्यभुञ्जानो क्षीयते म्रियतेऽपि वा ॥
यावत्सूतं न शुद्धं न च मृतमथ नो मूर्च्छितं गन्धबद्धं
नो वज्रं मारितं वा न च गगनवधो नोपसूताश्च शुद्धाः ।
स्वर्णाद्यं सर्वलोहं विषमपि न मृतं तैलपाकेऽनभिज्ञ-
स्तावद्वैद्यः क सिद्धो भवति वसुभुजां मण्डले श्लाघ्ययोग्यः ॥
अथ ज्वराणां लक्षणानि प्रतीकाराश्चोच्यन्ते ।

१२ अध्याये १३०½ श्लोकात्परम्

काचकूप्यां विनिक्षिप्य स्वेदयेत्सप्तकद्वयम् ॥

१४ अध्याये १ श्लोकात्परम्

रसस्य भस्मना युक्तं लोहं कृष्णाभ्रकं मृतम् ।
शिलाजतुजकैशोरं समभागं च कल्पयेत् ॥

# रसरत्नसमुच्चयस्य परिशिष्टम् ।

एष पञ्चामृतो नाम रोगराजनिकृन्तनः ।
पिप्पलीमधुसर्पिर्भिः प्रयोज्यो भिषजा द्रुतम् ॥

इति पञ्चामृतरसः ।

१४ अध्याये ७० श्लोकात्परम् ।

शुद्धं पादं च पोटल्या काकिण्यो विषयस्य च ॥

१५ अध्याये ११ श्लोकात्परम्

भल्लातकं तिलं पथ्याचूर्णं गुडसमायुतम् ।
मोदकं भक्षयेन्मासात्पित्तरक्तार्शसां जयेत् ॥

१५ अध्याये ६७ श्लोकात्परम्

चतुर्वारं च ताप्येन वातारिस्नेहयोगिना ।
दशवारं च वर्षाभूवासामत्स्याक्षिकारसैः ॥

१५ अध्याये ८० श्लोकात्परम् ।

कान्तवैक्रान्तशुल्वाभ्ररसगन्धकभस्मना ।
सैषा वर्तिर्गुदे धार्या सस्नुक्क्षीरेण शोषणा ॥
सूरणं कासमर्दं तु शिग्रुवार्ताकवालुकम् ।
सुपक्वं योजयेच्छाकं पथ्यं गोधूमतन्दुलैः ॥

१६ अध्याये १८ श्लोकात्परम्

प्रवाहिकां च निर्वाहीं विम्बिशीं गुदशूलकम् ॥

१६ अध्याये ४१ श्लोकात्परम्

दुर्नामग्रहणीविकारगुदजान्ये चापि मूलोद्भवाः
सर्वे ते विलयं प्रयान्ति मनुजे श्रीशम्भुनोक्तं पुरा ॥

१७ अध्याये १ श्लोकात्परम्

मातापितृजदोषेण ह्यथवा मूत्ररोधनात् ।
अपथ्यादभिचाराच्च जायते चाश्मरीगदः ॥
मूत्राविष्टौ च पितरौ सुरतं कुरुतो यदि ।
मूत्रेण सहितं शुक्रं च्यवते गर्भसंभवे ॥
यत्र यस्य च देहस्य तत्र तस्य च जायते ।
मूत्रं मूत्रस्य संस्थाने करोति बन्धनं नृषु ॥
सोऽप्यसाध्यो मूत्रगदो बाल्ये द्रवति मानुषम् ।
तारुण्येऽप्यपचारेण जायते मूत्रशर्करा ॥

विपरीतरतेनापि उत्तानपुरुषेण वा
शुक्रं प्रच्यवते तस्य स्त्री शुक्रं च प्रमुञ्चति ॥
पुनश्च मेहनस्थं च ततो वातेन शोषितम् ।
दृषदत्वं प्रपद्येत मूत्रद्वारं प्ररुध्य च ॥
तेन मूत्रनिरुद्धत्वं जायते तीव्रवेदना ।
अण्डसंधौ स्थिता याति शर्करा शस्त्रसाध्यताम् ॥
अथवा चतुरा नारी मैथुनं विदधाति च ।
तत्सौख्येन भवेत्सौख्यं स्त्रीणां योनिविमर्दनम् ॥

## अथ मूत्रदोषाङ्कुशो रसः ।

अभ्रकं पारदं रुक्मं लोहं वङ्गं शिलाजतु ।
समभागानि चैतानि वसुनीरैर्विमर्दयेत् ॥
त्रिदिनं मुसलीतोयैस्त्रिकण्टकरसेन च ।
मूत्रदोषाङ्कुशस्यास्य वल्लयुग्मं प्रदापयेत् ॥
वातकुण्डलिकानाहमूत्रसंगाश्मरीगदान् ।
वातोल्बणाञ्जयेद्दोषान्वह्निसंदीपनः परः ॥
शिवसिद्धान्तशास्त्रान्तान्मूत्रदोषाङ्कुशो रसः ॥ इति क्षेपकश्लोकाः ॥

१८ अध्याये १९ $\frac{१}{२}$ श्लोकात्परम्

भुक्ता अपि च पाषाणा जीर्यन्ते क्षणमात्रतः ।
नैतस्मिन्नियतः क्वापि विहाराहारकर्मणि ॥
लोकनाथरसोऽप्यत्र क्षौद्रैर्गुञ्जाचतुष्टयम् ।
पाठामूलस्य कर्षैकं पिबेत्तन्दुलवारिणा ॥

१८ अध्याये १७२ $\frac{१}{२}$ श्लोकात्परम्

नागं वङ्गं सुताम्रं दरदमनशिला तुल्यताप्याभ्रगन्धं
भस्म स्वर्णेन तुल्यं रसकमपि रविक्षीरघृष्टं सुगोलम् ।
कृत्वा पक्त्वा च यन्त्रे लवणविरचिते भावयेदार्द्रकाभि
र्वारान्सप्त द्विवल्लं समधुमगधया योजितः सेवनीयः ॥
कार्त्स्न्ये शूलेऽग्निमान्द्ये त्रिविधसमुचितैरौषधैः सन्निपाते
हृद्रोगे गुल्ममेहे कफपवनभवे सर्ववातज्वरेऽपि ।
देयो युक्त्या रसेन्द्रस्त्रिभुवनविदितो भोगिलोके प्रसिद्धो
नागानां वल्लभो यो गरगदगलनारक्तपित्तप्रहन्ता ॥

इति नागवल्लभो रसः ॥ अथ द्वितीयः ॥

नागं सुवङ्गं रसभस्मताम्रं सारं शिलाहिङ्गुलमाक्षिकं च ।
घनं सुगन्धं मृतहेमखर्परं सर्वं समं खल्वतले विघृष्टम् ।
अर्केण दुग्धेन विधाय गोलं मृत्स्नांशुकैः सप्तमितैः सुघर्मे ॥
भाण्डे त्रिभागलवणोपरि संनिवेश्य संपूर्णयेच्च लवणेन निरुध्य यत्नात् ।
सिद्धं भवेद्वानुमितैस्तु यामकैश्चुल्ल्योपरिस्थं मृदुमध्यतीव्रकैः ॥
शीतं समाकृष्य विचूर्ण्य सप्तधा चण्डांशुसंशोषितशृङ्गवेरकैः ॥
नागवल्लभरसो द्विवल्लको मागधीमधुयुतश्च सर्वजित् ।

इति द्वितीयो नागवल्लभरसः।

१८ अध्याये २२८ श्लोकात्परम्

हेमभस्मसमतारसूतकं मौक्तिकं च विषगन्धकं कुरु ।
चित्रकार्द्रकरसेन पेषयेच्छोषयेच्च परिपेषयेन्मृदु ॥
भाजने च लवणोदरे क्षिपेदङ्गुलित्रितयमापते तथा ॥

२० अध्याये १२० ½ श्लोकात्परम्

भगन्दरव्रणं चापि व्रणं चापि विशेषतः ।
षण्मासेन जरां मृत्युं पलितं वलितं हरेत् ॥

२१ अध्याये २५ श्लोकात्परम्

मूलैः सपुष्पैः फलपत्रसारैरर्कस्य निष्पीड्य रसाढके तु ।
भूपालकावह्निपुनर्नवानां तुरङ्गगन्धार्ततलस्य मूलम् ॥
निर्गुण्डिकायाश्च तथैव पृष्ठे मूलानि पिष्ट्वा पृथगाददीत ।
एलालवङ्गं तगरं च कुष्ठं ससैन्धवं कर्षमितं पृथक्स्यात् ॥
स्नुक्क्षीरपिष्टाजपयोद्विभागं प्रस्थेन तैलस्य पचेद्वि पक्वम् ।
पञ्चार्कतैलं प्रवदन्ति तज्ज्ञाः श्रोणीगतान्सन्धिगतान्निहन्ति ॥
अभ्यञ्जनैश्च त्रिभिरेव सद्यो वातांश्च वेगांश्चिरजानशीतिः ।

इति पञ्चार्कतैलम् । पाठान्तरम् ।

अर्कवृक्षस्य पञ्चाङ्गमाढके विपचेज्जले ।
चतुर्गुणे वह्निसिन्धुनिर्गुण्ड्यानि च पीलुकम् ॥
वर्षाभूवाजिगन्धार्तगलं तेषां पृथक्पृथक् ।
स्नुक्क्षीरं कुडवं दत्वा शनैर्मन्दाग्निना पचेत् ।
एतदभ्यञ्जनेनैव निहन्यादाशु संधिगान् ॥

स्पर्शवातोत्थरोगांश्च कटीपार्श्वगतांस्तथा ।
ब्रुवन्ति तज्ज्ञाः पञ्चार्कतैलं श्रेष्ठं समीरनुत् ॥

इति द्वितीयपञ्चार्कतैलम् ।

२२ अध्याये ४१ श्लोकात्परम्

समजीर्णाभ्रसूतेन भस्मैतत्साधयेत्खलु ।
अन्यथा न यथा प्रोक्तः फलं दत्तं दुरब्रवीत् ॥
पाण्ड्वर्तिग्रहणीप्रमेहगुदजातीसारयक्ष्मापहं
सद्यो दीपनपाचनो रुचिकरोनिःशेषगुल्मापहः ।
कासश्वासबलासपीनसमरुत्पित्तार्तिमत्यन्तिकं
वृष्यं पुष्टिकरं समस्तगदहृद्योगेन संयोजितम् ॥ इति योगः ।

२२ अध्याये ११३ श्लोकात्परम्

तैलं लाक्षादिकं नाम सर्वामयविनाशनम् ।
चन्दनं सारिवा लोध्रं मृद्वीकाशर्करान्वितम् ॥
क्वाथं कृत्वा प्रदातव्यं गर्भिण्यां ज्वरशान्तये ॥
ह्रीवेल्लारलुरक्तचन्दनबलाधान्यार्कवत्सादनी
मुस्तोशीरयवासपर्पटवृषाक्वाथं पिबेद्गर्भिणी ।
नानावर्णरुजातिसारकगदे रक्तस्रुतौ वा ज्वरे
योगोऽयं मुनिभिः पुरा निगदितः सूत्यामयेषूत्तमः ॥

२२ अध्याये ११८ श्लोकात्परम्

नागरस्य पलान्यष्टौ घृतस्य पलविंशतिः ।
क्षीराढकेन संयुक्तं खण्डस्यार्धपलं तथा ॥
शताह्वाजीरकव्योषत्रिसुगन्धियवानिका ।
कारवीमिशिचव्याग्निमुस्तानां च पलं पलम् ॥
लेहीभूतमिदं सर्वं घृतभाण्डे निधापयेत् ।
तं यथाग्निबलं खादेत्प्रसूताश्च विशेषतः ॥
तद्वर्ण्यं बल्यमायुष्यं वलीपलितनाशनम् ।
वयसः स्थापनं ह्येतदग्निवृद्धिकरं परम् ॥
आमवातप्रशमनं सौभाग्यकरमुत्तमम् ।
मक्कलशूलशमनं सूतिकारोगनाशनम् ॥

अन्यत्सर्वेष्वादर्शपुस्तकेषु समानम् ।

---

# अथ रसरत्नसमुच्चयस्य सूची ।

श्रीः

ॐ तत्सद्ब्रह्मणे नमः ।

# अथ रसरत्नसमुच्चयः ।

## रसोत्पत्तिर्नाम प्रथमोऽध्यायः ।

यस्याऽऽनन्दभवेन मङ्गलकलासंभावितेन स्फुर-
द्धाम्ना सिद्धरसामृतेन करुणावीक्षासुधासिन्धुना ।
भक्तानां प्रभवप्रसंहृतिजरारोगादिरोगाः क्षणा-
च्छाम्यन्ति यान्ति जगत्प्रधानभिषजे तस्मै परस्मै नमः ॥ १ ॥
आदिमश्चन्द्रसेनश्च लङ्केशश्च विशारदः ।
कपाली मत्तमाण्डव्यौ भास्करः शूरसेनकः ॥ २ ॥
रत्नकोशश्च शंभुश्च सात्त्विको नरवाहनः ।
इन्द्रदो गोमुखश्चैव कम्बलिर्व्याडिरेव च ॥ ३ ॥
नागार्जुनः सुरानन्दो नागबोधिर्यशोधनः ।
खण्डः कापालिको ब्रह्मा गोविन्दो लम्पको हरिः ॥ ४ ॥
सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः ।
रसाङ्कुशो भैरवश्च नन्दी स्वच्छन्दभैरवः ॥ ५ ॥
मन्थानभैरवश्चैव काकचण्डीश्वरस्तथा ।
वासुदेव ऋषिः शृङ्गः क्रियातन्त्रसमुच्चयी ॥ ६ ॥
रसेन्द्रतिलको योगी भालुकी मैथिलाह्वयः ।
महादेवो नरेन्द्रश्च वासुदेवो हरीश्वरः ॥ ७ ॥

१ ग. घ. °भाविते । ङ. °भाजेन । ञ. °भाविते°। २ क. ख. ग. घ. छ. ट. ठ. आगम°। [ आदौ भवान्यादिभ्यो नागाऽऽदिरेशो महेश इति तत्पर्ये । किंत्वाऽऽदिमशब्देन प्रथमरसतन्त्रप्रणेता कश्चिद्रस्य इति प्रतिभाति । यथा वर्द्धनः पुनः सुधुरः । आगमस्य रसतन्त्रप्रणेतृत्वकल्पनाकरणं निर्मूलमेव । एवं आगमस्य प्रसिद्धत्वं नात्र एव । ब्रह्मणोऽप्यागमस्य प्रकाशकत्वम् । सत्वायुर्वेदसूत्रम् ] ३ क.ख.घ. °रः सुर°। ग. घ. छ. ट. ठ. °रः सूर°। ४ ङ. छ. °लघेशश्च । ५ क. ख. ग. घ. °श्च शंभो । ङ. °श्च सात्त्विको । [ नवैक इति पाठेन रसतन्त्रप्रणेतृणां सप्तविंशतिसंख्या परिपूर्णा न भवति । ] ६ ङ. कांपलो आदि°। ७ क. ख. ग. घ. °व्याडिरि°। ८ ग. घ. लम्बको ञ. लम्पगो । ९ छ. °कलम्बी । १० ग. घ. कृष्णशृङ्गः । ११ ख. °की मैथिला°। १२ छ. रत्नाकरहरीश्वरी ॥ ७॥

एतेषां क्रियतेऽन्येषां तन्त्राण्यालोक्य संग्रहः।
रसानां[1]मथ सिद्धानां चिकित्सार्थोपयोगिनाम् ॥ ८ ॥
सूनुना [2]सिंहगुप्तस्य रसरत्नसमुच्चयः।
रसोपरसलो[3]हानि यन्त्रादिकरणानि च ॥ ९ ॥
शुद्ध्यर्थमपि लोहानां तन्त्रादिकरणानि च।
शुद्धिः सत्त्वं द्रुतिर्भस्मकरणं च प्रवक्ष्यते ॥ १० ॥
अस्ति नीहारनिलयो महानुत्तरदिङ्मुखे।
उत्तुङ्गशृङ्गसंघातलङ्घिताभ्रो महीधरः ॥ ११ ॥
विश्रामाय वियन्मार्गविलङ्घनघनश्रमः।
अवतीर्ण इव क्षोण्यां शरदम्बुमुचां गणः ॥ १२ ॥
राशिराशीविषाधीशफणाफलकरोचिषाम्।
भित्त्वा भुवमिवोत्तीर्णो यो विभाति भृशोन्नतः ॥ १३ ॥
ज्वलदौषधयो यस्य नितम्बमणिभूमयः।
नक्तमुद्दामतडितामनुकुर्वन्ति वार्मुचाम् ॥ १४ ॥
कटके संचरन्तीनां यस्य किन्नरयोषिताम्।
पादेषु धातुरागेण लाक्षाकृत्यमनुष्ठितम् ॥ १५ ॥
[4]अवतंसितशीतांशुराच्छादितदिगम्बरः।
यो गुहाधिगतो लोकैर्गिरीश इति गीयते ॥ १६ ॥
निमीलितदृशो नित्यं मुनयो यस्य सानुषु।
प्रत्यक्षयन्ति गिरिशमवा[5]ङ्मनसगोचरम् ॥ १७ ॥
शिलातलप्रतिहतैर्यस्य निर्झरशीकरैः।
अहन्यपि निरीक्षन्ते यक्षास्ताराङ्कितं नभः ॥ १८ ॥
नीहारपवनोद्रेकनिःसहा यत्र पूरुषाः।
निजस्त्रीणां निषेवन्ते कुचोष्माणं निरन्तरम् ॥ १९ ॥
संचरन् कटके यस्य निदाघेऽपि दिवाकरः।
उद्दामहिमरुद्धोष्मा न शीतांशोर्विभिद्यते ॥ २० ॥
गुहागृहेषु कस्तूरीमृगनाभिसुगन्धिषु।
गायन्ति यत्र किन्नर्यो गौरीपरिणयोत्सवम् ॥ २१ ॥
चकास्ति तत्र जगतामादिदेवो महेश्वरः।
रसात्मना जगत्त्रातुं जातो यस्मान्महारसः ॥ २२ ॥

१ ग. °नामामयघ्नानां। २ घ. संघगुप्तस्य। ३ क. °हानां य°। ४ ख. आव°। ५ छ. °वाङ्मान°।

शताश्वमेधेन कृतेन पुण्यं गोकोटिभिः स्वर्णसहस्रदानात्।
नृणां भवेत्सूतकदर्शनेन यत्सर्वतीर्थेषु कृताभिषेकात्॥ २३॥
विधाय रसलिङ्गं यो भक्तियुक्तः समर्चयेत्।
जगत्त्रितयलिङ्गानां पूजाफलमवाप्नुयात्॥ २४॥
भक्षणं स्पर्शनं दानं ध्यानं च परिपूजनम्।
पञ्चधा रसपूजोक्ता महापातकनाशिनी॥ २५॥
हन्ति भक्षणमात्रेण पूर्वजन्माघसंभवम्।
रोगसंघमशेषाणां नराणां नात्र संशयः॥ २६॥
पूर्वजन्मकृतं पापं सद्यो नश्यति देहिनाम्।
सुगन्धपिष्टसूतेन यदि शंभुर्विलेपितः॥ २७॥
अभ्रकं मुष्टिमात्रं यो रसस्य परिजारयेत्।
शतक्रतुफलं तस्य भवेदित्यब्रवीच्छिवः॥ २८॥
यश्च निन्दति सूतेन्द्रं शंभोस्तेजः परात्परम्।
स पतेन्नरके घोरे यावत्कल्पविकल्पना॥ २९॥
रोगिभ्यो यो रसं दत्ते शुद्धिपाकसमन्वितम्।
तुलादानाश्वमेधानां फलं प्राप्नोति शाश्वतम्॥ ३०॥
सिद्धे रसे करिष्यामि निर्दारिद्र्यमिदं जगत्।
रसध्यानमिदं प्रोक्तं ब्रह्महत्यादिपापनुत्॥ ३१॥
अष्टभागो हि सूतस्य नैवेद्यं परिकीर्तितम्।
रसस्यैतदर्चनं कृत्वा प्राप्नुयात्क्रतुजं फलम्॥ ३२॥
उदरे संस्थिते सूते यस्योत्क्रामति जीवितम्।
स मुक्तो दुष्कृताद्रोगात्प्रयाति परमं पदम्॥ ३३॥
मूर्छित्वा हरति रुजं बन्धनमनुभूय मुक्तिदो भवति।
अमरीकरोति हि मृतः कोऽन्यः करुणाकरः सूतात्॥ ३४॥
सुरगुरुगोद्विजहिंसापापकलापोद्भवं किलासाख्यम्।
श्वित्रं तदपि च शमयति यस्तस्मात्कः पवित्रतरः सूतात्॥ ३५॥
रसबन्ध एव धन्यः प्रारम्भे यस्य सततमिति करुणा।
सिध्यति रसे करिष्ये महीमिमां निर्जरामरणाम्॥ ३६॥

१ ख. °[illegible]°। २ ङ. °[illegible]°। ३ ग. दृष्टिमात्रं। ४ ख. °[illegible]°। ५ ग. °[illegible]°। ६ ङ. °[illegible]°। ७ ङ. °[illegible]° ८ ङ. °[illegible]°।

सुकृतफलं तावदिदं सुकुले यज्जन्म धीश्च तत्रापि ।
साऽपि च सकलमहीतलतुलनफला भूतलं च सुविधेयम् ॥३७॥
भूतलविधेयतायाः फलमर्थास्ते च विविधभोगफलाः ।
भोगाश्च सन्ति शरीरे तदनित्यमतो वृथा सकलम् ॥ ३८ ॥
इति धनशरीरभोगान्मत्वाऽनित्यान्सदैव यतनीयम् ।
मुक्तौ साच ज्ञानात्तच्चाभ्यासात्स च स्थिरे देहे ॥ ३९ ॥
तत्स्थैर्ये न समर्थं रसायनं किमपि मूललोहादि ।
स्वयमस्थिरस्वभावं दाह्यं क्लेद्यं च शोष्यं च ॥ ४० ॥
काष्ठौषध्यो नागे नागो वङ्गेऽथ वङ्गमपि शुल्बे ।
शुल्बं तारे तारं कनके कनकं च लीयते सूते ॥ ४१ ॥
अमृतत्वं हि भजन्ते हरमूर्तौ योगिनो यथा लीनाः ।
तद्वत्कवलितगगने रसराजे हेमलोहाद्याः ॥ ४२ ॥
परमात्मनीव सततं भवति लयो यत्र सर्वसत्त्वानाम् ।
एकोऽसौ रसराजः शरीरमजरामरं कुरुते ॥ ४३ ॥
स्थिरदेहेऽभ्यासवशात्प्राप्य ज्ञानं गुणाष्टकोपेतम् ।
प्राप्नोति ब्रह्मपदं न पुनर्भववासजन्मदुःखानि ॥ ४४ ॥
एकांशेन जगद्युगपदवष्टभ्यावस्थितं परं ज्योतिः ।
पादैस्त्रिभिस्तदमृतं सुलभं न विरक्तिमात्रेण ॥ ४५ ॥
न हि देहेन कथंचिद्व्याधिजरामरणदुःखविधुरेण ।
क्षणभङ्गुरेण सूक्ष्मं तद्ब्रह्मोपासितुं शक्यम् ॥ ४६ ॥
नामापि देहसिद्धेः को गृह्णीयाद्विना शरीरेण ।
यद्योगगम्यममलं मनसोऽपि न गोचरं तत्त्वम् ॥ ४७ ॥
यज्ञाद्दानात्तपसो वेदाध्ययनाद्दमात्सदाचारात् ।
अत्यन्तभूयसी किल योगवशादात्मसंवित्तिः ॥ ४८ ॥
भ्रूयुगमध्यगतं यच्छिखिविद्युत्सूर्यवज्जगद्भासि ।
केषांचित्पुण्यदृशामुन्मीलति चिन्मयं परं ज्योतिः ॥ ४९ ॥
परमानन्दैकरसं परमं ज्योतिःस्वभावमविकल्पम् ।
विगलितसकलक्लेशं ज्ञेयं शान्तं स्वसंवेद्यम् ॥ ५० ॥

---

जगद्भातीत्ययं पाठः सर्वेष्वपि पुस्तकेषु

---

१ ग. °सौम्यं । २ ख. °नर्वनवासदुःखेन ॥४४॥ ३ ग. °सदुःखेन ॥ ४४ ॥ ४ ग. °योगिग° । ५ ग. ठ. °लयति ।

तस्मिन्नाधाय मनः स्फुरदखिलं चिन्मयं जगत्पश्यन् ।
उत्सन्नकर्मबन्धो ब्रह्मत्वमिहैव चाऽऽप्नोति ॥ ५१ ॥
रागद्वेषविमुक्ताः सत्याचारा मृषारहिताः ।
सर्वत्र निर्विशेषा भवन्ति चिद्ब्रह्मसंस्पर्शात् ॥ ५२ ॥
तिष्ठन्त्यणिमादियुता विलसद्देहाः सदोदितानन्दाः ।
ब्रह्मस्वभावममृतं संप्राप्यैव कृतकृत्याः ॥ ५३ ॥
आयतनं विद्यानां मूलं धर्मार्थकाममोक्षाणाम् ।
श्रेयः परं किमन्यच्छरीरमजरामरं विहायैकम् ॥ ५४ ॥
प्रत्यक्षेण प्रमाणेन यो न जानाति सूतकम् ।
अदृष्टविग्रहं देवं कथं ज्ञास्यति चिन्मयम् ॥ ५५ ॥
यज्जरया जर्जरितं कासश्वासादिदुःखविवशं च ।
योग्यं तन्न समाधौ प्रतिहतबुद्धीन्द्रियप्रसरम् ॥ ५६ ॥
बालः षोडशवर्षो विषयरसास्वादलम्पटः परतः ।
*यातविवेको वृद्धो मर्त्यः कथमाप्नुयान्मुक्तिम् ॥ ५७ ॥
अस्मिन्नेव शरीरे येषां परमात्मनो न संवेदः ।
देहत्यागादूर्ध्वं तेषां तद्ब्रह्म दूरतरम् ॥ ५८ ॥
ब्रह्मादयो यतन्ते तस्मिन्दिव्यां तनुं समाश्रित्य ।
जीवन्मुक्ताश्चान्ये कल्पान्तस्थायिनो मुनयः ॥ ५९ ॥
तस्माज्जीवन्मुक्तिं समीहमानेन योगिना प्रथमम् ।
दिव्या तनुर्विधेया हरगौरीसृष्टिसंयोगात् ॥ ६० ॥
शैलेऽस्मिञ्शिवयोः प्रीत्या परस्परंजिगीषया ।
संप्रवृत्ते च संभोगे त्रिलोकीक्षोभकारिणि ॥ ६१ ॥
विनिवारयितुं वह्निः संभोगं प्रेषितः सुरैः ।
काङ्क्षमाणैस्तयोः पुत्रं तारकासुरमारकम् ॥ ६२ ॥
कपोतरूपिणं प्राप्तं हिमवत्कन्दरेऽनलम् ।
अपक्षिभावसंक्षुब्धं स्मरलीलाविलोकिनम् ॥ ६३ ॥
तं दृष्ट्वा लज्जितः शंभुर्विरतः सुरतात्तदा ।
प्रच्युतश्चरमो धातुर्गृहीतः शूलपाणिना ॥ ६४ ॥

---

* ज्ञातविवेकः । सर्वेष्वप्यादर्शपुस्तकेष्वयमेव पाठो दृश्यते ।

---

१ ख. उत्स्विन्न°। २ क. ख. ग. ङ. ट. °देहा मुदा सदानन्दाः । ३ छ. °गे त्रैलोक्यक्षोभका-रिणी । ४ छ. संयोगं । ५ ग. न. °श्च रसो धा°।

प्रक्षिप्तो वदने वह्नेर्गङ्गायामपि सोऽपतत् ।
बहिः क्षिप्तस्तया सोऽपि परिदन्दह्यमानया ॥ ६५ ॥
संजातास्तन्मलोधानाद्धातवः सिद्धिहेतवः ।
यावदग्निमुखाद्रेतो न्यपतद्भूरिसारतः ॥ ६६ ॥
शतयोजननिम्नांस्तान्कृत्वा कूपांस्तु पञ्च च ।
तदाप्रभृति कूपस्थं तद्रेतः पञ्चधाऽभवत् ॥ ६७ ॥
रसो रसेन्द्रः सूतश्च पारदो मिश्रकस्तथा ।
इति पञ्चविधो जातः क्षेत्रभेदेन शंभुजः ॥ ६८ ॥
रसो रक्तो विनिर्मुक्तः सर्वदोषै रसायनः ।
संजातास्त्रिदशास्तेन नीरुजा निर्जरामराः ॥ ६९ ॥
रसेन्द्रो दोषनिर्मुक्तः श्यावो रूक्षोऽतिचञ्चलः ।
रसायिनोऽभवंस्तेन नागा मृत्युजरोज्झिताः ॥ ७० ॥
देवैर्नागैश्च तौ कूपौ पूरितौ मृद्भिरश्मभिः ।
तदाप्रभृति लोकानां तौ जातावतिदुर्लभौ ॥ ७१ ॥
ईषत्पीतश्च रूक्षाङ्गो दोषयुक्तश्च सूतकः ।
दशाष्टसंस्कृतैः सिद्धो देहं लोहं करोति सः ॥ ७२ ॥
अथान्यकूपजः कोऽपि स चलः श्वेतवर्णवान् ।
पारदो विविधैर्योगैः सर्वरोगहरः स हि ॥ ७३ ॥
मयूरचन्द्रिकाच्छायः स रसो मिश्रको मतः ।
सोऽप्यष्टादशसंस्कारयुक्तश्चातीव सिद्धिदः ॥ ७४ ॥
त्रयः सूतादयः सूताः सर्वसिद्धिकरा अपि ।
निजकर्मविनिर्माणैः शक्तिमन्तोऽतिमात्रया ॥ ७५ ॥
एतां रससमुत्पत्तिं यो जानाति स धार्मिकः ।
आयुरारोग्यसंतानं रससिद्धिं च विन्दति ॥ ७६ ॥
रसनात्सर्वधातूनां रस इत्यभिधीयते ।
जरारुङ्मृत्युनाशाय रस्यते वा रसो मतः ॥ ७७ ॥
रसोपरसराजत्वाद्रसेन्द्र इति कीर्तितः ।
देहलोहमयीं सिद्धिं सूते सूतस्ततः स्मृतः ॥ ७८ ॥

---

१ ख. °लान्नाना धात°। २ ख. सिद्धहे°। ३ ग. ह्यपतद्भुवि भारतः ॥ ६६ ॥ ४ क. ख. °रिभार°। ५ छ. °तिनिर्मलः। ६ ग. सोऽपि चञ्चलः। ७ म. च. ट. °र्वकर्मक°। ८ ङ. °मोणाः श°।

रोगपङ्काब्धिमग्नानां पारदानाच्च पारदः।
सर्वधातुगतं तेजोमिश्रितं यत्र तिष्ठति ॥ ७९ ॥
तस्मात्स मिश्रकः प्रोक्तो नानारूपफलप्रदः।
एवंभूतस्य सूतस्य मर्त्यमृत्युगदच्छिदः ॥
प्रभावान्मानुषा जाता देवतुल्यबलायुषः ॥ ८० ॥
तान्दृष्ट्वाऽभ्यर्थितो रुद्रः शक्रेण तदनन्तरम्।
दोषैश्च कञ्चुकाभिश्च रसराजो नियोजितः ॥ ८१ ॥
तदाप्रभृति सूतोऽसौ नैव सिध्यत्यसंस्कृतः।
जलगो जलरूपेण त्वरितो हंसगो भवेत् ॥ ८२ ॥
मलगो मलरूपेण सधूमो धूमगो भवेत्।
अन्या जीवगतिर्दैवी जीवोऽण्डादिव निष्क्रमेत् ॥ ८३ ॥
स तांश्च जीवयेज्जीवांस्तेन जीवो रसः स्मृतः।
चतस्रो गतयो दृश्या अदृश्या पञ्चमी गतिः ॥ ८४ ॥
मन्त्रध्यानादिना तस्य रुध्यते पञ्चमी गतिः ॥ ८५ ॥
इति भिन्नगतित्वाच्च सूतराज्यस्य दुर्लभः।
संस्कारस्तस्य भिषजा निपुणेन तु रक्षयेत् ॥ ८६ ॥
प्रथमे रजसि स्नातां हयारूढां स्वलंकृताम्।
वीक्षमाणां वधूं दृष्ट्वा जिघृक्षुः कूपगो रसः ॥ ८७ ॥
उद्गच्छति जवात्साऽपि तं दृष्ट्वा याति वेगतः।
अनुगच्छति तां सूतः सीमानं योजनोन्मितम् ॥ ८८ ॥
प्रत्यायाति ततः कूपं वेगतः शिवसंभवः।
मार्गनिर्मितगर्तेषु स्थितं गृह्णन्ति पारदम्।
पतितो दरदे देशे गौरवाद्वह्निवक्त्रतः ॥ ८९ ॥
स रसो भूतले लीनस्तत्तद्देशनिवासिनः।
तां मृदं पातनायन्त्रे क्षिप्त्वा सूतं हरन्ति च ॥ ९० ॥

इति श्रीविंहपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य
कृतौ रसरत्नसमुच्चये रसोत्पत्तिर्नाम
प्रथमोऽध्यायः ॥ १ ॥

---

१ ग. कश्चेम°। २ ग. °रुवाद्धि सु°। ३ ङ. °लभाः। ४ ङ. °स्कारास्त°। ५ ङ. कार्येण। ग. निपुणेन तु लक्षणेन। ६ क. ख. मृत्स्नानि।

## अथ द्वितीयोऽध्यायः।

### [ महारसाः। ]

अभ्रवैक्रान्तमाक्षीकविमलाद्रिजसस्यकम्।
चपलो रसकश्चेति ज्ञात्वाऽष्टौ संग्रहेद्रसान्॥ १॥
[ देव्या रजो भवेद्गन्धो धातुः शुक्रं तथाऽभ्रकम्। इति क्षेपकः ]॥ २॥
गौरीतेजः परममृतं वातपित्तक्षयघ्नं
प्रज्ञाबोधि प्रशमितरुजं वृष्यमायुष्यमग्र्यम्।
बल्यं स्निग्धं रुचिदमकफं दीपनं शीतवीर्यं
तत्तद्योगैः सकलगदहृद्व्योम सूतेन्द्रबन्धि॥ ३॥
राजहस्तादधस्ताद्यत्समानीतं घनं खनेः।
भवेत्तदुक्तफलदं निःसत्त्वं निष्फलं परम्॥ ४॥
पिनाकं नागमण्डूकं वज्रमित्यभ्रकं मतम्।
श्वेतादिवर्णभेदेन प्रत्येकं तच्चतुर्विधम्॥ ५॥
पिनाकं पावकोत्तप्तं विमुञ्चति दलोच्चयम्।
तत्सेवितं मलं बद्ध्वा मारयत्येव मानवम्॥ ६॥
नागाभ्रं नागवत्कुर्याद्ध्वनिं पावकसंस्थितम्।
तद्भुक्तं कुरुते कुष्ठं मण्डलाख्यं न संशयः॥ ७॥
उत्प्लुत्योत्प्लुत्य मण्डूकं ध्मातं पतति चाभ्रकम्।
तत्कुर्यादश्मरीरोगमसाध्यं शस्त्रतोऽन्यथा॥ ८॥
वज्राभ्रं वह्निसंतप्तं निर्मुक्ताशेषवैकृतम्।
देहलोहकरं तच्च सर्वरोगहरं परम्॥ ९॥
श्वेतं रक्तं च पीतं च कृष्णमेवं चतुर्विधम्।
श्वेतं श्वेतक्रियासूक्तं रक्ताभं रक्तकर्मणि॥
पीताभमभ्रकं यत्तु श्रेष्ठं तत्पीतकर्मणि॥ १०॥
चतुर्विधं वरं व्योम यद्यप्युक्तं रसायने।
तथाऽपि कृष्णवर्णाभ्रं कोटिकोटिगुणाधिकम्॥ ११॥
स्निग्धं पृथुदलं वर्णसंयुक्तं भारतोऽधिकम्।
सुखनिर्मोच्यपत्रं च तदभ्रं शस्तमीरितम्॥ १२॥
सचन्द्रिकं च किट्टाभं व्योम न ग्रासयेद्रसः।
ग्रसितश्च नियोज्योऽसौ लोहे चैव रसायने॥ १३॥

१ ग. घनैः। छ. जनैः। २ छ. °वके तप्तं। ३ ज. मलान्बद्ध्वा। ४ ङ. °ध्यं शास्त्र°। ५ छ. °रिभा°लो°। ६ क. तत्तु ७ ज. पृथग्दलं। ८ ग. °निर्मोचप°। ९ ग. °त्रं यत्तद°।

निश्चन्द्रिकं मृतं व्योम सेव्यं सर्वगदेषु च।
सेवितं चन्द्रसंयुक्तं मेहं मन्दानलं चरेत् ॥ १४ ॥
यैरुक्तं युक्तिनिर्मुक्तैः पत्राभ्रकरसायनम्।
तैर्दिष्टं कालकूटाख्यं विषं जीवनहेतवे ॥ १५ ॥
सत्त्वार्थं सेवनार्थं च योजयेच्छोधिताभ्रकम्।
अन्यथा त्वगुणं कृत्वा विकरोत्येव निश्चितम् ॥ १६ ॥
प्रतप्तं सप्तवाराणि निक्षिप्तं काञ्जिकेऽभ्रकम्।
निर्दोषं जायते नूनं प्रक्षिप्तं वाऽपि गोजले ॥ १७ ॥
त्रिफलाक्कथिते चापि गवां दुग्धे विशेषतः।
ततो धान्याभ्रकं कृत्वा पिष्ट्वा मत्स्याक्षिकारसैः ॥ १८ ॥
चक्रीं कृत्वा विशोष्याथ पुटेदर्धेभके पुटे।
पुटेदेवं हि षड्वारं पौनर्नवरसैः सह ॥ १९ ॥
कलांशटङ्कणेनापि संमर्द्य कृतचक्रिकम्।
अर्धेभाख्यपुटैस्तद्वत्सप्तवारं पुटेत्खलु ॥ २० ॥
एवं वासारसेनापि तण्डुलीयरसेन च।
प्रपुटेत्सप्तवाराणि पूर्वप्रोक्तविधानतः ॥ २१ ॥
एवं सिद्धं घनं सर्वयोगेषु विनियोजयेत् ॥ २२ ॥
चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके।
निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ॥ २३ ॥
धान्याभ्रं कासमर्दस्य रसेन परिमर्दितम्।
पुटितं दशवारेण म्रियते नात्र संशयः ॥ २४ ॥
तद्वन्मुस्तारसेनापि तन्दुलीयरसेन च।
पीतामलकसौभाग्यपिष्टं चक्रीकृताभ्रकम् ॥ २५ ॥
पुटितं षष्टिवाराणि सिन्दूराभं प्रजायते।
क्षयाद्यखिलरोगघ्नं भवेद्रोगानुपानतः ॥ २६ ॥
वटमूलत्वचः क्काथैस्ताम्बूलीपत्रसारतः।
वासामत्स्याक्षिकाभ्यां वा मीनाक्ष्या सकाटिल्लया ॥ २७ ॥
पयसा वटवृक्षस्य मर्दितं पुटितं घनम्।
भवेद्द्विशतिवारेण सिन्दूरसदृशप्रभम् ॥ २८ ॥

१ क. °मोदरं। २ ख. वाऽपि। ३ ख. °षं द्विष°। ४ क. पुनर्नित्यं हतं म°। ५ क. °णार्थं प्र°।
६ ख. °वाराणि मि°। ७ क. ग. °दृशं घनम्।

पादांशटङ्कणोपेतं मुसलीरसमर्दितम् ।
रुन्ध्यात्कोष्ठ्यां दृढं ध्मातं सत्त्वरूपं भवेद्धनम् ॥ २९ ॥
कासमर्दघनध्वानवासानां च पुनर्भुवः ।
मत्स्याक्ष्याः काण्डवल्ल्याश्च हंसपाद्या रसैः पृथक् ॥ ३० ॥
पिष्ट्वा पिष्ट्वा प्रयत्नेन शोषयेद्धर्मयोगतः ।
पलं गोधूमचूर्णस्य क्षुद्रमत्स्याश्च टङ्कणम् ॥ ३१ ॥
प्रत्येकमष्टमांशेन दत्वा दत्वा विमर्दयेत् ।
मर्दने मर्दने सम्यक्शोषयेद्रविरश्मिभिः ॥ ३२ ॥
पञ्चाजं पञ्चगव्यं वा पञ्चमाहिषमेव च[3] ।
क्षिप्त्वा गोलान्प्रकुर्वीत किंचित्तिन्दुकतोऽधिकान् ॥ ३३ ॥
पयो दधि घृतं मूत्रं सविट्कं चाजमुच्यते ।
अधःपातनकोष्ठ्यां हि ध्मात्वा सत्त्वं निपातयेत् ॥ ३४ ॥
कोष्ठ्यां किट्टं समाहृत्य विचूर्ण्य रवकान्हरेत् ।
तत्किट्टं स्वल्पटङ्केन गोमयेन विमर्द्य च ॥ ३५ ॥
गोलान्विधाय संशोष्य घर्मे भूयोऽपि पूर्ववत् ।
भूयः किट्टं समाहृत्य मृदित्वा सत्त्वमाहरेत् ॥ ३६ ॥
अथ सत्त्वकणांस्तांस्तु क्वाथयित्वाऽम्लकाञ्जिकैः ।
शोधनीयगणोपेतं मूषामध्ये निरुध्य च ॥ ३७ ॥
सम्यग्द्रुतं समाहृत्य द्विवारं प्रधमेद्धनम् ।
इति शुद्धं भवेत्सत्त्वं योज्यं रसरसायने ॥ ३८ ॥
मधुतैलवसाज्येषु द्रावितं परिवापितम् ।
मृदु स्याद्दशवारेण सत्त्वं लोहादिकं खरम् ॥ ३९ ॥
पट्टचूर्णं विधायाथ गोघृतेन परिप्लुतम् ।
भर्जयेत्सप्तवाराणि चुल्लीसंस्थितखर्परे ॥ ४० ॥
अग्निवर्णं भवेद्यावद्वारं वारं विचूर्णयेत् ।
चूर्णं क्षिप्त्वा दहेद्यावत्तावद्वा भर्जनं चरेत् ॥ ४१ ॥
ततः सगन्धकं पिष्ट्वा वटमूलकषायतः ।
पुटेद्विंशतिर्वारेण[12] वाराहेण पुटेन हि ॥ ४२ ॥

---

१ ख. रुद्ध्वा क्रौश्यां दृ°। २ ङ. घनाधान्यवा°। ज. घनच्छिन्नवा°। ३ ख. वा। ४ क. ख. °ष्य धमेद्भूयोऽ°। ५ ग. °यगुणो°। ६ ख. °म्यग्दत्तं स°। ७ ग. °मेत्ततः। ङ. °मेत्पुनः। ८ ग. °रि-भावित°। ९ ग. °दिवतपर°। १० ग. पट्टचू°। छ. पटचू°। ११ क. चुल्लिसं°। १२ °वाराणि वा°।

पुनर्विंशतिवाराणि त्रिफलोत्थकषायतः ।
त्रिफलामुण्डिकाभृङ्गपत्रैपथ्याक्षमूलकैः ॥ ४३ ॥
भावयित्वा प्रयोक्तव्यं सर्वरोगेषु मात्रया ।
सत्त्वाभ्रात्किंचिदपरं निर्विकारं गुणाधिकम् ॥ ४४ ॥
एवं चेच्छतवाराणि पुटपाकेन साधितम् ।
गुणवज्जायतेऽत्यर्थं परं पाचनदीपनम् ॥ ४५ ॥
गन्धर्वपत्रतोयेन गुडेन सह भावितम् ।
अधोर्ध्वं वटपत्राणि निश्चन्द्रं त्रिपुटैः खगम् ॥ ४६ ॥
क्षुधं करोति चात्यर्थं गुञ्जार्धमितिसेवया ।
तत्तद्रोगहरैर्योगैः सर्वरोगहरं परम् ॥ ४७ ॥
सत्त्वस्य गोलकं ध्मातं सत्यसंयुक्तकाञ्जिके ।
निर्वाप्य तत्क्षणेनैव कुट्टयेल्लोहधारया ॥ ४८ ॥
संप्रताप्य घनस्थूलकणान्क्षिप्त्वाऽथ काञ्जिके ।
तत्क्षणेन समाहृत्य कुट्टयित्वा रजश्चरेत् ॥ ४९ ॥
गोघृतेन च तच्चूर्णं भर्जयेत्पूर्ववत्त्रिधा ।
धात्रीफलरसैस्तद्वद्धात्रीपत्ररसेन वा ॥ ५० ॥
भर्जने भर्जने कार्यं शिलापट्टेन पेषणम् ।
ततः पुनर्नवावासारसैः काञ्जिकमिश्रितैः ॥ ५१ ॥
प्रपुटेद्दशवाराणि दशवाराणि गन्धकैः ।
एवं संशोधितं व्योमसत्त्वं सर्वगुणोत्तरम् ॥ ५२ ॥
यथेष्टं विनियोक्तव्यं जारणे च रसायने ।
क्रुतयो नैव निर्दिष्टाः शास्त्रे दृष्टा अपि हठम् ॥
विना शंभोः प्रसादेन न सिध्यन्ति कदाचन ॥ ५३ ॥

वेल्लव्योपसमन्वितं घृतयुतं वल्लोन्मितं सेवितं
दिव्याभ्रं क्षयपाण्डुरुग्ग्रहणिकाशूलामकुष्ठामयम् ।
जैत्रं श्वासगदं प्रमेहमरुचिं कासामयं दुर्धरं
मन्दाग्निं जठरव्यथां विजयते योगैरशेषामयान् ॥ ५४ ॥

**अथ वैक्रान्तः**—अष्टास्रश्चाष्टफलकः षट्कोणो मसृणो गुरुः ।
शुद्धमिश्रितवर्णैश्च युक्तो वैक्रान्त उच्यते ॥ ५५ ॥

---

१ ज. °त्रासामम । २ ख. °क्षमूलकैः ॥ ४३ ॥ ३ क. °क्षुधां । ४ ख. °मितसे° । ग. °मि- तमिवनात । ५ ग. °निः । ६ ख. [illegible] । ७ क.इ.ड.इ. धुवम् । ८ ख. °शूलं च कु° । ९ ग. °मकोष्ठामय- न् । १० ज. °मयान् । ११ ख. अष्टांशा° । ज. कुष्ठं पानमपित्तमेह° ।

श्वेतो रक्तश्च पीतश्च नीलः पारापतच्छविः ।
श्यामलः कृष्णवर्णश्च कर्बुरश्चाष्टधा हि सः ॥ ५६ ॥
आयुःप्रदश्च बलवर्णकरोऽतिवृष्यः
प्रज्ञाप्रदः सकलदोषगदापहारी ।
दीप्ताग्निकृत्पविसमानगुणस्तरस्वी
वैक्रान्तकः खलु वपुर्बललोहकारी ॥ ५७ ॥
रसायनेषु सर्वेषु पूर्वगण्यः प्रतापवान् ।
वज्रस्थाने नियोक्तव्यो वैक्रान्तः सर्वदोषहा ॥ ५८ ॥
[ग्रन्थान्तरे । दैत्येन्द्रो माहिषः सिद्धः सहदेवसमुद्भवः ।]
दुर्गा भगवती देवी तं शूलेन व्यमर्दयत् ॥ ५९ ॥
तस्य रक्तं तु पतितं यत्र यत्र स्थितं भुवि ।
तत्र तत्र तु वैक्रान्तं वज्राकारं महारसम् ॥ ६० ॥
विन्ध्यस्य दक्षिणे वाऽस्ति ह्युत्तरे वाऽस्ति सर्वतः ।
* विक्रन्तयति लोहानि तेन वैक्रान्तकः स्मृतः ॥ ६१ ॥
श्वेतः पीतस्तथा रक्तो नीलः पारावतप्रभः ।
मयूरकण्ठसदृशश्चान्यो मरकतप्रभः ॥ ६२ ॥
देहसिद्धिकरं कृष्णं पीते पीतं सिते सितम् ।
सर्वार्थसिद्धिदं रक्तं तथा मरकतप्रभम् ॥ ६३ ॥
शेषे द्वे निष्फले वर्ज्ये वैक्रान्तमिति सप्तधा ॥ ६४ ॥
**अथाऽऽहरणविधिः**—यत्र क्षेत्रे स्थितं चैव वैक्रान्तं तत्र भैरवम् ।
विनायकं च संपूज्य गृह्णीयाच्छुद्धमानसः ॥ ६५ ॥
वैक्रान्तो वज्रसदृशो देहलोहकरो मतः ।
विषघ्नो रसराजश्च ज्वरकुष्ठक्षयप्रणुत् ॥ ६६ ॥
वैक्रान्तकाः स्युस्त्रिदिनं विशुद्धाः संस्वेदिताः क्षारपटूनि दत्वा ।
अम्लेषु मूत्रेषु कुलत्थरम्भानीरेऽथवा कोद्रववारिपक्काः ॥ ६७ ॥
कुलत्थक्वाथसंस्विन्नो वैक्रान्तः परिशुध्यति ।
म्रियतेऽष्टपुटैर्गन्धनिम्बुकद्रवसंयुतः ॥ ६८ ॥
वैक्रान्तेषु च तप्तेषु हयमूत्रं विनिक्षिपेत् ।
पौनःपुन्येन वा कुर्याद्द्रवं दत्वा पुटं त्वनु ॥ ६९ ॥

*सर्वेष्वप्यादर्शपुस्तकेषु विकृन्तयति । विक्रन्तयति । विक्रान्तयतीति पाठत्रयं दृश्यते । किंतु विक्रामयतीति पाठान्तरकल्पनाकरणं साधीयः ।

१ क. °रावत° । २ क.. पूर्वं ग° । ३ ज. सर्वदेवसमुद्भवा । ४ ज. भागे । ५ ज. चास्ति । ६ क. °रबालस° । ७ ख. अष्टधा ॥ ६३ ॥ ८ ग. °ष्टगुणैर्ग° । ९ ज. °र्गन्धोनि° । १० ग. °र्याद्द्रावं । ११ ग. तनु ।

भस्मीभूतं तु वैक्रान्तं वज्रस्थाने नियोजयेत्।
मोक्षमोरटपालाशक्षारगोमूत्रभावितम्॥ ७० ॥
वज्रकन्दनिशाकल्कफलचूर्णसमन्वितम्।
तत्कल्कं टङ्कणं लाक्षाचूर्णं वैक्रान्तसंभवम्॥ ७१ ॥
नवसारसमायुक्तं मेषशृङ्गीद्रवान्वितम्।
पिण्डितं मूकमूषस्थं ध्मापितं च हठाग्निना॥ ७२ ॥
तत्रैव पतते सत्त्वं वैक्रान्तस्य न संशयः।
सत्त्वपातनयोगेन मर्दितश्च वटीकृतः।
मूषास्थो घटिकाध्मातो वैक्रान्तः सत्त्वमुत्सृजेत्॥ ७३ ॥
भस्मत्वं समुपागतो विकृतको हेम्ना मृतेनान्वितः
पादांशेन कणाज्यवेल्लसहितो गुञ्जामितः सेवितः।
यक्ष्माणं जरणं च पाण्डुगुदजं श्वासं च कासामयं।
दुष्टां च ग्रहणीमुरःक्षतमुखान्रोगाञ्जयेदेहकृत्॥ ७४ ॥
सूतभस्मार्धसंयुक्तं नीलवैक्रान्तभस्मकम्।
मृताभ्रसत्त्वमुभयोस्तुलितं परिमर्दितम्॥ ७५ ॥
क्षौद्राज्यसंयुतं प्रातर्गुञ्जामात्रं निषेवितम्।
निहन्ति सकलान्रोगान्दुर्जयानन्यभेषजैः॥
त्रिःसप्तदिवसैर्नॄणां गङ्गाम्भ इव पातकम्॥ ७६ ॥

**अथ माक्षिकम्**—सुवर्णशैलप्रभवो विष्णुना काञ्चनो रसः।
तापी किरातचीनेषु यवनेषु च निर्मितः॥ ७७ ॥
ताप्यः सूर्यांशुसंतप्तो माधवे मासि दृश्यते।
मधुरः काञ्चनाभासः साम्लो रजतसंनिभः॥ ७८ ॥
किंचित्कषायमधुरः शीतः पाके कटुर्लघुः।
तत्सेवनाज्जराव्याधिविषैर्न परिभूयते॥ ७९ ॥
माक्षिको द्विविधो हेममाक्षिकस्तारमाक्षिकः।
तत्राऽऽद्यं माक्षिकं कान्यकुब्जोत्थं स्वर्णसंनिभम्॥ ८० ॥
तपतीतीरसंभूतं पञ्चवर्णसुवर्णवत्।
पाषाणबहुलः प्रोक्तस्ताराख्योऽल्पगुणात्मकः॥ ८१ ॥

---

१ ख. शरानेण म°। २ ड. गुञ्जाग्मितः। ३ ङ. उदरं। ४ ख. °स्यभेष°। ५ ङ. त्रिस°। ६ ख. तापीकि°। ७ ग. शीतपाकः क°। घ. शीतपाकः क°। ८ ख. °बहुलः। ९ ख. °ख्योऽसौ गु°।

माक्षीकधातुः सकलामयघ्नः प्राणो रसेन्द्रस्य परं हि वृष्यः ।
दुर्मेलल्लोहद्वयमेलनश्च गुणोत्तरः सर्वरसायनाग्र्यः ॥ ८२ ॥
एरण्डतैललुङ्गाम्बुसिद्धं शुध्यति माक्षिकम् ।
सिद्धं वा कदलीकन्दतोयेन घटिकाद्वयम् ॥ ८३ ॥
तप्तं क्षिप्तं वराक्वाथे शुद्धिमायाति माक्षिकम् ।
मातुलुङ्गाम्बुगन्धाभ्यां पिष्टं मूषोदरे स्थितम् ॥ ८४ ॥
पञ्चक्रोडपुटैर्दग्धं म्रियते माक्षिकं खलु ।
एरण्डस्नेहगव्याज्यैर्मातुलुङ्गरसेन वा ॥ ८५ ॥
खर्परस्थं हृढं पक्कं जायते धातुसंनिभम् ।
एवं मृतं रसे योज्यं रसायनविधावपि ॥ ८६ ॥
त्रिंशांशनागसंयुक्तं क्षारैरम्लैश्च वर्तितम् ।
ध्मातं प्रकटमूषायां सत्त्वं मुञ्चति माक्षिकम् ॥ ८७ ॥
सप्तवारं परिद्राव्य क्षिप्तं निर्गुण्डिकारसे ।
माक्षीकसत्त्वसंमिश्रं नागं नश्यति निश्चितम् ॥ ८८ ॥
क्षौद्रगन्धर्वतैलाभ्यां गोमूत्रेण घृतेन च ।
कदलीकन्दसारेण भावितं माक्षिकं मुहुः ॥ ८९ ॥
मूषायां मुञ्चति ध्मातं सत्त्वं शुल्बनिभं मृदु ॥ ९० ॥
गुञ्जाबीजसमच्छायं द्रुतद्रावं च शीतलम् ।
ताप्यसत्त्वं विशुद्धं तद्देहलोहकरं परम् ॥ ९१ ॥
माक्षीकस[10]त्त्वेन रसेन्द्रपिष्टिं कृत्वा विलीने च बलिं निधाय ।
संमिश्र्य संमर्द्य च खल्वमध्ये निक्षिप्य सत्त्वं द्रुतिमभ्रकस्य[11]॥ ९२ ॥
विधाय गोलं लवणाख्ययन्त्रे पचेद्दिनार्धं मृदुवह्निना च ।
स्वतः सुशीतं परिचूर्ण्य सम्यग्वल्लोन्मितं व्योषविडङ्गयुक्तम् ॥ ९३ ॥
संसेवितं क्षौद्रयुतं निहन्ति जरां[12] सरोगां त्वपमृत्युमेव ।
दुःसाध्यरोगानपि सप्तवासरैर्नैतेन तुल्योऽस्ति सुधारसोऽपि ॥ ९४ ॥
एरण्डोत्थेन तैलेन गुञ्जाक्षौद्रं च टङ्कणम् ।
मर्दितं तस्य वापेन सत्त्वं माक्षीकजं द्रवेत् ॥ ९५ ॥

**अथ विमलः**—विमलस्त्रिविधः प्रोक्तो हेमाद्यस्तारपूर्वकः ।
तृतीयः कांस्यविमलस्तत्तत्कान्त्या स लक्ष्यते ॥ ९६ ॥

---

१ ख. °मेलकश्च । २ ज. चक्रकोटपु° । ३ ङ. °ब्रकोलपु° । ४ ख. च । ज. वै । ५ ख. मार्दित° । ६ ङ. °द्राव्य क्षि° । ७ ङ. °न्धकर्तै° । ८ क. °यं हत° । ९ ङ. °द्रावश्च सीतवत् । १० क. ख. °सत्त्वं च रसेन पि । ११ ङ. °मभ्रकस्य ॥ ९१ ॥ १२ ङ. ज्वरान्सरोगांस्त्वप° ।

वर्तुलः कोणसंयुक्तः स्निग्धश्च फलकान्वितः ।
मरुत्पित्तहरो वृष्यो विमलोऽतिरसायनः ॥ ९७ ॥
पूर्वो हेमक्रियासूक्तो द्वितीयो रूप्यकृन्मतः ।
तृतीयो भेषजे तेषु पूर्वपूर्वो गुणोत्तरः ॥ ९८ ॥
आटरूषजले स्विन्नो विमलो विमलो भवेत् ।
जम्बीरस्वरसे स्विन्नो मेषशृङ्गीरसेऽथवा ॥ ९९ ॥
आयाति शुद्धिं विमलो धातवश्च यथा परे ।
गन्धाश्मलकुचाम्लैश्च म्रियते दशभिः पुटैः ॥ १०० ॥
सटङ्कलकुचद्रावैर्मेषशृङ्ग्याश्च भस्मना ।
पिष्टो मूषोदरे लिप्तः संशोष्य च निरुध्य च ॥ १०१ ॥
षट्प्रस्थकोकिलैर्ध्मातो विमलः सीससंनिभः ।
सत्त्वं मुञ्चति तद्युक्तो रसः स्यात्स रसायनः ॥ १०२ ॥
विमलं शिग्रुतोयेन काङ्क्षीकासीसटङ्कणम् ।
वज्रकन्दसमायुक्तं भावितं कदलीरसैः ॥ १०३ ॥
मोक्षकक्षारसंयुक्तं ध्मापितं मूकमूषगम् ।
सत्त्वं चन्द्रार्कसंकाशं पतते नात्र संशयः ॥ १०४ ॥
तत्सत्त्वं सूतसंयुक्तं पिष्टं कृत्वा सुमर्दितम् ।
विलीने गन्धके क्षिप्त्वा जारयेत्त्रिगुणालकम् ॥ १०५ ॥
शिलां पञ्चगुणां चापि वालुकायन्त्रके खलु ।
तारभस्मदशांशेन तावद्वैक्रान्तकं मृतम् ॥ १०६ ॥
सर्वमेकत्र संचूर्ण्य पटेन परिगाल्य च ।
निक्षिप्य कूपिकामध्ये परिपूर्य प्रयत्नतः ॥ १०७ ॥
लीढो व्योषवरान्वितो विमलको युक्तो घृतैः सेवितो
हन्याद्दुर्भगरुक्ज्वराग्न्यश्वयथुकं पाण्डुप्रमेहारुचीः ।
मूलार्तिं ग्रहणीं च शूलमतुलं यक्ष्मामयं कामलां
सर्वान्पित्तमरुद्गदान्किमपरैर्योगैरशेषामयान् ॥ १०८ ॥ इति विमलः ॥

**अथ शिलाधातुः**—शिलाधातुर्द्विधा प्रोक्तो गोमूत्राद्यो रसायनः ।
कर्पूरपूर्वकश्चान्यस्तत्राऽऽद्यो द्विविधः पुनः ॥ १०९ ॥

---

१ ग. तथा । २ ज. पिष्टा मुखोदरे लिप्तः संशोष्याशु निरुध्य च ॥ १०० ॥ ३ क. ख. शीतसंनिभः । ज. शीससनिभम् । ४ ङ. °स्यात्सुर° । ज. °स्याच्च रसायने । ५ ख. °यनम् । ६ क. ख. जायते त्रिगु° । ७ क. ख. शिला पञ्चगुणा चा° । ८ ङ. परिपूज्य ९ ग. वेल्लव्यो° । १० ग. °गदृद्दाञ्श्च° ।

सत्त्वश्चैव निःसत्त्वस्तयोः पूर्वो गुणाधिकः ।
ग्रीष्मे तीव्रार्कतप्तेभ्यः पादेभ्यो हिमभूभृतः ॥ ११० ॥
स्वर्णरूप्यार्कगर्भेभ्यः शिलाधातुर्विनिःसरेत् ।
स्वर्णगर्भगिरेर्जातो जपापुष्पनिभो गुरुः ॥ १११ ॥
[1]सस्वल्पतिक्तः सुस्वादुः परमं तद्रसायनम् ।
रूप्यगर्भगिरेर्जातं मधुरं पाण्डुरं गुरु ॥ ११२ ॥
शिलाजं पित्तरोगघ्नं विशेषात्पाण्डुरोगहृत् ।
ताम्रगर्भं गिरेर्जातं नीलवर्णं घनं गुरु ॥ ११३ ॥
शिलाजं कफवातघ्नं तिक्तोष्णं क्षयरोगहृत् ।
वह्नौ क्षिप्तं भवेद्यत्तल्लिङ्गा[2]कारमधूमकम् ।
सलि[3]लेऽथ विलीनं च तच्छुद्धं हि शिलाजतु ॥ ११४ ॥

नूनं सज्वरपाण्डुशोफशमनं मेहाग्निमान्द्यापहं
मेदश्छेदकरं च यक्ष्मशमनं शूलामयोन्मूलनम् ।
गुल्मप्लीहविनाशनं जठरहृच्छूलघ्नमामापहं
[4]सर्वत्वग्गदनाशनं किमपरं देहे च लोहे हितम् ॥ ११५ ॥

रसोपरससूतेन्द्ररत्नलोहेषु ये गुणाः ।
वसन्ति ते शिलाधातौ जरामृत्युजिगीषया ॥ ११६ ॥
क्षाराम्लगोजलैर्धौतं शुध्यत्येव शिलाजतु ।
शिलाधातुं च दुग्धेन त्रिफलामार्कवद्रवैः ॥ ११७ ॥
लोहपात्रे विनिक्षिप्य शोधयेदतियत्नतः ।
क्षाराम्लगुग्गुलोपेतैः स्वेदनीयन्त्रमध्यगैः ॥ ११८ ॥
स्वेदितं घटिकामानाच्छिलाधातु विशुध्यति ।
[5]शिलया गन्धतालाभ्यां मातुलुङ्गरसेन च ॥ ११९ ॥
पुटितं हि शिलाधातु म्रियतेऽष्टगिरिण्डकैः ॥ १२० ॥

भस्मीभूतशिलोद्भवं समतुलं कान्तं च वैक्रान्तकं
युक्तं च त्रिफलाकटुत्रिकघृतैर्वल्लेन तुल्यं भजेत् ।
पाण्डौ यक्ष्मगदे तथाऽग्निसदने मेहेषु मूलामये
गुल्मप्लीहमहोदरे बहुविधे शूले च योन्यामये ॥ १२१ ॥

---

१ ङ. यत्स्वल्पतिक्तं सुस्वादु प॰। २ ख. ॰कारं सधू॰ । ३ ङ. ॰लेऽप्यवि॰। ४ ख. सर्वासृग्ग॰।
५ घ. शिलाया ।

सेवेत यदि षण्मासं रसायनविधानतः ।
वलीपलितनिर्मुक्तो जीवेद्वर्षशतं सुखी ॥ १२२ ॥
पिष्टं द्रावणवर्गेण साम्लेन गिरिसंभवम् ।
क्षिप्त्वा मूषोदरे रुद्ध्वा गाढैर्ध्मातं हि कोकिलैः ॥ १२३ ॥
सत्त्वं मुञ्चेच्छिलाधातुः श्वसनैर्लोहसंनिभम् ।
पाण्डुरं सिकताकारं कर्पूराद्यं शिलाजतु ॥ १२४ ॥
मूत्रकृच्छ्राश्मरीमेहकामलापाण्डुनाशनम् ।
एलातोयेन संभिन्नं सिद्धं शुद्धिमुपैति तत् ॥
नैतस्य मारणं सत्त्वपातनं विहितं बुधैः ॥ १२५ ॥

**अथ सस्यकः**—पीत्वा हालाहलं वान्तं पीतामृतगरुत्मता ।
विषेणामृतयुक्तेन गिरौ मरकताह्वये ॥ १२६ ॥
तद्वान्तं हि घनीभूतं संजातं सस्यकं खलु ।
मयूरकण्ठसच्छायं भाराढ्यमतिशस्यते ॥ १२७ ॥
द्रव्यं विषयुतं यत्तद्द्रव्याधिकगुणं भवेत् ।
हालाहलं सुधायुक्तं सुधाधिकगुणं तथा ॥ १२८ ॥
निःशेषदोषविषहृद्गदशूलमूलकुष्ठाम्लपैत्तिकविबन्धहरं परं च ।
रसायनं वमनरेककरं गरघ्नं श्वित्रापहं गदितमत्र मयूरतुत्थम् ॥ १२९ ॥
सस्यकं शुद्धिमाप्नोति रक्तवर्गेण भावितम् ।
स्नेहवर्गेण संसिक्तं सप्तवारमदूषितम् ॥ १३० ॥
दोलायन्त्रेण सुस्विन्नं सस्यकं प्रहरत्रयम् ।
गोमहिष्याजमूत्रेषु शुध्यते पञ्चखर्परम् ॥ १३१ ॥
लकुचद्रावगन्धाश्मटङ्कणेन समन्वितम् ।
निरुध्य मूषिकामध्ये म्रियते कौक्कुटैः पुटैः ॥ १३२ ॥
सस्यकस्य तु चूर्णं तु पादसौभाग्यसंयुतम् ।
करञ्जतैलमध्यस्थं दिनमेकं निधापयेत् ॥ १३३ ॥
अन्धमूषास्यमध्यस्थं ध्मापयेत्कोकिलत्रयम् ।
इन्द्रगोपाकृति चैव सत्त्वं भवति शोभनम् ॥ १३४ ॥

---

१ ख. लिप्त्वा । २ क. °तुः स्वसनो लोह° । ख. °तुः स्वखनो लोह° ग. °तुः स्वखनै° ग. °तुः स्वस्वनेन लोह° ङ. °तुः स्वखनैर्लो° । छ.° तुः श्वसनैः शुकोथ्याम् । ज. °तुः श्वसनैः सुकोष्ठयाम् । ३ ज. शाभं शि° । ४ ख. शुध्येत । ५ क. यत्र खर्परे । छ. ज. तुत्थखर्परम् । ६ ङ. विपाचयेत् । ७ क. मूषा च मध्यसंस्थाप्य । ८ ख. ध. °धा स्वम° । ङ. °धाध्यम° । छ. °धासुम° । ९ ङ. °किलैस्त्रयैः । १० ख. पतति ।

निम्बुद्रवाल्पटङ्काभ्यां मूषामध्ये निरुध्य च ।
ताम्ररूपं परिध्मातं सत्त्वं मुञ्चति सस्यकम् ॥ १३५ ॥
शुद्धं सस्यं शिलाक्रान्तं पूर्वभेषजसंयुतम् ।
नानाविधानयोगेन सत्त्वं मुञ्चति निश्चितम् ॥ १३६ ॥
सत्त्वमेतत्समादाय खरभूनागसत्त्वभुक् ।
तन्मुद्रिका कृतस्पर्शा शूलघ्नी तत्क्षणाद्भवेत् ॥ १३७ ॥
चराचरं विषं भूतडाकिनीदृग्गतं जयेत् ।
मुद्रिकेयं विधातव्या दृष्टप्रत्ययकारिका ॥ १३८ ॥
रामर्वत्सोमसेनानीमुद्रितेऽपि तथाऽक्षरम् ।
हिमालयोत्तरे पार्श्वे अश्वकर्णो महाद्रुमः ॥ १३९ ॥
तत्र शूलं समुत्पन्नं तत्रैव विलयं गतम् ।
मन्त्रेणानेन मुद्राम्भो निपीतं सप्तमन्त्रितम् ॥ १४० ॥
सद्यः शूलहरं प्रोक्तमिति भालुकिभाषितम् ।
अनया मुद्रया तप्तं तैलमग्नौ सुनिश्चितम् ॥ १४१ ॥
लेपितं हन्ति वेगेन शूलं यत्र क्वचिद्भवेत् ।
सद्यः सूतिकरं नार्याः सद्यो नेत्ररुजापहम् ॥ १४२ ॥

**अथ चपलः**—गौरः श्वेतोऽरुणः कृष्णश्चपलस्तु चतुर्विधः ।
हेमाभश्चैव ताराभो विशेषाद्रसबन्धनः ॥ १४३ ॥
शेषौ तु मध्यौ लाक्षावच्छीघ्रद्रावौ तु निष्फलौ ।
वङ्गवद्द्रवते वह्नौ चपलस्तेन कीर्तितः ॥ १४४ ॥
चपलो लेखनः स्निग्धो देहलोहकरो मतः ।
रसराजसहायः स्यात्तिक्तोष्णमधुरो मतः ॥ १४५ ॥
चपलः स्फटिकच्छायः षडस्त्री स्निग्धको गुरुः ।
त्रिदोषघ्नोऽतिवृष्यश्च रसबन्धविधायकः ॥
महारसेषु कैश्चिद्धि चपलः परिकीर्तितः ॥ १४६ ॥
जम्बीरकर्कोटकशृङ्गवेरैर्विभावनाभिश्चपलस्य शुद्धिः ॥ १४७ ॥
शैलं तु चूर्णयित्वा तु धान्याम्लोपविषैर्विषैः ।
पिण्डं बद्ध्वा तु विधिवत्पातयेच्चपलं तथा ॥ १४८ ॥

---

१ ख. शिखिक्रा॰। २ घ. ॰य कर्ष भू॰। ३ ङ. दृक्कृतं। ४ क. ख. ॰वत्सुरसे॰। ५ क. घ. ॰मुद्रिते। ६ ङ. निधनं। ७ ङ. ॰न्धकः ॥ १४३ ॥ ८ ङ. ॰डस्रः स्नि॰। ९ घ. ङ. ॰पलस्तथा।

**अथ रसकः**—रसको द्विविधः प्रोक्तो दुर्दुरः कारवेल्लकः ।
सदलो दुर्दुरः प्रोक्तो निर्दलः कारवेल्लकः ॥ १४९ ॥
सत्त्वपाते शुभः पूर्वो द्वितीयश्चौषधादिषु ।
रसकः सर्वमेहघ्नः कफपित्तविनाशनः ॥ १५० ॥
नेत्ररोगक्षयघ्नश्च लोहपारदरञ्जनः ।
नागार्जुनेन संदिष्टौ रसश्च रसकावुभौ ॥ १५१ ॥
श्रेष्ठौ सिद्धरसौ ख्यातौ देहलोहकरौ परम् ।
रसश्च रसकश्चोभौ येनाग्निसहनौ कृतौ ॥ १५२ ॥
देहलोहमयी सिद्धिर्दासी तस्य न संशयः ।
कटुकालाबुनिर्यास आलोड्य रसकं पचेत् ॥ १५३ ॥
शुद्धं दोषविनिर्मुक्तं पीतवर्णं तु जायते ।
खर्परः परिसंतप्तः सप्तवारं निमज्जितः ॥ १५४ ॥
बीजपूररसस्यान्तर्निर्मलत्वं समश्नुते ।
नृमूत्रे वाऽश्वमूत्रे वा तक्रे वा काञ्जिकेऽथवा ॥ १५५ ॥
प्रताप्य मज्जितं सम्यक्खर्परं परिशुध्यति ।
नरमूत्रे स्थितो मासं रसको रञ्जयेद्ध्रुवम् ॥ १५६ ॥
शुद्धताम्रं रसं तारं शुद्धस्वर्णप्रभं यथा ।
हरिद्रात्रिफलारालासिन्धुधूमैः सटङ्कणैः ॥ १५७ ॥
सारुष्करैश्च पादांशैः साम्लैः संमर्द्य खर्परम् ।
लिप्तं वृन्ताकमूषायां शोषयित्वा निरुध्य च ॥ १५८ ॥
मूषामुखोपरि न्यस्य खर्परं प्रधमेत्ततः ।
खर्परे प्रहुते ज्वाला भवेन्नीला सिता यदि ॥ १५९ ॥
तदा संदंशतो मूषां धृत्वा कृत्वा त्वधोमुखीम् ।
शनैरास्फालयेद्भूमौ यथा नालं न भज्यते ॥ १६० ॥
वङ्गाभं पतितं सत्त्वं समादाय नियोजयेत् ।
एवं त्रिचतुरैर्वारैः सर्वं सत्त्वं विनिःसरेत् ॥ १६१ ॥
साभयाजतुभूनागनिशाधूमजटङ्कणम् ।
मूकमूषागतं ध्मातं शुद्धं सत्त्वं विमुञ्चति ॥ १६२ ॥

---

१ घ. ठ. दर्दुरः । ङ. दुर्दरः । २ ज. °मज्जनात् ॥ १५४ ॥ ३ ज. निम्बुबीजरस° । ४ क. ख. ठ. °स्यान्ते निर्म° । ५ क. ठ. °र्णसमप्रभम् । ६ घ. तथा । ७ ख. मूर्षा मूषोप° । ८ ङ. °रे ऽपह° ॥ ९ क. ठ. प्रहते । घ. प्रहुते । १० घ. ठ. तुल्यं ।

लाक्षागुडासुरीपथ्याहरिद्रासर्जटङ्कणैः ।
सम्यक्संचूर्ण्य तत्पक्वं गोदुग्धेन घृतेन च ॥ १६३ ॥
वृन्ताकमूषिकामध्ये निरुध्य गुटिकाकृतिम् ।
ध्मात्वा ध्मात्वा समाकृष्य ढालयित्वा शिलातले ॥ १६४ ॥
सत्त्वं वङ्गाकृतिं ग्राह्यं रसकस्य मनोहरम् ।
यद्वा जलयुतां स्थालीं निखनेत्कोष्ठिकोदरे ॥ १६५ ॥
सच्छिद्रं[1] तन्मुखे मल्लं तन्मुखेऽधोमुखीं[2] क्षिपेत् ।
मूषोपरि शिखित्रांश्च प्रक्षिप्य प्रधमेद्दृढम् ॥ १६६ ॥
पतितं स्थालिकानीरे सत्त्वमादाय योजयेत् ।
तत्सत्त्वं तालकोपेतं प्रक्षिप्य खलु खर्परे ॥ १६७ ॥
मर्दयेल्लोहदण्डेन भस्मीभवति निश्चितम् ।
तद्भस्म मृतकान्तेन समेन सह योजयेत् ॥ १६८ ॥
अष्टगुञ्जामितं चूर्णं त्रिफलाक्वाथसंयुतम् ।
कान्तपात्रस्थितं रात्रौ तिलजप्रतिवापकम् ॥ १६९ ॥
निषेवितं निहन्त्याशु मधुमेहमपि ध्रुवम् ॥ १७० ॥
पित्तं क्षयं च पाण्डुं च श्वयथुं गुल्ममेव च ।
रक्तगुल्मं च नारीणां प्रदरं सोमरोगकम् ॥ १७१ ॥
योनिरोगानशेषांश्च विषमांश्च ज्वरानपि ।
रजःशूलं च नारीणां कासं श्वासं[3] च हिध्मिकाम् ॥१७२॥२६२॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये
महारसाष्टकशुद्ध्यादिनिरूपणं नाम द्वितीयोऽध्यायः ॥ २ ॥

---

## अथ तृतीयोऽध्यायः ।

### [ अथोपरसाः साधारणरसाश्च ]

**अथ गन्धकः**—गन्धाश्मगैरिकासीस[4]काङ्क्षीतालशिलाञ्जनम् ।
कङ्कुष्ठं चेत्युपरसाश्चाष्टौ पारदकर्मणि ॥ १ ॥

**पार्वत्युवाच**—गन्धकस्य तु माहात्म्यं तद्गुह्यं वद मे प्रभो ।

**ईश्वर उवाच**—श्वेतद्वीपे पुरा देवि सर्वरत्नविभूषिते ॥
सर्वकाममये रम्ये तीरे क्षीरपयोनिधेः ॥ २ ॥
विद्याधरादिमुख्याभि[5]रङ्गनाभिश्च योगिनाम् ।
सिद्धाङ्गनाभिः श्रेष्ठाभिस्तथैवाप्सरसां गणैः ॥ ३ ॥

---

१ ज. च्छिद्रे त°। २ ख. °मुखं क्षि°। ३ क. ख.श्वासं च हिध्मतां च विशेषतः। ४ क. °काशीस°।
५ घ. ° धरीभिर्मुख्या°।

देवाङ्गनाभी रम्याभिः क्रीडिताभिर्मनोहरैः ।
गीतैर्नृत्यैर्विचित्रैश्च वाद्यैर्नानाविधैस्तथा ॥ ४ ॥
एवं संक्रीडमानायाः प्राभवत्प्रसृतं रजः ।
तद्रजोऽतीव सुश्रोणि सुगन्धि सुमनोहरम् ॥ ५ ॥
रजसश्चातिबाहुल्याद्वासस्ते रक्ततां ययौ ।
तत्र त्यक्त्वा तु तद्वस्त्रं सुस्नाता क्षीरसागरे ॥ ६ ॥
वृता देवाङ्गनाभिस्त्वं कैलासं पुनरागता ।
ऊर्मिभिस्तद्रजोवस्त्रं नीतं मध्ये पयोनिधेः ॥ ७ ॥
एवं ते शोणितं भद्रे प्रविष्टं क्षीरसागरे ।
क्षीराब्धिमथने चैतदमृतेन सहोत्थितम् ॥ ८ ॥
निजगन्धेन तान्सर्वान्हर्षयन्सर्वदानवान् ।
ततो देवगणैरुक्तं गन्धकाख्यो भवत्वयम् ॥ ९ ॥
रसस्य बन्धनार्थाय जारणाय भवत्वयम् ।
ये गुणाः पारदे प्रोक्तास्ते चैवात्र भवन्त्विति ॥ १० ॥
इति देवगणैः प्रीतैः पुरा प्रोक्तं सुरेश्वरि ।
तेनायं गन्धको नाम विख्यातः क्षितिमण्डले ॥ ११ ॥
स चापि त्रिविधो देवि शुकचञ्चुनिभो वरः ।
मध्यमः पीतवर्णः स्याच्छुक्लवर्णोऽधमः प्रिये ॥ १२ ॥

ग्रन्थान्तरे । चतुर्धा गन्धको ज्ञेयो वर्णैः श्वेतादिभिः खलु ।
श्वेतोऽत्र खटिकाप्रोक्तो लेपने लोहमारणे ॥ १३ ॥
तथा चामलसारः स्याद्यो भवेत्पीतवर्णवान् ।
शुकपिच्छः स एव स्याच्छ्रेष्ठो रसरसायने ॥ १४ ॥
रक्तश्च शुकतुण्डाख्यो धातुवादविधौ वरः ।
दुर्लभः कृष्णवर्णश्च स जरामृत्युनाशनः ॥ १५ ॥

गन्धाश्माऽतिरसायनः सुमधुरः पाके कटूष्णो मतः
कण्डूकुष्ठविसर्पदद्रुदलनो दीप्तानलः पाचनः ।
आमोन्मोचनशोषणो विषहरः सूतेन्द्रवीर्यप्रदो
गौरीपुष्पभवस्तथा क्रिमिहरः सत्त्वात्मकः सूतजित् ॥ १६ ॥

---

१ घ. क्रीडन्तीभिः पुरा प्रिये । २ घ. °याः प्रभ° । ३ घ. °वत्प्राकृतं । ४ क. ऋता । ५ घ. °त्र खेटि° । ६ ङ. ज. समधुरः । ७ ज. °मोन्मूलन । ८ ग. सत्त्वात्म° ।

बलिना सेवितः पूर्वं प्रभूतबलहेतवे ॥ १७ ॥
वासुकिं कर्षतस्तस्य तन्मुखज्वालया द्रुता ।
वसा गन्धकगन्धाढ्या सर्वतो निःसृता तनोः ॥ १८ ॥
गन्धकत्वं च संप्राप्ता गन्धोऽभूत्सविषः स्मृतः ।
तस्माद्बलिवसेत्युक्तो गन्धकोऽतिमनोहरः ॥ १९ ॥
पयःस्विन्नो घटीमात्रं वारिधौतो हि गन्धकः ।
गव्याज्यविद्रुतो वस्त्राद्गालितः शुद्धिमृच्छति ॥ २० ॥
एवं संशोधितः सोऽयं पाषाणानंबरा त्यजेत् ।
घृते विषं तुषाकारं स्वयं पिण्डत्वमेव च ॥ २१ ॥
इति शुद्धो हि गन्धाश्मा नापथ्यैर्विकृतिं व्रजेत् ।
अपथ्यादन्यथा हन्यात्पीतं हालाहलं यथा ॥ २२ ॥
गन्धको द्रावितो भृङ्गरसे क्षिप्तो विशुध्यति ।
तद्रसैः सप्तधा भिन्नो गन्धकः परिशुध्यति ॥ २३ ॥
स्थाल्यां दुग्धं विनिक्षिप्य मुखे वस्त्रं निबध्य च ।
गन्धकं तत्र निक्षिप्य चूर्णितं सिकताकृति ॥ २४ ॥
छादयेत्पृथुदीर्घेण खर्परेणैव गन्धकम् ।
ज्वालयेत्खर्परस्योर्ध्वं वनच्छाणैस्तथोपलैः ।
दुग्धे निपतितो गन्धो गलितः परिशुध्यति ॥ २५ ॥
इत्थं विशुद्धस्त्रिफलाज्यभृङ्गमध्वन्वितः शाणमितो हि लीढः ।
गृध्राक्षितुल्यं कुरुतेऽक्षियुग्मं करोति रोगोज्झितदीर्घमायुः ॥२६॥
कलांशव्योषसंयुक्तं गन्धकं श्लक्ष्णचूर्णितम् ।
अरत्निमात्रे वस्त्रे तद्विप्रकीर्य [10]विवेष्टय तत् ॥ २७ ॥
सूत्रेण वेष्टयित्वाऽथ यामं तैले निमज्जयेत् ।
धृत्वा संदंशतो वर्तिमध्यं प्रज्वालयेच्च तम् ॥ २८ ॥
द्रुतो निपतितो गन्धो बिन्दुशः काचभाजने ।
तां द्रुतिं प्रक्षिपेत्पत्रे नागवल्ल्यास्त्रिबिन्दुकाम् ॥ २९ ॥
वल्लेन प्रमितं स्वच्छं सूतेन्द्रं च विमर्दयेत् ।
अङ्गुल्याऽथ सपत्रां तां द्रुतिं सूतं च भक्षयेत् ॥ ३० ॥

---

१ क. द्बलिं व°। २ घ. °द्धिमाप्नुयात् ॥२०॥ ३ ज. °णानां बरे त्य°। ४ क. ग. ट. ठ. °नम्बरे त्य°। ५ ग. °मेति च ॥ २१ ॥ ६ ख. ट. ठ. °द्रसे स°। ७ ङ. स्विन्नो । ८ ग. ङ. गालितः । ९ क. ठ. ङ. तोऽवलीढः । १० ज. विशोध्य ।

करोति दीपनं तीव्रं क्षयं पाण्डुं च नाशयेत् ।
कासं श्वासं च शूलार्तिं ग्रहणीमतिदुर्धराम् ॥ ३१ ॥
आमं विनाशयत्याशु लघुत्वं प्रकरोति च ।
घृताक्ते लोहपात्रे तु विद्रुतं शुद्धगन्धकम् ॥ ३२ ॥
घृताक्तदर्विकाक्षिप्तं द्विनिष्कप्रमितं भजेत् ।
हन्ति क्षयमुखान्रोगान्कुष्ठरोगं विशेषतः ॥ ३३ ॥
क्षाराम्लतैलसौवीरविदाहि द्विदलं तथा ।
शुद्धगन्धकसेवायां त्यजेद्योगयुतेन हि ॥ ३४ ॥
गन्धकस्तुल्यमरिचः षड्गुणत्रिफलान्वितः ।
घृष्टः शम्याकमूलेन पीतश्चाखिलकुष्ठहा ॥ ३५ ॥
तन्मूलसलिले पिष्टं लेपयेत्प्रत्यहं तनौ ।
दृष्टप्रत्ययपयोगोऽयं सर्वत्र प्रतिवीर्यवान् ॥ ३६ ॥
श्रीमता सोमदेवेन सम्यगत्र प्रकीर्तितः ।
द्विनिष्कप्रमितं गन्धं पिष्ट्वा तैलेन संयुतम् ॥ ३७ ॥
अथापामार्गतोयेन सतैलमरिचेन हि ।
विलिप्य सकलं देहं तिष्ठेद्धर्मे ततः परम् ॥ ३८ ॥
तक्रभक्तं च भुञ्जीत तृतीये प्रहरे खलु ।
भजेद्रात्रौ तथा वह्निं समुत्थाय तथा प्रगे ॥ ३९ ॥
महिषीच्छगणं लिप्त्वा स्नायाच्छीतेन वारिणा ।
ततोऽभ्यज्य घृतैर्देहं स्नायादिष्टोष्णवारिणा ॥ ४० ॥
अमुना क्रमयोगेन विनश्यत्यतिवेगतः ।
दुर्जया बहुकालीना पामा कण्डुः सुनिश्चितम् ॥ ४१ ॥
गन्धकस्य प्रयोगाणां शतं तत्र प्रकीर्तितम् ।
ग्रन्थविस्तारभीतेन सोमदेवेन भूभुजा ॥ ४२ ॥
अथवाऽर्कस्नुहीक्षीरैर्वस्त्रं लेप्यं तु सप्तधा ।
गन्धकं नवनीतेन पिष्ट्वा वस्त्रं लिपेद्घनम् ॥४३ ॥
तद्वर्तिं ज्वलितां दंशे धृतां कुर्यादधोमुखीम् ।
तैलं पतेदधोभाण्डे ग्राह्यं योगेषु योजयेत् ॥ ४४ ॥

---

१ क. °लरोगहा ॥ ३५ ॥ २ क. न्मूलं स°। ३ क. सर्वस्य । ४ क. घ. पीत्वा । ५ क. ख. ततः । ६ क. °त्याभिवे°। ७ क. °सर्वे। घ. सर्वं नात्र प्रकाशितम् । ज. °सर्वतो न प्रकाशनम् । ८ क. °ि स्तर°। ९ क. °तां दंशभू°।

शुद्धगन्धो हरेद्रोगान्कुष्ठमृत्युजरादिकान् ।
अग्निकारी महानुष्णो वीर्यवृद्धिं करोति च ॥ ४५ ॥

**अथ गैरिकम्**—पाषाणगैरिकं चैकं द्वितीयं स्वर्णगैरिकम् ।
पाषाणगैरिकं प्रोक्तं कठिणं ताम्रवर्णकम् ॥ ४६ ॥
अत्यन्तशोणितं स्निग्धं मसृणं स्वर्णगैरिकम् ।
स्वादु स्निग्धं हिमं नेत्र्यं कषायं रक्तपित्तनुत् ॥ ४७ ॥
हिध्मावमिविषघ्नं च रक्तघ्नं स्वर्णगैरिकम् ।
पाषाणगैरिकं चान्यत्पूर्वस्मादल्पकं गुणैः ॥ ४८ ॥
गैरिकं तु गवां दुग्धैर्भावितं शुद्धिमृच्छति ।
गैरिकं सत्त्वरूपं हि नन्दिना परिकीर्तितम् ॥ ४९ ॥
कैरप्युक्तं पतेत्सत्त्वं क्षाराम्लक्लिन्नगैरिकात् ।
उपतिष्ठति सूतेन्द्रमेकत्वं गुणवत्तरम् ॥ ५० ॥

**अथ कासीसम्**—कासीसं वालुकाद्येकं पुष्पपूर्वमथापरम् ।
क्षाराम्लागरुधूमाभं सोष्णवीर्यं विषापहम् ॥ ५१ ॥
वालुकापुष्पकासीसं श्वित्रघ्नं केशरञ्जनम् ॥ ५२ ॥
पुष्पादिकासीसमतिप्रशस्तं सोष्णं कषायाम्लमतीव नेत्र्यम् ।
विषानिलश्लेष्मगदव्रणघ्नं श्वित्रक्षयघ्नं कचरञ्जनं च ॥ ५३ ॥
सकृद्भृङ्गाम्बुना क्लिन्नं कासीसं निर्मलं भवेत् ।
तुवरीसत्त्ववत्सत्त्वमेतस्यापि समाहरेत् ।
कासीसं शुद्धिमाप्नोति पित्तैश्च रजसा स्त्रियः ॥ ५४ ॥
बलिना हतकासीसं क्रान्तं कासीसमारितम् ।
उभयं समभागं हि त्रिफलावेल्लसंयुतम् ॥ ५५ ॥
विषमांशघृतक्षौद्रप्लुतं शाणमितं प्रगे ।
सेवितं हन्ति वेगेन श्वित्रं पाण्डुक्षयामयम् ॥ ५६ ॥
गुल्मप्लीहगदं शूलं मूलरोगं विशेषतः ।
रसायनविधानेन सेवितं वत्सरावधि ॥ ५७ ॥
आमसंशोषणं श्रेष्ठं मन्दाग्निपरिदीपनम् ।
पलितं वलिभिः सार्धं विनाशयति निश्चितम् ॥ ५८ ॥

---

१ ज. दुग्धे भावि°। २ क. °राम्लैः क्लि°। ३ घ. °रोगमशे°।

**अथ तुवरी**—सौराष्ट्यश्मनि संभूता मृत्स्ना सा तुवरी मता ।
वस्त्रेषु लिप्यते याऽसौ मञ्जिष्ठा रागबन्धिनी ॥ ५९ ॥
फटकी फुल्लिका चेति द्वितीया परिकीर्तिता ।
ईषत्पीता गुरुः स्निग्धा पीतिका विषनाशनी ॥ ६० ॥
व्रणकुष्ठहरा सर्वकुष्ठघ्नी च विशेषतः ॥ ६१ ॥
निर्भारा शुभ्रवर्णा च स्निग्धा साम्लाऽपरा मता ।
सा फुल्लतुवरी प्रोक्ता लेपात्ताम्रं चरेदयः ॥ ६२ ॥
काङ्क्षी कषाया कटुकाम्लकण्ठ्या
केश्या व्रणघ्नी विषनाशनी च ।
श्वित्रापहा नेत्रहिता त्रिदोष-
शान्तिप्रदा पारदजारणी च ॥ ६३ ॥
तुवरी काञ्जिके क्षिप्त्वा त्रिदिनाच्छुद्धिमृच्छति ।
क्षाराम्लैर्मर्दिता ध्माता सत्त्वं मुञ्चति निश्चितम् ॥ ६४ ॥
गोपित्तेन शतं वारान्सौराष्ट्रीं भावयेत्ततः ।
धमित्वा पातयेत्सत्त्वं क्रामणं चातिगुह्यकम् ॥ ६५ ॥

**अथ तालकः**—हरितालं द्विधा प्रोक्तं पत्राढ्यं पिण्डसंज्ञकम् ।
स्वर्णवर्णं गुरु स्निग्धं तनुपत्रं च भासुरम् ॥ ६६ ॥
तत्पत्रतालकं प्रोक्तं बहुपत्रं रसायनम् ।
निष्पत्रं पिण्डसदृशं स्वल्पसत्त्वं तथा गुरु ।
स्त्रीपुष्पहरणं तत्तु गुणाल्पं पिण्डतालकम् ॥ ६७ ॥
श्लेष्मरक्तविषवातभूतनुत्केवलं च खलु पुष्पहृत्स्त्रियः ।
स्निग्धमुष्णकटुकं च दीपनं कुष्ठहारि हरितालमुच्यते ॥ ६८ ॥
स्विन्नं कूष्माण्डतोये वा तिलक्षारजलेऽपि वा ।
तोये वा चूर्णसंयुक्ते दोलायन्त्रेण शुध्यति ॥ ६९ ॥
अशुद्धं तालमायुघ्नं कफमारुतमेहकृत् ।
तापस्फोटाङ्गसंकोचं कुरुते तेन शोधयेत् ॥ ७० ॥
तालकं कणशः कृत्वा दशांशेन च टङ्कणम् ।
जम्बीरोत्थद्रवैः क्षाल्यं काञ्जिकैः क्षालयेत्ततः ॥ ७१ ॥
वस्त्रे चतुर्गुणे बद्ध्वा दोलायन्त्रे दिनं पचेत् ॥ ७२ ॥

---

१ घ. °राष्ट्राश्म°। ज. °राष्ट्रेऽश्म°। २ घ. वस्त्रमारञ्जयद्याऽसौ । ३ क. °गरञ्जनी । ४घ. स्फटिकी पीतिका चेति द्विधा सा प° । ङ. फिटका फुल्का । ५ ज. निर्भारा। ६ घ. कुष्ठपरा । ७ क. °त्थजलैः क्षा°। ८ ङ. °गन्धुनः ।

सचूर्णेनाऽऽरनालेन दिनं कूष्माण्डजे रसे ।
स्वेद्यं वा शाल्मलीतोयैस्तालकं शुद्धिमाप्नुयात् ॥ ७३ ॥
मधुतुल्ये घनीभूते कषाये ब्रह्ममूलजे ।
त्रिवारं तालकं भाव्यं पिष्ट्वा मूत्रेऽथ माहिषे ॥ ७४ ॥
उपलैर्दशभिर्देयं पुटं रुद्ध्वाऽथ पेषयेत् ।
एवं द्वादशधा पाच्यं शुद्धं योगेषु योजयेत् ॥ ७५ ॥
कुलित्थक्काथसौभाग्यमहिष्याज्यमधुप्लुतम् ।
स्थाल्यां क्षिप्त्वा[1] विदध्याच्च त्वम्लेन[2] च्छिद्रयोगिना ॥ ७६ ॥
सम्यङ्निरुध्य शिखिनं ज्वालयेत्क्रमवर्धितम् ।
एकप्रहरमात्रं हि रन्ध्रमाच्छाद्य गोमयैः ॥ ७७ ॥
यामान्ते छिद्रमुद्घाट्य दृष्टे धूमे च पाण्डुरे ।
शीतां स्थालीं समुत्तार्य सत्त्वमुत्कृष्य चाऽऽहरेत् ॥ ७८ ॥
सर्वपाषाणसत्त्वानां प्रकाराः सन्ति कोटिशः ।
ग्रन्थविस्तारभीत्याऽतो लिखिता न मया खलु ॥ ७९ ॥
पैलालकं[3] रवेर्दुग्धैर्दिनमेकं विमर्दयेत् ।
क्षिप्त्वा षोडशिकातैलै मिश्रयित्वा ततः पचेत् ॥ ८० ॥
अनावृतप्रदेशे च सप्तयामावधि ध्रुवम् ।
स्वाङ्गशीत[4]मधस्थं च सत्त्वं श्वेतं समाहरेत् ॥ ८१ ॥
छागलस्याथ[5]बालस्य बलिना[6] च समन्वितम् ।
तालकं दिवसद्वंद्वं मर्दयित्वाऽतियत्नतः ॥ ८२ ॥
युक्तं द्रावणवर्गेण काचकुप्यां विनिक्षिपेत् ।
त्रिधा तां च मृदा लिप्त्वा परिशोष्य खरातपे ॥ ८३ ॥
ततः खर्परैक[7]च्छिद्रे तामर्धां चैव कूपिकाम् ।
प्रवेश्य[8] ज्वालयेदग्निं द्वादशप्रहरावधि ॥ ८४ ॥
कूपिक[9]कण्ठस्थितं शीतं शुद्धं सत्त्वं समाहरेत् ।
पलार्धप्रमितं तालं बद्ध्वा वस्त्रे सिते दृढे ॥ ८५ ॥
बलिनाऽऽलिप्य यत्नेन त्रिवारं परिशोष्य च ।
द्राविते त्रिफले[10] ताम्रे क्षिपेत्तालकपोटलीम् ॥ ८६ ॥

---

१ क. °प्त्वाऽथ दध्याज्यं त्व°। २ घ. मल्लेन । ३ ख. पलं तालं रवेर्दुग्धं दिन°। ४ ख. °तलमध्य° । ५ ग. °स्याश्वबा°। ज. °स्याथवाऽलाभे बलिजेन स°। ६ बलिजेन । घ. बलासेन । ७ च. °रके रे । ८ ग. °श्य ज्वल°। ९ ज. कूपीक°। १० ख. घ. त्रिपले ।

भस्मना छादयेच्छीघ्रं ताम्रेणाऽऽवेष्टितं सितम् ।
मृदुलं सत्त्वमादद्यात्प्रोक्तं रसरसायने ॥ ८७ ॥

**अथ मनःशिला**—मनःशिला त्रिधा प्रोक्ता श्यामाङ्गी कणवीरका ।
खण्डाख्या चेति तद्रूपं विविच्य परिकथ्यते ॥ ८८ ॥
श्यामा रक्ता सगौरा च भाराढ्या श्यामिका मता ।
तेजस्विनी च निर्गौरा ताम्राभा कणवीरका ॥ ८९ ॥
चूर्णीभूताऽतिरक्ताङ्गी सभारा खण्डपूर्विका ।
उत्तरोक्तगुणैः श्रेष्ठा भूरिसत्त्वा प्रकीर्तिता ॥ ९० ॥
मनःशिला सर्वरसायनाढ्या तिक्ता कटूष्णा कफवातहन्त्री ।
सत्त्वात्मिका भूतविषाग्निमान्द्यकण्डूतिकासक्षयहारिणी च ॥९१॥
अश्मरीं मूत्रकृच्छ्रं च अशुद्धा कुरुते शिला ।
मन्दाग्निं मलबन्धं च शुद्धा सर्वरुजापहा ॥ ९२ ॥
अगस्त्यपत्रतोयेन भाविता सप्तवारकम् ।
शृङ्गवेररसैर्वाऽपि विशुध्यति मनःशिला ॥ ९३ ॥
जयन्तीभृङ्गराजोत्थरक्तागस्त्यरसैः शिलाम् ।
दोलायन्त्रे पचेद्यामं यामं छागोत्थमूत्रकैः ॥
क्षालयेदारनालेन सर्वरोगेषु योजयेत् ॥ ९४ ॥
अष्टमांशेन किट्टेन गुडगुग्गुलुसर्पिषा ।
कोष्ठ्यां रुद्धा दृढं ध्माता सत्त्वं मुञ्चेन्मनःशिला ॥ ९५ ॥
भूनागधौतसौभाग्यमदनैश्च विमर्दितैः ।
कारवल्लीदलाम्भोभिर्मूषां कृत्वाऽत्र निक्षिपेत् ॥ ९६ ॥
शिलां क्षाराम्लनिष्पिष्टां प्रधमेत्तदनन्तरम् ।
कोकिलाद्वयमात्रं हि ध्मानात्सत्त्वं त्यजत्यसौ ॥ ९७ ॥

**अथाञ्जनानि**—सौवीरमञ्जनं प्रोक्तं रसाञ्जनमतः परम् ।
स्रोतोञ्जनं तदन्यच्च पुष्पाञ्जनकमेव च ॥ ९८ ॥
नीलाञ्जनं च तेषां हि स्वरूपमिह वर्ण्यते ।
सौवीरमञ्जनं धूम्रं रक्तपित्तहरं हिमम् ॥ ९९ ॥
विषहिध्माक्षिरोगघ्नं व्रणशोधनरोपणम् ।
रसाञ्जनं च पीताभं विषवक्त्रगदापहम् ॥ १०० ॥

---

१ क. श्यामारक्ता । ख. श्यामारक्ता च गौरा च । २ क. °रोक्ता गु° । ३ घ. °रत्वाधिका । ४ घ. कोष्ठ्यां । ५ क. °गमन्धमौ° । ६ ज. ध्माता सत्त्वं ।

श्वासहिध्मापहं वर्ण्यं वातपित्तास्रनाशनम् ।
स्रोतोञ्जनं हिमं स्निग्धं कषायं स्वादु लेखनम् ॥ १०१ ॥
नेत्र्यं हिध्माविषच्छर्दिकफपित्तास्ररोगनुत् ॥ १०२
पुष्पाञ्जनं सितं स्निग्धं हिमं सर्वाक्षिरोगनुत् ।
अतिदुर्धरहिध्माघ्नं विषज्वरगदापहम् ॥ १०३ ॥
नीलाञ्जनं गुरु स्निग्धं नेत्र्यं दोषत्रयापहम् ।
रसायनं सुवर्णघ्नं लोहमार्दवकारकम् ॥ १०४ ॥
अञ्जनानि विशुध्यन्ति भृङ्गराजनिजद्रवैः ।
मनोह्वासत्त्ववत्सत्त्वमञ्जनानां समाहरेत् ॥ १०५ ॥
वल्मीकशिखराकारं भङ्गे नीलोत्पलद्युति ।
घृष्टं तु गैरिकच्छायं स्रोतोजं लक्षयेद्बुधः ॥ १०६ ॥
गोशकृद्रसमूत्रेषु घृतक्षौद्रवसासु च ।
भावितं बहुशस्तच्च शीघ्रं बध्नाति सूतकम् ॥ १०७ ॥
सूर्यावर्तादियोगेन शुद्धिमेति रसाञ्जनम् ।
राजावर्तकवत्सत्त्वं ग्राह्यं स्रोतोञ्जनादपि ॥ १०८ ॥

**अथ कङ्कुष्ठम्**—हिमवत्पादशिखरे कङ्कुष्ठमुपजायते ।
तत्रैकं नालिकाख्यं हि तदन्यद्रेणुकं मतम् ॥ १०९ ॥
पीतप्रभं गुरु स्निग्धं श्रेष्ठं कङ्कुष्ठमादिमम् ।
श्यामपीतं लघु त्यक्तसत्त्वं नेष्टं हि रेणुकम् ॥ ११० ॥
केचिद्वदन्ति कङ्कुष्ठं सद्योजातस्य दन्तिनः ।
वर्चश्च श्यामपीताभं रेचनं परिकथ्यते ॥ १११ ॥
कतिचित्तेजिवाहानां नालं कङ्कुष्ठसंज्ञकम् ।
वदन्ति श्वेतपीताभं तदतीव विरेचनम् ॥ ११२ ॥
रसे रसायनं श्रेष्ठं निःसत्त्वं बहुवैकृतम् ।
कङ्कुष्ठं तिक्तकटुकं वीर्योष्णं चातिरेचनम् ॥
व्रणोदावर्तशूलार्तिगुल्मप्लीहगुदार्तिनुत् ॥ ११३ ॥
सूर्यावर्तककदली वन्ध्या कोशातकी च सुरदाली ।
शिग्रुश्च वज्रकन्दो निरङ्कणा काकमाची च ॥ ११४ ॥
आसामेकरसेन तु लवणक्षाराम्लभावितं बहुशः ।
शुध्यन्ति रसोपरसा ध्माता मुञ्चन्ति सत्त्वानि ॥ ११५ ॥

१ क. वाल्मीक॰। २ ख. ॰शश्चापि शी॰। ३ घ. श्यावपी॰। ४ घ. नष्टं। ५ छ. वालं। ६ ग. ॰यने श्रे॰ ज. ॰यने नेष्टं निः॰। ७ घ. नीरकणा। ८ ङ. ज. ॰म्लभाविता ब॰।

कङ्कुष्ठं शुद्धिमायाति त्रिधा शुण्ठ्यम्बुभावितम् ।
सत्त्वाकर्षोऽस्य न प्रोक्तो यस्मात्सत्त्वमयं हि तत् ॥ ११६ ॥
भजेदेनं विरेकार्थं ग्राहिभिर्यवमात्रया ।
नाशयेदामपूर्तिं च विरेच्य क्षणमात्रतः ॥ ११७ ॥
भक्षितः सह ताम्बूलैर्विरिच्यासून्विनाशयेत् ॥ ११८ ॥
बर्बुरीमूलिकाक्वाथजीरसौभाग्यकं समम् ।
कङ्कुष्टं विषनाशाय भूयो भूयः पिबेन्नरः ॥ ११९ ॥ इत्युपरसाः ।

**अथ साधारणरसाः**—कम्पिल्लश्चपलो* गौरीपाषाणो नवसारकः ।
कपर्दो वह्निजारश्च गिरिसिन्दूरहिङ्गुलौ ॥ १२० ॥
मोदारशृङ्गमित्यष्टौ साधारणरसाः स्मृताः ।
रससिद्धिकराः प्रोक्ता नागार्जुनपुरःसरैः ॥ १२१ ॥

**अथ कम्पिल्लः**—इष्टिकाचूर्णसंकाशश्चन्द्रिकाढ्योऽतिरेचनः ।
सौराष्ट्रदेशे चोत्पन्नः स हि कम्पिल्लकः स्मृतः ॥ १२२ ॥
पित्तव्रणाध्मानविबन्धनिघ्नः श्लेष्मोदरार्तिक्रमिगुल्मवैरी ।
मूलामशोफज्वरशूलहारी कम्पिल्लको रेच्यगदापहारी ॥ १२३ ॥

**अथ गौरीपाषाणः**—गौरीपाषाणकः पीतो विकटो हतचूर्णकः ।
स्फटिकाभश्च शङ्खाभो हरिद्राभस्त्रयः स्मृताः ॥ १२४ ॥
पूर्वं पूर्वं गुणैः श्रेष्ठः कारवल्लीफले क्षिपेत् ।
स्वेदयेद्धाण्डिकामध्ये शुद्धो भवति मूषकः ॥ १२५ ॥
तालवद्वाहयेत्सत्त्वं शुद्धं शुभ्रं प्रयोजयेत् ।
रसबन्धकरः स्निग्धो दोषघ्नो रसवीर्यकृत् ॥ १२६ ॥

**अथ नवसारः**—करीरपीलुकाष्ठेषु पच्यमानेषु चोद्भवः ।
क्षारोऽसौ नवसारः स्याच्चूलिकालवणाभिधः ॥ १२७ ॥
इष्टिकादहने जातं पाण्डुरं लवणं लघु ।
तदुक्तं नवसाराख्यं चूलिकालवणं च तत् ।
रसेन्द्रजारणं लोहद्रावणं जठराग्निकृत् ॥ १२८ ॥

---

* चपलस्तु महारसेषु कैश्चिदुक्तत्वादुक्त एव । * श्चपरो । साधीयान् ।

---

१ क. °मजाति । घ. °मजाति । २ ङ. ज. °म्बूलैर्निरि° । ३ ख. बर्बराकुलिकाक्वाथो जी° । ग. बर्बुराकुलिकाक्वाथो जी° । ४ घ. ङ. ज. कुष्टवि° । ५ ग. °को रेचग° । ६ ख. विकारो । ज. त्रिकरो ।

गुल्मप्लीहास्यशोषघ्नं भुक्तमांसादिजारणम् ।
विडाख्यं च त्रिदोषघ्नं चूलिकालवणं मतम् ॥ १२९ ॥

**अथ वराटकाः**—पीताभा ग्रन्थिका पृष्ठे दीर्घवृत्ता वराटिका ।
रसवैद्यैर्विनिर्दिष्टा सा चराचरसंज्ञिका ॥ १३० ॥
सार्धनिष्कभरा श्रेष्ठा निष्कभारा च मध्यमा ।
पादोननिष्कभारा च कनिष्ठा परिकीर्तिता ॥ १३१ ॥
परिणामादिशूलघ्नी ग्रहणीक्षयनाशनी ।
कटूष्णा दीपनी वृष्या नेत्र्या वातकफापहा ॥ १३२ ॥
रसेन्द्रजारणे प्रोक्ता बिडद्रव्येषु शस्यते ॥ १३३ ॥
तदन्ये तु वराटाः स्युर्गुरवः श्लेष्मपित्तलाः ।
वराटाः काञ्जिके स्विन्ना यामाच्छुद्धिमवाप्नुयुः ॥ १३४ ॥

**अथाग्निजारः**—समुद्रेणाग्निनक्रस्य जरायुर्बहिरुज्झितः ।
संशुष्को भानुतापेन सोऽग्निजार इति स्मृतः ॥ १३५ ॥
अग्निजारस्त्रिदोषघ्नो धनुर्वातादिवातनुत् ।
वर्धनो रसवीर्यस्य दीपनो जारणस्तथा ॥
तदब्धिक्षारसंशुद्धं तस्माच्छुद्धिर्न हीष्यते ॥ १३६ ॥

**अथ गिरिसिन्दूरम्**—महागिरिषु चाल्पीयः पाषाणान्तःस्थितो रसः ।
शुष्कशोणः स निर्दिष्टो गिरिसिन्दूरसंज्ञया ॥ १३७ ॥
त्रिदोषशमनं भेदि रसबन्धनमग्रिमम् ।
देहलोहकरं नेत्र्यं गिरिसिन्दूरमीरितम् ॥ १३८ ॥

**अथ हिङ्गुलः**—हिङ्गुलः शुकतुण्डाख्यो हंसपाकस्तथाऽपरः ।
प्रथमोऽल्पगुणस्तत्र चर्मारः स निगद्यते ॥ १३९ ॥
श्वेतरेषः प्रवालाभो हंसपाकः स ईरितः ।
हिङ्गुलः सर्वदोषघ्नो दीपनोऽतिरसायनः ॥ १४० ॥
सर्वरोगहरो वृष्यो जारणायातिशस्यते ।
एतस्मादाहृतः सूतो जीर्णगन्धसमो गुणैः ॥ १४१ ॥
सप्तकृत्वाऽऽर्द्रकद्रावैर्लकुचस्याम्बुनाऽपि वा ।
शोषितो भावयित्वा च निर्दोषो जायते खलु ॥ १४२ ॥

---

१ घ. ग्रन्थिला । २ क. दीर्घावृत्ता । घ. दीर्घावर्ता । ३ ख. ग्राहिणी शूलनाशनी । ४ ङ. बन्धको रसराजस्य । ५ ग. शुष्कः शो॰ ।

किमत्रचित्रं दरदः सुभावितः क्षीरेण मेष्या बहुशोऽम्लवर्गैः ।
एवं सुवर्णं बहुघर्मतापितं करोति साक्षाद्वरकुङ्कुमप्रभम् ॥१४३॥
दरदः पातनायन्त्रे पातितश्च जलाश्रये ।
तत्सत्त्वं सूतसंकाशं पातयेन्नात्र संशयः ॥ १४४ ॥

**अथ मृद्दारशृङ्गकम्**—सदलं पीतवर्णं च भवेद्गुर्जरमण्डले ।
अर्बुदस्य गिरेः पार्श्वे जातं मृद्दारशृङ्गकम् ॥ १४५ ॥
सीससत्त्वं गुरु श्लेष्मशमनं पुंगदापहम् ।
रसबन्धनमुत्कृष्टं केशरञ्जनमुत्तमम् ॥ १४६ ॥
साधारणरसाः सर्वे मातुलुङ्गार्द्रकाम्बुना ।
त्रिरात्रं भाविताः शुष्का भवेयुर्दोष वर्जिताः ॥ १४७ ॥
यानि कानि च सत्त्वानि तानि शुध्यन्त्यशेषतः ।
ध्मातानि शुद्धिवर्गेण मिलन्ति च परस्परम् ॥ १४८ ॥ इति करवालभैरवः ।

**अथ राजावर्तः**—राजावर्तोऽल्परक्तोरुनीलिकामिश्रितप्रभः ।
गुरुत्वमसृणः श्रेष्ठस्तदन्यो मध्यमः स्मृतः ॥ १४९ ॥
प्रमेहक्षयदुर्नामपाण्डुश्लेष्मानिलापहः ।
दीपनः पाचनो वृष्यो राजावर्तो रसायनः ॥ १५० ॥
निम्बुद्रवैः सगोमूत्रैः सक्षारैः स्वेदिताः खलु ।
द्वित्रिवारेण शुध्यन्ति राजावर्तादिधातवः ॥ १५१ ॥
शिरीषपुष्पार्द्ररसै राजावर्तं विशोधयेत् ॥ १५२ ॥
लुङ्गाम्बुगन्धकोपेतो राजावर्तो विचूर्णितः ।
पुटनात्सप्तवारेण राजावर्तो मृतो भवेत् ॥ १५३ ॥
राजावर्तस्य चूर्णं तु कुनटीघृतमिश्रितम् ।
विपचेदायसे पात्रे महिषीक्षिरसंयुतम् ॥ १५४ ॥
सौभाग्यपञ्चगव्येन पिण्डीबद्धं तु जारयेत् ।
ध्मापितं खदिराङ्गारैः सत्त्वं मुञ्चति शोभनम् ॥ १५५ ॥
अनेन क्रमयोगेन गैरिकं विमलं भवेत् ।
क्रमात्पीतं च रक्तं च सत्त्वं पतति शोभनम् ॥१५६॥४१८॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये उपरससाधारणरसानां शुद्ध्यादिनिरूपणं नाम तृतीयोऽध्यायः ॥३॥

---

१ घ. जायते नात्र । २ ख. भूदारशृङ्गकम् । क. ख. घ. ङ. ट. ठ. ड. केदारशृङ्गकम् । घ. बोदारशृङ्गकम् । ३ क. °त्वं मरुच्छ्लेष्म° । ४ घ. °नीलिमामि° । ङ. °नीलिमत्पीतकप्रभः । ज. °नीलिमाश्रितवत्प्रभः । ५ क. °रुश्च म° । ६ ग. ज. °भाग्यं प° । ७ घ. कारयेत् । ८ ज. क्रमभागेन ।

## अथ चतुर्थोऽध्यायः।

### [ अथ रत्नानि ]

**अथ मणयः**—मणयोऽपि च विज्ञेयाः सूतबन्धस्य कारकाः।
वैक्रान्तः सूर्यकान्तश्च हीरकं मौक्तिकं मणिः ॥ १ ॥
चन्द्रकान्तस्तथा चैव राजावर्तश्च सप्तमः।
गरुडोद्गारकश्चैव ज्ञातव्या मणयस्त्वमी ॥ २ ॥
पुष्पराग महानीलं पद्मरागं प्रवालकम्।
वैडूर्यं च तथा नीलमेते च मणयो मताः ॥
यत्नतः संग्रहीतव्या रसबन्धस्य कारणात् ॥ ३ ॥
पद्मरागेन्द्रनीलाख्यौ तथा मरकतोत्तमः।
पुष्परागः सवज्राख्यः पञ्चरत्नवराः स्मृताः ॥ ४ ॥
माणिक्यमुक्ताफलविद्रुमाणि *तार्क्ष्यं च पुष्पं †भिदुरं च नीलम्।
गोमेदकं चाथ विदूरकं च क्रमेण रत्नानि नवग्रहाणाम् ॥ ५ ॥
ग्रहानुमैत्र्या कुरुविन्दपुष्पप्रवालमुक्ताफलतार्क्ष्यवज्रम्।
नीलाख्यगोमेदविदूरकं च क्रमेण मुद्राधृतमिष्टसिद्ध्यै ॥ ६ ॥
रसे रसायने दाने धारणे देवतार्चने।
सुरक्ष्याणि सुजातीनि रत्नान्युक्तानि सिद्धये ॥ ७ ॥
माणिक्यं पद्मरागाख्यं द्वितीयं नीलगन्धि च।
कुशेशयदलच्छायं स्वच्छं स्निग्धं महत्स्फुटम् ॥ ८ ॥
वृत्तायतं समं ‡गात्रं माणिक्यं श्रेष्ठमुच्यते ॥ ९ ॥
नीलं गङ्गाम्बुसंभूतं नीलगर्भारुणच्छवि
पूर्वमाणिक्यवच्छ्रेष्ठमाणिक्यं नीलगन्धि तत् ॥ १० ॥
रन्ध्रकार्कश्यमालिन्यरौक्ष्यावैशद्यसंयुतम्।
चिपिटं लघु वक्रं च माणिक्यं दुष्टमष्टधा। ॥ ११ ॥
माणिक्यं दीपनं वृष्यं कफवातक्षयार्तिनुत्।
भूतवेतालपापघ्नं कर्मजव्याधिनाशनम् ॥ १२ ॥

---

* तार्क्ष्यमिति मरकतम्। † भिदुरमिति वज्रम्। ‡ गात्रमिति स्थूलम्।

---

१ क. ख. ग. घ. च. छ. ज. °श्चतुर्थकः। २ ग. °णयो ह्यमी। घ. °णयोऽप्यमी ॥२॥ ३ क. वैडूर्यं। ४ ख. °लरसाः स्मृ°। ५ क. भिडुरं। ६ क. विडूरजं। ७ ख. °विडूर°। ८ घ. सुलक्ष्माणि। ९ घ. सुजातानि। १० ज. स्निग्धमतिस्फु°। ११ ङ. गुरु स्फुटम्। १२ ग. °रौक्ष्यवै°। १३घ. वक्त्रं।

**अथ मौक्तिकम्**—ह्लादि श्वेतं लघु स्निग्धं रश्मिवन्निर्मलं महत् ।
ख्यातं तोयप्रभं वृत्तं मौक्तिकं नवधा शुभम् ॥ १३ ॥
मुक्ताफलं लघु हिमं मधुरं च कान्ति-
दृष्ट्यग्निपुष्टिकरणं विषहारि भेदि ।
वीर्यप्रदं जलनिधेर्जनिता च शुक्ति-
र्दीप्ता च पक्तिरुजमाशु हरेदवश्यम् ॥ १४ ॥
रूक्षाङ्गं निर्जलं श्यावं ताम्राभं लवणोपमम् ।
अर्धशुभ्रं च विकटं ग्रन्थिलं मौक्तिकं त्यजेत् ॥ १५ ॥
कफपित्तक्षयध्वंसि कासश्वासाग्निमान्द्यनुत् ।
पुष्टिदं वृष्यमायुष्यं दाहघ्नं मौक्तिकं मतम् ॥ १६ ॥

**अथ प्रवालम्**—पक्वबिम्बीफलच्छायं वृत्तायतमवक्रकम् ।
स्निग्धमव्रणकं स्थूलं प्रवालं सप्तधा शुभम् ॥ १७ ॥
पाण्डुरं धूसरं सूक्ष्मं सव्रणं कोण्डरान्वितम् ।
निर्भारं शुल्बवर्णं च प्रवालं नेष्यतेऽष्टधा ॥ १८ ॥
क्षयपित्तास्रकासघ्नं दीपनं पाचनं लघु ।
विषभूतादिशमनं विद्रुमं नेत्ररोगनुत् ॥ १९ ॥

**अथ तार्क्ष्यम्**— हरिद्वर्णं गुरु स्निग्धं स्फुरद्रश्मिचयं शुभम् ।
मसृणं भासुरं तार्क्ष्यं गात्रं सप्तगुणं मतम् ॥ २० ॥
कपिलं कर्कशं नीलं पाण्डु कृष्णं च लाघवम् ।
चिपिटं विकटं कृष्णं रूक्षं तार्क्ष्यं न शस्यते ॥ २१ ॥
ज्वरच्छर्दिविषश्वाससंनिपाताग्निमान्द्यनुत् ।
दुर्नामपाण्डुशोफघ्नं तार्क्ष्यमोजोविवर्धनम् ॥ २२ ॥

**अथ पुष्परागः**—पुष्परागं गुरु स्वच्छं स्निग्धं स्थूलं समं मृदु ।
कर्णिकारप्रसूनाभं मसृणं शुभमष्टधा ॥ २३ ॥
निष्प्रभं कर्कशं रूक्षं पीतं श्यामं नतोन्नतम् ।
कपिशं कपिलं पाण्डु पुष्परागं परित्यजेत् ॥ २४ ॥
पुष्परागं विषच्छर्दिकफवाताग्निमान्द्यनुत् ।
दाहकुष्ठास्रशमनं दीपनं पाचनं लघु ॥ २५ ॥

**अथ वज्रम्**—वज्रं च त्रिविधं प्रोक्तं नरो नारी नपुंसकम् ।
पूर्वं पूर्वमिह श्रेष्ठं रसवीर्यविपाकतः ॥ २६ ॥

---

१ ङ. रश्मिगुच्छनिर्मलं । २ क. ठ. निर्मलं । ३ ज. श्यामं । ४ क. ठ. ङ. बिम्बफ° । ५ क. रूक्षं । ६ ङ. कोटरान्वितम् । ७ घ. शुभ्रव° । ८ ङ. कृष्णमलाघवम् । ९ क. पीतश्यामं । १० ज. तथोन्नतम् ।

अष्टास्रं वाऽष्टफलकं षट्कोणमतिभासुरम्।
अम्बुदेन्द्रधनुर्वारितरं पुंवज्रमुच्यते ॥ २७ ॥
तदेव चिपिटाकारं स्त्रीवज्रं वर्तुलायतम्।
वर्तुलं कुण्ठकोणाग्रं किंचिद्गुरु नपुंसकम् ॥ २८ ॥
स्त्रीपुंनपुंसकं वज्रं योज्यं स्त्रीपुंनपुंसके।
व्यत्यासान्नैव फलदं पुंवज्रेण विना क्वचित् ॥ २९ ॥
श्वेतादिवर्णभेदेन तदेकैकं चतुर्विधम्।
ब्रह्मक्षत्रियविट्शूद्रं स्वस्ववर्णफलप्रदम् ॥ ३० ॥
उत्तमोत्तमवर्णं हि नीचवर्णफलप्रदम्।
न्यायोऽयं भैरवेणोक्तः पदार्थेष्वखिलेष्वपि ॥ ३१ ॥
आयुःप्रदं झटिति सद्गुणदं च वृष्यं दोषत्रयप्रशमनं सकलामयघ्नम्।
सूतेन्द्रबन्धवधसद्गुणकृत्प्रदीपनं मृत्युंजयं तदमृतोपममेव वज्रम् ॥३२॥
गैरत्रासश्च बिन्दुश्च रेखा च जलगर्भता।
सर्वरत्नेष्वमी पञ्च दोषाः साधारणा मताः ॥ ३३ ॥
क्षेत्रतोयभवा दोषा रत्नेषु न लगन्ति ते।
कुलत्थक्वाथके स्विन्नं कोद्रवक्वथितेन वा ॥ ३४ ॥
एकयामावधि स्विन्नं वज्रं शुध्यति निश्चितम्।
वज्रं मत्कुणरक्तेन चतुर्वारं विभावितम् ॥ ३५ ॥
सुगन्धिमूषिकामांसैर्वर्तितैर्मर्द्य वेष्टयेत्।
पुटेत्पुटैर्वराहाख्यैस्त्रिंशद्वारं ततः परम् ॥ ३६ ॥
ध्मात्वा ध्मात्वा शतं वारान्कुलत्थक्वाथके क्षिपेत्।
अन्यैरुक्तः शतं वारान्कर्तव्योऽयं विधिक्रमः ॥ ३७ ॥
कुलत्थक्वाथसंयुक्तलकुचद्रवपिष्टया।
शिलया लिप्तमूषायां वज्रं क्षिप्त्वा निरुध्य च ॥ ३८ ॥
अष्टवारं पुटेत्सम्यग्विशुष्कैश्च वनोत्पलैः।
शतवारं ततो ध्मात्वा निक्षिप्तं शुद्धपारदे ॥
निश्चितं म्रियते वज्रं भस्म वारितरं भवेत् ॥ ३९ ॥

---

१ क. ठ. ड. °स्रं चाष्ट°। २ ख. अर्बुदे°। ग. अम्बुदाम्बुघनं वारि°। ङ. अम्बुदेन्दुध°। ३ क. व्यत्स्यान्नै°। ४ क. ठ. ड. गारत्रासश्च। ग. ग्रासत्रासश्च। ङ. जारत्रासश्च। ५ ङ. °त्वा विज°। ६ ङ. सुगन्धमू°। ७ क. तितैः परिमर्द्य च। ङ. वर्तितैः परिवेष्ट्य च।

सत्यवाक्सोमसेनानीरेतद्वज्रस्य मारणम् ।
दृष्टप्रत्ययसंयुक्तमुक्तवान्रसकौतुकी ॥ ४० ॥
विलिप्तं मत्कुणस्यास्रे सप्तवारं विशोषितम् ॥ ४१ ॥
कासमर्दरसापूर्णे लोहपात्रे निवेशितम् ।
सप्तवारं परिध्मातं वज्रभस्म भवेत्खलु ॥ ४२ ॥
ब्रह्मज्योतिर्मुनीन्द्रेण[2] क्रमोऽयं परिकीर्तितः ।
नीलज्योतिर्लताकन्दे[3] घृष्टं[4] घर्मे विशोषितम् ॥ ४३ ॥
वज्रं भस्मत्वमायाति कर्मवज्ज्ञानवह्निना ।
मदनस्य फलोद्भूतरसेन क्षोणिनागकैः ॥ ४४ ॥
कृतकल्केन संलिप्य पुटेद्विंशतिवारकम् ।
वज्रचूर्णं भवेद्वर्यं योजयेच्च रसादिषु ॥ ४५ ॥
तद्वज्रं चूर्णयित्वाऽथ किंचिट्टङ्कणसंयुतम् ।
खरभूनागसत्त्वेन विंशेनाऽऽवर्तते[5] ध्रुवम् ॥
तुल्यस्वर्णेन तद्ध्मातं योजनीयं रसादिषु ॥ ४६ ॥
त्रिगुणेन रसेनैव संमर्द्य गुटिकीकृतम् ।
मुखे धृतं करोत्याशु चलद्दन्तविबन्धनम् ॥ ४७ ॥
त्रिंशद्भागमितं हि वज्रभसितं स्वर्णं कलाभागिकं
तारं चाष्टगुणं सितामृतवरं[6] रुद्रांशकं चाभ्रकम् ।
पादांशं खलु ताप्यकं वसुगुणं वैक्रान्तकं षड्गुणं
भागोऽप्युक्तरसे रसोऽयमुदितः षाड्गुण्यसंसिद्धये ॥ ४८ ॥

**अथ नीलम्**—जलनीलेन्द्रनीलं च शक्रनीलं तयोर्वरम् ।
श्वैत्यगर्भितनीलाभं लघु तज्जलनीलकम् ॥ ४९ ॥
काष्ण्र्यगर्भितनीलाभं सभारं शक्रनीलकम् ॥ ५० ॥
एकच्छायं गुरु स्निग्धं स्वच्छं पिण्डितविग्रहम् ।
मृदु मध्ये[7] लसज्ज्योतिः सप्तधा नीलमुत्तमम् ॥ ५१ ॥
*कोमलं †विहितं रूक्षं निर्भारं रक्तगन्धि[8] च ।
चिपिटाभं[9] संसूक्ष्मं[10] च जलनीलं चैव[11] सप्तधा ॥ ५२ ॥

---

* कोमलमिति पक्षवर्णम् । † विहितामित्यर्धभागेन संपूर्णवर्णमर्धेन कोमलम् ।

---

१ क. निषेचितम् । २ घ. °तिमुनी° । ३ ज. °तिलता° । ४ क. ठ. व्युष्टं । ५ ङ. ठ. ड. °वर्तये-द्ध्रुव° । ६ क. °तामृत° । ७ घ. °मध्योल्लस° । ८ घ. °क्तसन्धि । ९ ज. पिटिकाभिः । १० क. ट. ठ. ङ. सरूक्षं । घ. च सूक्ष्मं । ११ ङ. तु ।

श्वासकासहरं वृष्यं त्रिदोषघ्नं सुदीपनम् ।
विषमज्वरदुर्नामपापघ्नं नीलमीरितम् ॥ ५३ ॥

**अथ गोमेदः**—गोमेदःसमरागत्वाद्गोमेदं रत्नमुच्यते ।
सुस्वच्छगोजलच्छायं स्वच्छं स्निग्धं समं गुरु ।
निर्दलं मसृणं दीप्तं गोमेदं शुभमष्टधा ॥ ५४ ॥
विच्छायं लघु रूक्षाङ्गं चिपिटं पटलान्वितम् ।
निष्प्रभं पीतकाचाभं गोमेदं न शुभावहम् ॥ ५५ ॥
गोमेदं कफपित्तघ्नं क्षयपाण्डुक्षयंकरम् ।
दीपनं पाचनं रुच्यं त्वच्यं बुद्धिप्रबोधनम् ॥ ५६ ॥

**अथ वैदूर्यम्**—वैदूर्यं श्यामशुभ्राभं समं स्वच्छं गुरु स्फुटम् ।
भ्रमच्छुभ्रोत्तरीयेण गर्भितं शुभमीरितम् ॥ ५७ ॥
श्यामं तोयसमच्छायं चिपिटं लघु कर्कशम् ।
रक्तगर्भोत्तरीयं च वैदूर्यं नैव शस्यते ॥ ५८ ॥
वैदूर्यं रक्तपित्तघ्नं प्रज्ञायुर्बलवर्धनम् ।
पित्तप्रधानरोगघ्नं दीपनं मलमोचनम् ॥ ५९ ॥

**अथ रत्नशुद्धिः**—शुध्यत्यम्लेन माणिक्यं जयन्त्या मौक्तिकं तथा ।
विद्रुमं क्षारवर्गेण तार्क्ष्यं गोदुग्धकैस्तथा ॥ ६० ॥
पुष्परागं च संधानैः कुलत्थक्काथसंयुतैः ।
तन्दुलीयजलैर्वज्रं नीलं नीलीरसेन च ॥ ६१
रोचनाभिश्च गोमेदं वैदूर्यं त्रिफलाजलैः ॥ ६२ ॥

**अथ रत्नभस्मक्रमः**—लकुचद्रावसंपिष्टैः शिलागन्धकतालकैः ।
वज्रं विनाऽन्यरत्नानि म्रियन्तेऽष्टपुटैः खलु ॥ ६३ ॥
रामठं पञ्चलवणं क्षाराणां त्रितयं तथा ।
मांसद्रवोऽम्लवेतश्च चूलिकालवणं तथा ॥ ६४ ॥
स्थूलं कुम्भीफलं पक्वं तथा ज्वालामुखी शुभा ।
द्रवन्ती च रुदन्ती च पयस्या चित्रमूलकम् ॥ ६५ ॥
दुग्धं स्नुह्यास्तथार्कस्य सर्वं संमर्द्य यत्नतः ।
गोलं विधाय तन्मध्ये प्रक्षिपेत्तदनन्तरम् ॥ ६६ ॥

१ घ. रक्तमु°। २ क. ठ. ड. शुद्धम°। ३ क. ठ. ड. वैडूर्यं । ४ क. ठ. ड. अभ्रशुभ्रो°। ५ क. श्वामतो°। ६ क. पैत्यप्र°। ७ क. °सद्राव्याम्ल°। ङ. सद्रव्याम्ल°। ८ घ. स्थूलकु°।

गुणवन्नवरत्नानि जातिमन्ति शुभानि च ।
भूर्जे तं गोलकं कृत्वा सूत्रेणाऽऽवेष्ट्य यत्नतः ॥ ६७ ॥
पुनर्वस्त्रेण संवेष्ट्य दोलायन्त्रे निधाय च ।
सर्वाम्लयुक्तसंधानपरिपूर्णघटोदरे ॥ ६८ ॥
अहोरात्रत्रयं यावत्स्वेदयेत्तीव्रवह्निना ।
तस्मादाहृत्य संक्षाल्य रत्नजां द्रुतिमाहरेत् ॥ ६९ ॥
रत्नतुल्यप्रभा लघ्वी देहलोहकरी शुभा ।
मुक्ताचूर्णं तु सप्ताहं वेतसाम्लेन मर्दितम् ॥ ७० ॥
जम्बीरोदरमध्ये तु धान्यराशौ विनिक्षिपेत् ।
सप्ताहादुद्धृतं चैव पुटे धृत्वा द्रुतिर्भवेत् ॥ ७१ ॥
वज्रवल्ल्यन्तरस्थं च कृत्वा वस्त्रं निरोधयेत् ।
अम्लभाण्डगतं स्वेद्यं सप्ताहाद्द्रवतां व्रजेत् ॥ ७२ ॥

**अथ वैक्रान्तम्**—श्वेतवर्णं तु वैक्रान्तमम्लवेतसभावितम् ।
सप्ताहान्नात्र संदेहः खरघर्मे द्रवत्यसौ ॥ ७३ ॥
केतकीस्वरसं ग्राह्यं सैन्धवं स्वर्णपुष्पिका ।
इन्द्रगोपकसंयुक्तं सर्वं भाण्डे विनिक्षिपेत् ॥ ७४ ॥
सप्ताहं स्वेदयेत्तस्मिन्वैक्रान्तं द्रवतां व्रजेत् ।
लोहाष्टके तथा वज्रवापनात्स्वेदनाद्द्रुतिः ॥ ७५ ॥
जायते नात्र संदेहो योगस्यास्य प्रभावतः ।
कुरुते योगराजोऽयं रत्नानां द्रावणं परम् ॥ ७६ ॥
कुसुम्भतैलमध्येतु संस्थाप्या द्रुतयः पृथक् ।
तिष्ठन्ति चिरकालं तु प्राप्ते कार्ये नियोजयेत् ॥ ७७ ॥
सूर्यादिग्रहनिग्रहा[10]पहरणं दीर्घायुरारोग्यदं
सौभाग्योदय[11]भाग्यवश्यविभवोत्साहप्रदं धैर्यकृत् ।
दुश्छाया[12]चलधूलिसं[13]गतिभवालक्ष्मीहरं सर्वदा
रत्नानां परिधारणं निगदितं[14] भूतादि[15]निर्नाशनम् ॥ ७८ ॥ ४२६ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रत्नानां शुद्ध्यादिनिरूपणं नाम चतुर्थोऽध्यायः ॥ ४ ॥

---

१ ङ. भूर्जेण गो°। २ ङ. ढ. °जां द्रुति°। ३ घ. °साम्लैर्विपाचित°। ४ घ. पुटं दत्वा द्रुतिं हरेत्। ५ ठ. ङ. घ. निरुत्थितम् । ङ. निरुध्य च । ६ ख. °भागगतं°। ७ क. °देहो घनघ°। ८ क. त्यलम् । ९ ङ. वज्रे वा°। १० छ. °हाय ह°। ११ छ. °यभोग्य°। १२ घ. °यानयधू°। १३ ङ. °गमभ°। १४ ङ. सुगदितं । १५ घ. °दिभीनाश°। ङ. °दिविध्वंसनम् ।

## अथ पञ्चमोऽध्यायः ।

### [ अथ लोहानि ]

**अथ हेमगुणाः**—शुद्धं लोहं कनकरजतं भानुलोहाश्मसारं
पूतीलोहं द्वितयमुदितं नागवङ्गाभिधानम् ।
मिश्रं लोहं त्रितयमुदितं पित्तलं कांस्यवर्तं
धातुर्लोहे लुह इति मतः सोऽपि कर्षार्थवाची ॥ १ ॥
प्राकृतं सहजं वह्निसंभूतं खनिसंभवम् ।
रसेन्द्रवेधसंजातं स्वर्णं पञ्चविधं स्मृतम् ॥ २ ॥
आयुर्लक्ष्मीप्रभाधीस्मृतिकरमखिलव्याधिविध्वंसि पुण्यं
भूतावेशप्रशान्तिस्मरभरसुखदं सौख्यपुष्टिप्रकाशि ।
गाङ्गेयं चाथ रूप्यं गदहरमजराकारि मेहापहारि
क्षीणानां पुष्टिकारि स्फुटमतिकरणं वीर्यवृद्धिप्रकारि ॥ ३ ॥
ब्रह्माण्डं संवृतं येन रजोगुणभुवा खलु ।
तत्प्राकृतमिति प्रोक्तं देवानामपि दुर्लभम् ॥ ४ ॥
ब्रह्मा येनाऽऽवृतो जातः सुवर्णेन जरायुणा ।
तन्मेरुरूपतां यातं सुवर्णं सहजं हि तत् ॥ ५ ॥
विसृष्टमग्निना शैवं तेजः पीतं सुदुःसहम् ।
अभूत्सर्वं समुद्दिष्टं सुवर्णं वह्निसंभवम् ॥ ६ ॥
एतत्स्वर्णत्रयं दिव्यं वर्णैः षोडशभिर्युतम् ।
धारणादेव तत्कुर्याच्छरीरमजरामरम् ॥ ७ ॥
तत्र तत्र गिरीणां हि जातं खनिषु यद्भवेत् ।
तच्चतुर्दशवर्णाढ्यं भक्षितं सर्वरोगहृत् ॥ ८ ॥
रसेन्द्रवेधसंभूतं तद्वेधजमुदाहृतम् ।
रसायनं महाश्रेष्ठं पवित्रं वेधजं हि तत् ॥ ९ ॥
स्निग्धं मेध्यं विषगदहरं बृंहणं वृष्यमग्र्यं
यक्षोन्मादप्रशमनपरं देहरोगप्रमाथि ।
मेधाबुद्धिस्मृतिसुखकरं सर्वदोषामयघ्नं
रुच्यं दीपि प्रशमितरुजं स्वादुपाकं सुवर्णम् ॥ १० ॥

---

१ ख. पूतीर्लोहं । ङ. पूतिर्लोहं । २ क. ठ. ड. सोऽपक° । ग. सोऽपि तत्त्वार्थवाची । घ. सोऽप्यनेकार्थवाची । ३ क. °कारणं वीर्यवृद्धेः° । ४ क. °भूत्स्वर्णं स° । ५ ग. पापघ्नं । ६ ग. °गरहरं । ७ क. लोहसत्त्वप्र° । ङ. लोहदाहप्र° । ८ क. °तजरं स्वा° ।

सौख्यं वीर्यं बलं हन्ति रोगवर्गं करोति च ।
अशुद्धं न मृतं स्वर्णं तस्माच्छुद्धं समाचरेत् ॥ ११ ॥
कर्षप्रमाणं तु सुवर्णपत्रं शरावरुद्धं पटुधातुयुक्तम् ।
अङ्गारसंस्थं प्रहरार्धमानं ध्मानेन तत्स्यान्ननु वर्णपूर्णम् ॥१२॥
लोहानां मारणं श्रेष्ठं सर्वेषां रसभस्मना ।
मूलीभिर्मध्यमं प्राहुः कनिष्ठं गन्धकादिभिः ॥ १३ ॥
अरिलोहेन लोहस्य मारणं दुर्गुणप्रदम् ।
कृत्वा कण्टकवेध्यानि स्वर्णपत्राणि लेपयेत् ।
लुङ्गाम्बुभस्मसूतेन म्रियते दशभिः पुटैः ॥ १४ ॥
द्रुते विनिक्षिपेत्स्वर्णे लोहमानं मृतं रसम् ।
विचूर्ण्य लुङ्गतोयेन दरदेन समन्वितम् ॥ १५ ॥
जायते कुङ्कुमच्छायं स्वर्णं द्वादशभिः पुटैः ॥ १६ ॥
हेम्नः पादं मृतं सूतं पिष्टमम्लेन केनचित् ।
पत्रे लिप्त्वा पुटैः पच्यादष्टभिर्म्रियते ध्रुवम् ॥ १७ ॥
मण्डूकास्थिवसाटङ्कहयलालेन्द्रगोपकैः ।
प्रतिवापेन कनकं सुचिरं तिष्ठति द्रुतम् ॥ १८ ॥
चूर्णं सुरेन्द्रगोपानां देवदालीफलद्रवैः ।
भावितं सदृशं हेम करोति जलवद्द्रुतम् ॥ १९ ॥
एतद्भस्म सुवर्णजं कटुघृतोपेतं द्विगुञ्जोन्मितं
लीढं हन्ति जरां क्षयाग्निसदनं श्वासं च कासारुचिम् ।
ओजोधातुविवर्धनं बलकरं पाण्ड्वामयध्वंसनं
पथ्यं सर्वविषापहं गरहरं दुष्टग्रहण्यादिनुत् ॥ २० ॥
[ क्षेपकः । बलं च वीर्यं हरते नराणां रोगव्रजं कोपयतीव काये ।
असौख्यकारं च सदैव हेमापक्वं सदोषं मरणं करोति ॥ २१ ॥

**अथ रजतम्**—सहजं खनिसंजातं कृत्रिमं [12] त्रिविधं मतम् ।
रजतं पूर्वपूर्वं हि स्वगुणैरुत्तरोत्तरम् ॥ २२ ॥
कैलासाद्यद्रिसंभूतं सहजं रजतं भवेत् ।
तत्स्पृष्टं [13] हि सकृद्व्याधिनाशनं देहिनां भवेत् ॥ २३ ॥

१ क. च. °मारयेत् । २ क. सुवर्णपत्रं तु शरावरुद्धं कर्षप्रमाणं प° । ग. सुवर्णपत्रं तनु कर्षमानं शरावरुद्धं पटुभस्मयुक्तम् । ३ क. ठ. ड. ध्मातेन । ४ ख. पूर्णवर्णम् । ५ ख. जपाकुसुमवच्छायं । ६ ग. °टैः पाच्यं दशभि° । ड. °टैः पश्चाद° । ७ ख. °यमोरेन्द्र° । ८ ख. प्रतीवा° । ९ क. सदृढं । ग. सुभृशं हेम्नः करोति अत्यन्तद्रुतम् । १० अ. °वद्द्रवम् । ११ क. °रुचा । १२ क. च त्रिधा म° । १३ ग. °ष्टं सहजव्याधि° ।

हिमाचलादिकूटेषु यद्रूप्यं जायते हि तत् ।
खनिजं कथ्यते तज्ज्ञैः परमं हि रसायनम् ॥ २४ ॥
श्रीरामपादुकान्यस्तं वङ्गं यद्रूप्यतां गतम् ।
तत्पादरूप्यमित्युक्तं कृत्रिमं सर्वरोगनुत् ॥ २५ ॥
घनं स्[1]वच्छं गुरु स्निग्धं दाहे छेदे सितं मृदु ।
शङ्खाभं मसृणं स्फोटरहितं रजतं शुभम् ॥ २६ ॥
दाहे रक्तं च पीतं च कृष्णं रूक्षं स्फुटं लघु ॥
स्थूलाङ्गं कर्कशाङ्गं च रजतं त्याज्यमष्टधा ॥ २७ ॥
रूप्यं विपाकमधुरं तुवराम्लसारं
  शीतं सरं[2] परमलेखनकं च रुच्यम् ।
स्निग्धं च वातकफजिज्जठराग्निदीपि
  [3]बल्यं परं स्थिरवयस्करणं च मे[4]ध्यम् ॥ २८ ॥
रौप्यं शीतं कषायाम्लं स्निग्धं वातहरं गुरु ।
रसायनविधानेन सर्वरोगापहारकम् ॥ २९ ॥
तैले तक्रे गवां मूत्रे ह्या[5]रनाले कुलित्थजे ।
क्रमान्निषेचयेत्तप्तं द्रावे द्रावे तु सप्तधा ॥
स्वर्णादिलोहपत्राणां शुद्धिरेषा प्रशस्यते ॥ ३० ॥
आयुः शुक्रं बलं हन्ति तापविड्बन्धरोगकृत् ।
अशु[6]द्धं न मृतं तारं शुद्धं मार्यमतो बुधैः ॥ ३१ ॥
नागेन टङ्कणेनैव वापितं शुद्धिमृच्छति ॥ ३२ ॥
तारं त्रिवारं निक्षिप्तं तैले ज्योतिष्मतीभवे ।
खर्परे भस्मचूर्णाभ्यां परितः पालिकां चरेत् ॥ ३३ ॥
तत्र रूप्यं विनिक्षिप्य समसीससमन्वितम् ।
जातसीसक्षयं यावद्धमेत्तावत्पुनः पुनः ॥ ३४ ॥
इत्थं संशोधितं रूप्यं योजनीयं रसादिषु ।
लकुचद्रवसूताभ्यां ता[7]रपिष्टं [8]प्रलेपयेत् ॥ ३५ ॥
ऊर्ध्वाधो गन्धकं दत्वा मूषा[9]मध्ये निरुध्य च ।
स्वेदयेद्वालुकायन्त्रे दिनमेकं दृढाग्निना ॥ ३६ ॥

---

१ ग. स्वच्छगुणं स्नि°। घ.ङ. मृदु । २ क.ठ. °रं च लघुले°। ३ ग. बलप्रदं स्थि°। ४ ङ. वृष्यम् । ज. सेव्यम् । ५ ङ. काञ्जिके च । ६ छ. °शुद्धममृ°। ७ क. तारपत्रं । ङ. तारपिष्टीं प्रकल्पयेत् । ८ ग. प्रकल्पयेत् । ९ क. °षागर्भे नि°।

स्वाङ्गशीतां च तां पिष्टिं साम्लतालेन मर्दिताम् ।
पुटेद्द्वादशवाराणि भस्मीभवति रूप्यकम् ॥ ३७ ॥
माक्षीकचूर्णलुङ्गाम्लमर्दितं पुटितं शनैः ।
त्रिंशद्वारेण तत्तारं भस्मसाज्जायतेतराम् ॥ ३८ ॥
भाव्यं ताप्यं स्नुहीक्षीरैस्तारपत्राणि लेपयेत् ।
मारयेत्पुटयोगेन निरुत्थं जायते ध्रुवम् ॥ ३९ ॥
तारपत्रं चतुर्भागं भागैकं शुद्धतालकम् ।
मर्द्यं जम्बीरजद्रावैस्तारपत्राणि लेपयेत् ॥ ४० ॥
शोषयेदन्धयन्त्रे च त्रिंशदुत्पलकैः पचेत् ।
चतुर्दशपुटैरेवं निरुत्थं जायते ध्रुवम् ॥ ४१ ॥
सप्तधा नरमूत्रेण भावयेद्देवदालिकाम् ।
तच्चूर्णवापमात्रेण द्रुतिः स्यात्स्वर्णतारयोः ॥ ४२ ॥
भस्मीभूतं रजतममलं तत्समौ व्योमभानू
सर्वैस्तुल्यं त्रिकटु सवरं सारघाज्येन युक्तम् ।
लीढं प्रातः क्षपयतितरां यक्ष्मपाण्डूदराशः
श्वासं कासं नयनजरुजः पित्तरोगानशेषान् ॥ ४३ ॥

**अथ ताम्रम्**—म्लेच्छं नेपालकं चेति तयोर्नेपालमुत्तमम् ।
नेपालादन्यखन्युत्थं म्लेच्छमित्यभिधीयते ॥ ४४ ॥
सितकृष्णारुणच्छायमतिवामि कठोरकम् ।
क्षालितं च पुनः कृष्णमेतन्म्लेच्छकताम्रकम् ॥ ४५ ॥
सुस्निग्धं मृदुलं शोणं घनघातक्षमं गुरु ।
निर्विकारं गुणश्रेष्ठं ताम्रं नेपालमुच्यते ॥ ४६ ॥
पाण्डुरं कृष्णशोणं च लघु स्फुटनसंयुतम् ।
रूक्षाङ्गं सदलं ताम्रं नेष्यते रसकर्मणि ॥ ४७ ॥
ताम्रं तिक्तकषायकं च मधुरं पाकेऽथ वीर्योष्णकं
साम्लं पित्तकफापहं जठररुक्कुष्ठामजंत्वन्तकृत् ।
ऊर्ध्वाधः परिशोधनं विषयकृत्स्थौल्यापहं क्षुत्करं
दुर्नामक्षयपाण्डुरोगशमनं नेत्र्यं परं लेखनम् ॥ ४८ ॥

१ ज. तरम् । २ क. ठ. ड. °येद्दानपे तक्र त्रिं° । घ. °येदन्धयेत्तक्र त्रिं° । ३ क. ख. घ. ङ. ठ. ड. शतधा । ४ ज. लोहभान् । ५ ङ. कवरं । ६ घ. °रमाज्यं° । ७ ङ. °ति नृणां य° । ८ क. °दराशांक्षश्वा° । ज. °दरार्तः श्वा° । ९ ङ. °च्छायं भेदि वा° । १० ग. सोष्णं । ११ क. °क्षुष्ठज्वरार्तिन्त° । ग. °कुष्ठामयध्वंसनम् ।

अशुद्धं ताम्रमायुघ्नं कान्तिवीर्यबलापहम् ।
वान्तिमूर्छाभ्रमोत्क्लेदं न मृतं कुष्ठशूलकृत् ॥ ४९ ॥
उत्क्लेदभेदभ्रमदाहमोहास्ताम्रस्य दोषाः खलु दुर्धरास्ते ।
विशोधनात्तद्विगतस्वदोषं सुधासमं स्याद्रसवीर्यपाके ॥ ५० ॥
ताम्रं क्षाराम्लसंयुक्तं द्रावितं दत्तगैरिकम् ।
निक्षिप्तं महिषीतक्रे छगणे सप्तवारकम् ॥
पञ्चदोषविनिर्मुक्तं सप्तवारेण जायते ॥ ५१ ॥
ताम्रनिर्मलपत्राणि लिप्त्वा निम्ब्वम्बुसिन्धुना ।
ध्मात्वा सौवीरकक्षेपाद्विशुध्यत्यष्टवारतः ॥ ५२ ॥
निम्ब्वम्बुपटुलिप्तानि तापितान्यष्टवारकम् ।
विशुध्यन्त्यर्कपत्राणि निर्गुण्ड्या रसमज्जनात् ॥ ५३ ॥
गोमूत्रेण पचेद्यामं ताम्रपत्रं दृढाग्निना ।
शुध्यते नात्र संदेहो मारणं चाप्यथोच्यते ॥ ५४ ॥
जम्बीररससंपिष्टरसगन्धकलेपितम् ।
शुल्वपत्रं शरावस्थं त्रिपुटैर्याति पञ्चताम् ॥ ५५ ॥
[अथान्यग्रन्थे।] अथवा मारितं ताम्रमम्लेनैकेन मर्दितम् ।
तद्गोलं सूरणस्यान्ता रुद्ध्वा सर्वत्र लेपयेत् ॥ ५६ ॥
शुष्कं गजपुटे पच्यात्सर्वदोषहरं भवेत् ।
वान्तिं भ्रान्तिं विरेकं च न करोति कदाचन ॥ ५७ ॥ इति रसरत्नाकरे ॥
ताम्रपत्राणि सूक्ष्माणि गोमूत्रे पञ्चयामकम् ।
क्षिप्त्वा रसेन भाण्डे तद्द्विगुणं देहि गन्धकम् ॥ ५८ ॥
अम्लपर्णिप्रपिष्टचाथ मर्दितो देहि ताम्रके ।
सम्यङ्निरुध्य भाण्डे तमग्निं ज्वालय यामकम् ॥ ५९ ॥
भस्मीभवति ताम्रं तद्यथेष्टं विनियोजयेत् ॥ ६० ॥
शुल्बतुल्येन सूतेन बलिना तत्समेन च ।
तदर्धांशेन तालेन शिलया च तदर्धया ॥ ६१ ॥
विधाय कज्जलीं श्लक्ष्णां भिन्नकज्जलसंनिभाम् ।
पञ्चाध्यायविनिर्दिष्टगर्भयन्त्रोदरान्तरे ॥ ६२ ॥

---

१ क. °त्क्लेदानम्°। २ ग. ठ. ड. °निर्दल°। ३ ङ. ड. °गुण्डीर°। ४ क. ठ. ड. लेपितम्। ५ ङ. तापेन। ६ क. °पर्णी प्रपिष्याथ। ७ क. ह्यमितो।

कज्जलीं ताम्रपत्राणि पर्यायेण विनिक्षिपेत्।
[1]पचेद्यामपर्यन्तं स्वाङ्गशीतं [2]चूर्णयेत् ॥ ६३ ॥
तत्तद्रोगहरानुपानसहितं ताम्रं द्विवल्लोन्मितं
[3]संलीढं परिणामशूलमुदरं शूलं च पाण्डुज्वरम्।
गुल्मप्लीहयकृत्क्षयाग्निसदनं [4]मेहं च मूलामयं
दुष्टां च ग्रहणीं हरेद्ध्रुवमिदं तत्सोमनाथाभिधम्॥ ६४ ॥
[इति सोमनाथी ताम्रम्।

[ग्रन्थान्तरे। सूताद्द्विगुणितं ताम्रपत्रं कन्यारसैः प्लुतम्।
पिष्ट्वा तुल्येन [5]बलिना भाण्डमध्ये विनिक्षिपेत् ॥ ६५ ॥
छन्नं शरावकेणैतत्तदूर्ध्वं लवणं [6]त्यजेत्।
मुखे शरावकं दत्वा वह्निं यामचतुष्टयम् ॥ ६६ ॥
अवचूर्ण्यैव तच्छुल्बं वल्लमात्रं प्रयोजयेत्।
पिप्पलीमधुना [7]सार्धं सर्वरोगेषु योजयेत् ॥ ६७ ॥
श्वासं कासं क्षयं पाण्डुमग्निमान्द्यमरोचकम्।
गुल्मप्लीहयकृन्मूर्छा[8]शूलपक्त्यर्थमुत्तमम् ॥
दोषत्रयसमुद्भूतानामयाञ्जयति ध्रुवम् ॥ ६८ ॥
रोगानुपानसहितं जयेद्धातुगतं ज्वरम्।
रसे रसायने चैव योजये[9]द्युक्तमात्रया ॥ ६९ ॥

**अथायः**—मुण्डं तीक्ष्णं च कान्तं च त्रिप्रकारमयः स्मृतम्।
**अथ मुण्डम्**—मृदु कुण्ठं [10]कडारं च त्रिविधं मुण्डमुच्यते ॥ ७० ॥
द्रुतद्रा[11]वमविस्फोटं चिक्कणं मृदु तच्छुभम्।
हतं[12] यत्प्रसरेद्दुःखात्तत्कुण्ठं मध्यमं स्मृतम् ॥ ७१ ॥
यद्धतं भज्यते [13]भङ्गे कृष्णं स्या[14]त्तत्कडारकम् ॥ ७२ ॥
मुण्डं परं मृदुलकं कफवातशूल-
मूलाममेहगदकामलपाण्डुहारि।
गुल्मामवातजठरार्तिहरं प्रदीपि
शोफापहं रुधिरकृत्खलु कोष्ठशोधि ॥ ७३ ॥

---

१ ङ. पचेत्त्रियाम°। २ ङ. ड. विचूर्णयेत्। ३ क. सलीढं। ४ क. मेदं। ५ क. ठ. ड. गन्धेन। ६ क. क्षिपेत्। ७ ग. साकं। ८ घ. °शूलं पक्त्यर्धमुत्तरम्। ९ ग. °येदुक्त°। १० ग. कुठारं। ११ क. ख. ग. घ. ङ. ठ. ड. °वमविस्फो°। १२ क. °तं संप्रस°। १३ क. भमे। १४ ग. °त्तत्कुठार°।

अशुद्धलोहं न हितं निषेवणा-
दायुर्बलं कान्तिविनाशि निश्चितम् ।
हृदि प्रपीडां तनुते ह्यपाटवं
रुजं करोत्येव वि[1]शुध्य मारयेत् ॥ ७४ ॥

**अथ तीक्ष्णम्**—खरं सारं च हृ[2]न्नालं ता[3]रावट्टं च वा[4]जिरम् ।
काललोहाभिधानं च षड्विधं तीक्ष्णमुच्यते ॥ ७५ ॥
परुषं *[5]पोगरोन्मुक्तं भङ्गे पार[6]दवच्छवि ।
नमने भङ्गुरं यत्तत्खरलोहमुदाहृतम् ॥ ७६ ॥
अङ्कक्षया च वङ्गं च पोगरस्याभिधात्रयम् ।
चिकुरं भङ्गुरं लोहात्पोगरं तत्परं मतम् ॥ ७७ ॥
वेगभंगुरुधारं यत्सारलोहं तदीरितम् ।
पोगराभासकं पाण्डुभू[8]मिकं सारमीरितम् ॥ ७८ ॥
कृष्णपाण्डुवपुश्चञ्चुबीजतुल्योरुपोगरम् ।
छेदने चातिपरुषं हृन्नालमिति कथ्यते ॥ ७९ ॥
पोगरैर्वज्रसंकाशैः सूक्ष्मरेखैश्च सान्द्रकैः ।
निचितं श्यामलाङ्गं च वाजिरं तत्प्रकीर्त्यते ॥ ८० ॥
नीलकृष्णप्र[10]भं सान्द्रं मसृणं गुरु भासुरम् ।
लोहघातेऽप्यभङ्गात्मधारं कालायसं मतम् ॥ ८१ ॥
रूक्षं स्यात्खरलोहकं [11]सुमधुरं पाकेऽथ वीर्ये हिमं
तिक्तोष्णं कफपित्तकुष्ठजठरप्लीहामपाण्ड्वार्तिनुत् ।
सद्यः शूलयकृद्गदक्षयजरामेहामवातापहं
दीप्तं चातिरसायनं बलकरं दुर्नामदाहापहम् ॥ ८२ ॥
खरलोहात्परं सर्वमेकैकस्माच्छतोत्तरम् ॥ ८३ ॥

**अथ कान्तम्**—भ्रामकं चुम्बकं चैव कर्षकं द्रावकं तथा ।
एवं चतुर्विधं कान्तं रोमकान्तं च पञ्चमम् ॥८४॥
एकद्वित्रिचतुष्पञ्चसर्वतोमुखमेव तत् ।
पीतं कृष्णं तथा रक्तं त्रिवर्णं स्यात्पृथक्पृथक् ॥ ८५ ॥

---

* [12]पोगरमित्यलकवत्कुटिलरेखाः ॥

---

१ क. ठ. ङ. विशोध्य । २ क. हुन्नालं । ग. फोन्नालं । ३ ग. तारवट्टं । ४ क. बाजिरम् । ५ ग. योगरो° । ६ ग. °दसच्छ° । ङ. °दकच्छ° । ७ ग. °ङ्कच्छाया° । ८ घ. °मिजं सा° । ९ ङ. °षं ह्योन्ना° । १० घ. प्रभासा° । ११ ङ. समधुरं । १२ ग ङ. ठ. योगर° ।

क्रमेण देवतास्तत्र ब्रह्मविष्णुमहेश्वराः।
स्पर्शवेधि भवेत्पीतं कृष्णं श्रेष्ठं रसायने ॥ ८६ ॥
रक्तवर्णं तथा वाऽपि रसबन्धे प्रशस्यते।
भ्रामकं तु कनिष्ठं स्याच्चुम्बकं मध्यमं तथा ॥ ८७ ॥
उत्तमं कर्षकं चैव द्रावकं चोत्तमोत्तमम्।
भ्रामयेल्लोहजातं तु तत्कान्तं भ्रामकं मतम् ॥ ८८ ॥
चुम्बयेच्चुम्बकं कान्तं कर्षयेत्कर्षकं तथा।
साक्षाद्यद्द्रावयेल्लोहं तत्कान्तं द्रावकं भवेत् ॥ ८९ ॥
तद्रोमकान्तं स्फुटिताद्यतो रोमोद्गमो भवेत्।
कनिष्ठं स्यादेकमुखं मध्यं द्वित्रिमुखं भवेत् ॥ ९० ॥
चतुष्पञ्चमुखं श्रेष्ठमुत्तमं सर्वतोमुखम्।
भ्रामकं चुम्बकं चैव व्याधिनाशे प्रशस्यते ॥ ९१ ॥
रसे रसायने चैव कर्षकं द्रावकं हितम्।
मदोन्मत्तगजः सूतः कान्तमङ्कुशमुच्यते ॥ ९२ ॥
क्षेत्रं खात्वा ग्रहीतव्यं तत्प्रयत्नेन धीमता।
मारुतातपविक्षिप्तं वर्जयेन्नात्र संशयः ॥ ९३ ॥
पात्रे यस्य प्रसरति जले तैलबिन्दुर्न लिप्तं
गन्धं हिङ्गु त्यजति च तथा तिक्ततां निम्बकल्कः।
पाके दुग्धं भवति शिखराकारतां नैति भूमौ
कान्तं लोहं तदिदमुदितं लक्षणोक्तं न चान्यत् ॥ ९४ ॥
कान्तायोऽतिरसायनोत्तरतरं स्वस्थे चिरायुःप्रदं
स्निग्धं मेहहरं त्रिदोषशमनं शूलाभंमूलापहम्।
गुल्मप्लीहयकृत्क्षयामपहरं पाण्डूदरव्याधिनु-
त्तिक्तोष्णं हिमवीर्यकं किमपरं योगेन सर्वार्तिनुत् ॥ ९५ ॥
सम्यगौषधकल्पानां लोहकल्पः प्रशस्यते।
तस्मात्सर्वप्रयत्नेन लोहमादौ विमारयेत् ॥ ९६ ॥
नायः पचेत्पञ्चपलादर्वागूर्ध्वं त्रयोदशात्।
आदौ मन्त्रस्ततः कर्म कर्तव्यं मन्त्र उच्यते ॥ ९७ ॥

---

१ ङ. ठ. ड. चापि। २ क. स्फुटनाद्य°। ङ. स्फुटितं यतो। ३ ग. ज्ञात्वा। ४ च. यत्र। ५ ङ. ठ. ड. लिप्तो। ६ ङ. ठ. ड. हिङ्गुगन्धं निमुञ्चति तथा तिक्ततां निम्बकल्कः। ७ ङ. पच्यं। ज. पाच्यं। ८ ङ. °रकं नै°। ९ ङ. स्वच्छं। १० ध. °मशूला°। ११ क. शुद्धलोहं।

ॐ अमृतोद्भवाय[1] स्वाहा । अनेन मन्त्रेण लोहमारणम् ।
लक्षोत्तरगुणं सर्वं लोहं स्याद्रुत्तरोत्तरम् ।
कान्तं कोटिगुणं तत्र तदप्येवं गुणोत्तरम् ॥ ९८ ॥
शशक्षतजसंमिश्रं[2][3] त्रिवारं परितापितम् ।
मुण्डादि सकलं लोहं सर्वदोषान्विमुञ्चति ॥ ९९ ॥
क्वाथ्यमष्टगुणे तोये त्रिफलाषोडशं पलम् ।
तत्क्वाथे पादशेषे तु लोहस्य पलपञ्चकम् ॥ १०० ॥
कृत्वा पत्राणि तप्तानि सप्तवारं निषेचयेत् ।
एवं प्रलीयते धातुर्गिरिजो लोहसंभवः ॥ १०१ ॥
सामुद्रलवणोपेतं[4] तप्तं निर्वापितं खलु ।
त्रिफलाक्वथिते नूनं गिरिदोषमयस्त्यजेत् ॥ १०२ ॥
विश्वाफलजलक्वाथादयो[5][6] दोषमुदस्यति ।
यद्वा फलत्रयोपेतं[7] गोमूत्रे क्वथितं क्षणम् ॥ १०३ ॥
रेतितं घृतसंयुक्तं क्षिप्त्वाऽयः खर्परे पचेत् ।
चालयल्लोहदण्डेन यावत्क्षिप्तं तृणं दहेत् ॥ १०४ ॥
पिष्ट्वा पिष्ट्वा पचेदेवं पञ्चवारमतः परम् ।
धात्रीफलरसैर्यद्वा त्रिफलाक्वथितोदकैः ॥
पुटेल्लोहं चतुर्वारं भवेद्वारितरं खलु ॥ १०५ ॥
स्नेहाक्तं लोहरजो मूत्रे स्वरसेऽपि[8] रात्रिधात्रीणाम्[9] ।
पृथगेवं[10] सप्तकृत्वा भर्जितमखिलामये योज्यम् ॥ १०६ ॥
तीक्ष्णलोहस्य पत्राणि निर्दलानि दृढेऽनले[11] ।
ध्मात्वा क्षिपेज्जले सद्यः पाषाणोलूखलोदरे ॥ १०७ ॥
खण्डयेद्गाढनिर्घातैः[12] स्थूलया लोहपारया ।
तन्मध्ये[13] स्थूलखण्डानि रुद्ध्वा मल्लद्वयान्तरे ॥ १०८ ॥
ध्मात्वा क्षिप्त्वा[14] जले सम्यक्पूर्ववत्कण्डयेत्खलु ।
तच्चूर्णं[15] सूतगन्धाभ्यां पुटेद्विंशतिवारकम् ॥ १०९ ॥
पुटे पुटे विधातव्यं पेषणं दृढवत्तरम् ।
एवं भस्मीकृतं लोहं तत्तद्रोगेषु योजयेत् ॥ ११० ॥

---

१ ग. घ. °बाभवाय । २ ग. °शरक्ते च सं° । ३ ङ. °संलिप्तं त्रि° । ४ क. समु° । ५ ग. °लदल° । ६ ङ. °क्वाथे देयं दो° । ७ क. °पेतगो° । ८ °हमजामूत्रे स्वरसेऽम्रिरा° । ९ ङ. °सेन मिलित-धात्रीणाम् । १० ज. पृथगेव सप्तकृत्वो । ११ ङ. दृढाग्निना । १२ ङ. ठ. ड. कण्डयेद्दृढनिर्घातैः । १३ क. °न्मध्यात्स्थूल° । १४ ग. सिक्त्वा । १५ क. °र्णं गुडग° ।

कान्तायः कमनीयकान्तिजननं पाण्ड्वामयोन्मूलनं
यक्ष्मव्याधिनिबर्हणं गरहरं दोषत्रयोन्मूलनम् ।
नानाकुष्ठनिबर्हणं बलकरं वृष्यं वयःस्तंभनं
सर्वव्याधिहरं रसायनवरं भौमामृतं नापरम् ॥ १११ ॥

[ इति रससिन्धूत्थो गुणपाठः ।

हिङ्गुलस्य पलान्पञ्च नारीस्तन्येन पेषयेत् ।
तेन लोहस्य पत्राणि लेपयेत्पलपञ्चकम् ॥ ११२ ॥
रुद्ध्वा गजपुटे पच्यात्कषायैस्त्रैफलैः पुनः ।
जम्बीरैरारनालैर्वा विंशत्यंशेन हिङ्गुलम् ॥ ११३ ॥
पिष्ट्वा रुद्ध्वा पचेल्लोहं तद्द्रवैः पाचयेत्पुनः ।
चत्वारिंशत्पुटैरेवं कान्तं तीक्ष्णं च मुण्डकम् ॥ ११४ ॥
म्रियते नात्र संदेहो दत्वा दत्वैव हिङ्गुलम् ।
अथ पूर्वोदितं तीक्ष्णं *वसुभैल्लकवासयोः ॥ ११५ ॥
पुटितं पत्रतोयेन त्रिंशद्वाराणि यत्नतः ।
शोणितं जायते भस्म कृतसिन्दूरविभ्रमम् ॥ ११६ ॥
यद्वा तीक्ष्णदलोद्भूतं रजश्च त्रिफलाजलैः ।
पिष्ट्वा दत्वौदनं किंचिच्चक्रिकां मविधाय च ॥ ११७ ॥
शोषयित्वाऽतियत्नेन मपचेत्पञ्चभिः पुटैः ।
रक्तवर्णं हि तद्भस्म योजनीयं यथायथम् ॥ ११८ ॥
मत्स्याक्षीगन्धवाहूलीकैर्लकुचद्रवेणे स्थितैः ।
विलिप्य सकलं लोहं मत्स्याक्षीकल्कपेषितम् ॥ ११९ ॥
भस्त्राभ्यां सुदृढं ध्मात्वा त्रिशूलीनिर्गमावधि ।
अथोद्धृत्य क्षिपेत्काथे त्रिफलागोजलात्मके ॥ १२० ॥
तस्मादाहृत्य संताड्य मृतमादाय लोहकम् ।
पुनश्च पूर्ववद्ध्मात्वा मारयेदखिलायसम् ॥ १२१ ॥
खण्डयित्वा ततो गन्धं गुडत्रिफलकाम्भसा ।
पुटैस्त्रिंशतिवाराणि निरुत्थं भस्म जायते ॥ १२२ ॥

---

* वसुभल्लेति श्वेतपुनर्नवा ।

---

१ क. सिन्धुस्थो गु°। ख. सिन्धुस्थो गु°। २ ग. °भद्रक°। ख. भट्टक°। ङ. भद्रक°। ३ ग. °थातथ । ४ ग. °वंपर्णितः । ५ ङ. °ल्कलेपितम् । ६ क. वधिः । ७ क. गन्धगुडत्रिफलया सह । ङ. गन्धगुडत्रिफलयाऽऽयसा । ग. गन्धगुडं त्रि° । ८ घ. पुटैस्त्रिंश° । ङ. ज. पुटैर्द्विंश° ।

समगन्धमयश्चूर्णं कुमारीवारिमर्दितम् ।
पुञ्जीकृतं कियत्कालमवश्यं म्रियते ह्ययः ॥ १२३ ॥
जम्बीररससंयुक्ते दरदे तप्तमायसम् ।
बहुवारं विनिक्षिप्तं म्रियते नात्र संशयः ॥ १२४ ॥
गोमूत्रैस्त्रिफला क्वाथ्या तत्कषायेण भावयेत् ।
त्रिसप्ताहं प्रयत्नेन दिनैकं मर्दयेत्पुनः ॥ १२५ ॥
रुद्ध्वा गजपुटे पच्याद्दिनं क्वाथेन मर्दयेत् ।
दिवा मर्द्यं पुटेद्रात्रावेकविंशद्दिनावधि ॥ १२६ ॥
एकविंशत्पुटैश्चैव म्रियते त्रिविधं ह्ययः ।
त्रिःसप्तकृत्वो गोमूत्रे जालिनीभस्मभावितम् ॥
शोषयेत्तस्य वापेन तीक्ष्णं मूषागतं द्रवेत् ॥ १२७ ॥
सुरदालीभस्म गलितं त्रिःसप्तकृत्वोऽथ गोलकं शुष्कम् ।
वापेन सलिलसदृशं करोति मूषागतं तीक्ष्णम् ॥ १२८ ॥
एतत्स्यादपुनर्भवं हि भसितं लोहस्य दिव्यामृतं
सम्यक्सिद्धरसायनं त्रिकटुकीवेल्लाज्यमध्वन्वितम् ।
हन्यान्निष्कमितं जरामरणजव्याधींश्च सत्पुत्रदं
दिष्टं श्रीगिरिशेन कालयवनोद्धूत्यै पुरा तत्पितुः ॥ १२९ ॥
यत्पात्राध्युषिते तोये तैलबिन्दुर्न सर्पति ।
तारेणाऽऽवर्तते यत्तत्कान्तलोहं तनूकृतम् ॥ १३० ॥
अयसामुत्तमं सिञ्चेत्तप्तं तप्तं वरारसे ।
एवं शुद्धानि लोहानि पिष्टान्यम्लेन केनचित् ॥ १३१ ॥
मृतसूतस्य पादेन प्रलिप्तानि पुटानले ।
[10]पंचेत्तुल्यस्य वा ताप्यगन्धाश्महरतेजसः ॥ १३२ ॥
तप्तं क्षाराम्लसंलिप्तं शशरक्तेन[11] दापितम् ।
कान्तलोहं भवेच्छुद्धं सर्वदोषविवर्जितम् ॥ १३३ ॥
शुद्धसूतं द्विधा गन्धं खल्वे[12] तु कृतकज्जलीम् ।
द्वयोः समं लोहचूर्णं मर्दयेत्कन्यकाद्रवैः ॥ १३४ ॥

---

१ घ. पुटीकृतं कियत्कालमायसं म्रियते ध्रुवम् । २ ख. °लमापस्थं म्रि° । ३ ङ. त्रिसप्तकृत्वा । ४ ङ. त्रिसप्तकृत्वोत्थगो° । ५ क. °क्सिद्धिर° । ६ क. सत्पा° । ७ ग. °रेण व° । ८ क. न तु कृतम् । ९ क. प्रलिप्यानि । १० घ. पचेत्तुल्येन वा तेन गन्धाश्महरतेजसा । ११ क. °क्ते निधापितम् । १२ घ. °ल्वेन कृतकज्जलम् ।

यामद्वयात्समुद्धृत्य तद्गोलं कांस्यपात्रके ।
आच्छाद्यैरण्डपत्रैश्च यामार्धेऽत्युष्णता भवेत् ॥ १३५ ॥
धान्यराशौ न्यसेत्पश्चात्त्रिदिनान्ते समुद्धरेत् ।
संपेष्य गालयेद्वस्त्रे सत्यं वारितरं भवेत् ॥ १३६ ॥
कान्तं तीक्ष्णं च मुण्डं च निरुत्थं जायते ध्रुवम् ।
स्वर्णादीन्मारयेदेवं चूर्णं कृत्वा च लोहवत् ॥ १३७ ॥
सिद्धयोगो ह्ययं ख्यातः सिद्धानां सुमुखागतः ॥ १३८ ॥
अनुभूतं मया सत्यं सर्वरोगजरापहम् ।
त्रिफलामधुसंयुक्तं सर्वरोगेषु योजयेत् ॥ १३९ ॥
लोहं जन्तुविकारपाण्डुपवनक्षीणत्वपित्तामय-
　स्थौल्यार्शोग्रहणीज्वरार्तिकफजिच्छोफप्रमेहप्रणुत् ।
गुल्मप्लीहविषापहं बलकरं कुष्ठाग्निमान्द्यप्रणु-
　त्सौख्यालम्बि रसायनं मृतिहरं कान्तादिकं किट्टवत् ॥१४०॥
मृतानि लोहानि रसीभवन्ति
　निघ्नन्ति युक्तानि महामयानि ।
अभ्यासयोगाद्दृढदेहसिद्धिं
　कुर्वन्ति रुग्जन्मजराविनाशनम् ॥ १४१ ॥ रामराजीस्थम् ॥
पक्वजम्बूनिभच्छायं कान्तलोहं तदुत्तरम् ।
सुरदालिभवं भस्म नरमूत्रेण गालितम् ।
त्रिसप्तवारं तत्क्षारं वापेत्कान्तं हतिर्भवेत् ॥ १४२ ॥
गन्धकं कान्तपाषाणं चूर्णयित्वा समं समम् ।
द्रुते लोहे प्रतीवापो देयो लोहाष्टकं द्रवेत् ॥ १४३ ॥
देवदाल्या द्रवैर्भाव्यं गन्धकं दिनसप्तकम् ।
तेन प्रवापमात्रेण लोहास्तिष्ठन्ति सूतवत् ॥ १४४ ॥
अक्षाङ्गारैर्धमेत्किट्टं लोहजं तद्द्रवां जलैः ।
सेचयेदक्षपात्रान्तः सप्तवारं पुनः पुनः ॥ १४५ ॥
मण्डूरोऽयं समाख्यातश्चूर्णं श्लक्ष्णं नियोजयेत् ।
गोमूत्रैस्त्रिफलाक्वाथ्या तत्क्वाथे [10]सेचयेच्छनैः ॥ १४६ ॥

---

१ क. ताम्रपात्रके । २ ग. मृतम् । ३ ङ. °नां समु° । ४ ग. नाशम् । ५ ग. °पे तीक्ष्णं ह° । ङ. °पे कान्ते ह° । ६ ग. °न्तं द्रुति° । ७ ट. °वापस्तेन लो° । ८ क. प्रयोजयेत् । ९ ग. तप्तं शोध्यं त्रिमप्रधा । १० क. सिञ्चयेच्छनैः ।

लोहकिट्टं सुतप्तं[1] तु यावज्जीर्यति[2] तत्स्वयम् ।
तच्चूर्णं जायते पेष्यं मण्डूरोऽयं प्रयोजयेत् ॥ १४७ ॥
ये गुणा मारिते मुण्डे ते गुणा मुण्डकिट्टके ।
तस्मात्सर्वत्र मण्डूरं रोगशान्त्यै प्रयोजयेत् ॥ १४८ ॥
किट्टाद्दशगुणं मुण्डं मुण्डात्तीक्ष्णं शतोन्मितम् ॥
तीक्ष्णाल्लक्षगुणं कान्तं भक्षणात्कुरुते नृणाम् ॥१४९ ॥
तस्मात्कान्तं सदा सेव्यं जरामृत्युहरं नृणाम् ॥ १५० ॥

[अथान्यग्रन्थे । अशुद्धलोहं न हितं निषेवणा-
दायुर्बलं कान्तिविनाशि निश्चितम् ।
हृदि प्रपीडां तनुते ह्यपाटवं
रुजं करोत्येव विशोध्य मारयेत् ॥ १५१ ॥
आयुःप्रदाता बलवीर्यकर्ता रोगप्रहर्ता मदनस्य कर्ता ।
अयःसमानं न हि किंचिदन्यद्रसायनं श्रेष्ठतमं हि जन्तोः॥१५२॥

**अथ वङ्गम्**—खुरकं मिश्रकं चेति द्विविधं वङ्गमुच्यते ।
खुरं तत्र गुणैः श्रेष्ठं मिश्रकं न हितं मतम् ॥ १५३ ॥
धवलं मृदुलं स्निग्धं द्रुतद्रावं सगौरवम् ।
निःशब्दं खुरवङ्गं स्यान्मिश्रकं श्यामशुभ्रकम्[3] ॥ १५४ ॥
वङ्गं तिक्तोष्णकं[4] रूक्षमीषद्वातप्रकोपनम् ।
मेहश्लेष्मामयघ्नं च[5] मेदोघ्नं कृमिनाशनम् ॥ १५५ ॥
द्रावयित्वा निशायुक्ते क्षिप्तं निर्गुण्डिकारसे ।
विशुध्यति त्रिवारेण खुरवङ्गं न संशयः ॥ १५६ ॥
अम्लतक्र[6]विनिक्षिप्तं[7] वर्षाभू[8]विषतिन्दुभिः[9] ।
कट्वलाबुगतं[10] वङ्गं[11] द्वितयं परिशुध्यति ॥ १५७ ॥
शुध्यति नागो वङ्गो घोषा रविरातपे[12]ऽपि मुनिसंख्यैः ।
निर्गुण्डीरससेकैस्तन्मूलरजःप्रवापैश्च ॥ १५८ ॥
सतालेनार्कदुग्धेन लिप्त्वा वङ्गदलानि[13] च ।
बोधिचिञ्चात्वचः[14] क्षारैर्दद्याल्लघुपुटानि च ॥ १५९ ॥

---

१ क. सुसंतप्तं° । २ ग. °प्तं तद्याव° । ३ क. श्यावशु° । ४ ग. °तीक्ष्णोष्णकं° । ५ ग. च मन्दाग्निकृ° । ६ ङ. °तक्रं वि° । ७ क. °निष्पिष्टं व° । ८ क. °भूवृष° । ९ ग. °षसिन्दु° । ङ. °षसिन्धुभिः । १० ग. ठ. कट्वकलाम्बुगतं वङ्गं द्वितयं । ङ. कटुफलाम्बुगतैर्वङ्गाद्वितयं ११ क. वङ्गाद्वितयं । १२ क. °विरातपैश्च मु° । ख. °विरपि च मु° । १३ क. °लान्यथ । १४ क. °त्वचा क्षा° ।

मर्दयित्वा चरेद्भस्म तद्रसादिषु कीर्तितम् ।
मद्राव्य खर्परे वङ्गं षोडशांशं रसं क्षिपेत् ॥ १६० ॥
स्वल्पस्वल्पालकं दत्वा भारद्वाजस्य काष्ठतः ।
मर्दयित्वा चरेद्भस्म तद्रसादिषु कीर्तितम् ॥ १६१ ॥
पलाशद्रवयुक्तेन वङ्गपत्राणि लेपयेत् ।
तालेन पुटितं पश्चान्म्रियते नात्र संशयः ॥ १६२ ॥
भल्लाततैलसंलिप्तं वङ्गं वस्त्रेण वेष्टितम् ।
चिञ्चापिप्पलपालाशकाष्ठाग्नौ याति पञ्चताम् ॥ १६३ ॥
वङ्गभस्मसमं कान्तं व्योमभस्म च तत्समम् ।
मर्दयेत्कनकाम्भोभिर्निम्बपत्ररसैरपि ॥ १६४ ॥
दाडिमस्य मयूरस्य रसेन च पृथक्पृथक् ।
भूपालावर्तभस्माथ विनिक्षिप्य समांशकम् ॥ १६५ ॥
गोमूत्रकंसिलाधातुजलैः सम्यग्विमर्दयेत् ।
ततो गुग्गुलतोयेन मर्दयित्वा दिनाष्टकम् ॥ १६६ ॥
विशोष्य परिचूर्ण्याथ समभागेन योजयेत् ।
घृष्टं बन्धुकनिर्यासैर्नाकुलीबीजचूर्णकैः ॥ १६७ ॥
ततः क्षिपेत्करण्डान्तर्विधाय पटगालितम् ।
गोतक्रपिष्टरजनीसारेण सह पाययेत् ॥ १६८ ॥
चतुर्भिर्वल्लकैस्तुल्यं रम्यं वङ्गं रसायनम् ।
निश्चितं तेन नश्यन्ति मेहा विंशतिभेदकाः ॥ १६९ ॥
शालयो मुद्गसूपं च नवनीतं तिलोद्भवम् ।
पटोलं तिक्ततुण्डीरं तक्रं पथ्याय शस्यते ॥ १७० ॥

**अथ सीसकम्**—द्रुतद्रावं महाभारं छेदे कृष्णसमुज्ज्वलम् ।
पूतिगन्धं बहिःकृष्णं शुद्धं सीसमतोऽन्यथा ॥ १७१ ॥
अत्युष्णं सीसकं स्निग्धं तिक्तं वातकफापहम् ।
प्रमेहतोयदोषघ्नं दीपनं चामवातनुत् ॥ १७२ ॥
सिन्धुवारजटाकान्तीहरिद्राचूर्णकं क्षिपेत् ।
द्रुतेनागेऽथ निर्गुण्ड्यास्त्रिवारं निक्षिपेद्रसे ॥ १७३ ॥

---

१ क. भस्मेद्भस्म । २ क. स्वल्पं च तालकं । ३ क. भस्मताम् । ४ क. ठ. ड. °कशिला° । ५ क. भृष्टबन्धुरनिर्यासैरनाकुली° । ग. °भृष्टबन्धुलनिर्यासैर्वाकुचीबी° । ६ क. °तक्रे पि° । ७ क. कृष्णं स° । ८ क. शुद्धमी° । ९ क. सिन्दुवा° । १० क. °टाकान्ति ह° । ख. °टाकान्ति ह° । ग. °टाकान्ति ह° ।

नागः शुद्धो भवेदेवं मूर्छास्फोटादिनाऽऽचरेत् ।
तिर्यगाकारचुल्ल्यां तु तिर्यग्वक्त्रघटं न्यसेत् ॥ १७४ ॥
तं च वक्त्रं विना सर्वं गोपयेद्यत्नतो मृदा ।
भ्रष्टयन्त्राभिधे तस्मिन्यन्त्रे सीसं विनिक्षिपेत् ॥ १७५ ॥
पलविंशतिकं नागमधस्तीव्रानलं क्षिपेत् ।
द्रुते नागे क्षिपेत्सूतं शुद्धं कर्षमितं शुभम् ॥ १७६ ॥
विघट्य निक्षिपेत्क्षारमकैकं हि पलं पलम् ।
अर्जुनस्याक्षवृक्षस्य महाराजगिरेरपि ।
दाडिमस्य मयूरस्य क्षिप्त्वा क्षारं पृथक्पृथक् ॥ १७७ ॥
एवं विंशतिरात्राणि पचेत्तीव्रेण वह्निना ।
विघट्टयन्दृढं दोर्भ्यां लोहदर्व्या प्रयत्नतः ॥ १७८ ॥
रक्तं तज्जायते भस्म कपोतच्छायमेव वा ।
नागं दोषविनिर्मुक्तं जायतेऽतिरसायनम् ॥ १७९ ॥
हतमुत्थापितं सीसं दशवारेण सिध्यति ।
तन्मृतं सीसकं सर्वदोषमुक्तं रसायनम् ॥ १८० ॥
अश्वत्थचिञ्चात्वग्भस्म नागस्य चतुरंशतः ।
क्षिपेन्नागं पचेत्पात्रे चालयेल्लोहचाटुना ॥ १८१ ॥
यामाद्भस्म तदुद्धृत्य भस्मतुल्या मनःशिला ।
जम्बीरैरारनालैर्वा पिष्ट्वा रुद्ध्वा पुटे पचेत् ॥ १८२ ॥
स्वाङ्गशीतं पुनः पिष्ट्वा विंशत्यंशशिलायुतम् ।
अम्लेनैव तु यामैकं पूर्ववत्पाचयेत्पुटे ॥ १८३ ॥
एवं षष्टिपुटैः पक्वो नागः स्यात्पुनिरुत्थितः ।
शिलया रविदुग्धेन नागपत्राणि लेपयेत् ॥ १८४ ॥
मारयेत्पुटयोगेन निरुत्थं जायते तथा ।
एवं नागोद्भवं भस्म ताप्यभस्मार्धभागिकम् ॥ १८५ ॥
पादं पादं क्षिपेद्भस्म शुल्बस्य विमलस्य च ।
कान्ताभ्रसत्त्वयोश्चापि स्फटिकस्य पृथक्पृथक् ॥ १८६ ॥
सर्वमेकत्र संचूर्ण्य पुटेत्त्रिफलवारिणा ।
त्रिंशद्वनगिरिण्डैश्च त्रिंशद्वारं विचूर्ण्य तत् ॥ १८७ ॥

---

१क. °र्यग्वक्त्रं घ°। २ क. मृष्ट° । घ. भृष्टंय°। ३ क. घ. °स्मिन्पात्रे सी°। ४ घ. विघृष्य । ज. विदध्य । ५ क. °ढं वापेर्लोह°। ६ क. शुध्यति । ७ ङ. यथा । ८ ख. ताप्यं भ°। ९ क. °गिरण्डै°। १० ज. °चूर्णयेत् ।

व्योषवेल्लकचूर्णैश्च समांशैः सह मेलयेत् ॥ १८८ ॥
मध्वाज्यसहितं हन्ति प्रलीढं वल्लमात्रया ।
अशीतिवातजान्रोगान्धनुर्वातं विशेषतः ॥ १८९ ॥
कफरोगानशेषांश्च मूत्ररोगांश्च सर्वशः ।
श्वासं कासं क्षयं पाण्डुं श्वयथुं शीतिकाज्वरम् ॥ १९० ॥
ग्रहणीमामदोषं च वह्निमान्द्यं सुदुर्जरम् ।
सर्वानुदकदोषांश्च तत्तद्रोगानुपानतः ॥ १९१ ॥

**अथ पित्तलम्**—रीतिका काकतुण्डी च द्विविधं पित्तलं भवेत् ।
संतप्ता काञ्जिके क्षिप्त्वा ताम्राभा रीतिका मता ॥ १९२ ॥
एवं या जायते कृष्णा काकतुण्डीति सा मता ।
रीतिस्तिक्तरसा रूक्षा जन्तुघ्नी सास्रपित्तनुत् ।
कृमिकुष्ठहरा योगात्सोष्णवीर्या च शीतला ॥ १९३ ॥
काकतुण्डी गतस्नेहा तिक्तोष्णा कफपित्तनुत् ।
यकृत्प्लीहहरा शीतवीर्या च परिकीर्तिता ॥ १९४ ॥
गुर्वी मृद्वी च पीताभा साराङ्गी ताडनक्षमा ।
सुस्निग्धा मसृणाङ्गी च रीतिरेतादृशी शुभा ॥ १९५ ॥
पाण्डुपीता खरा रूक्षा बर्बरा ताडनक्षमा ।
पूतिगन्धा तथा लघ्वी रीतिर्नेष्टा रसादिषु ॥ १९६ ॥
तप्ता क्षिप्त्वा च निर्गुण्डीरसे श्यामारजोन्विते ।
पञ्चवारेण संशुद्धिं रीतिरायाति निश्चितम् ॥ १९७ ॥
सुवर्णरीतिकाचूर्णं भक्षितं विष्ठितं पुनः ।
छागेन कृष्णवर्णेन मत्तेन तरुणेन च । ॥ १९८ ॥
तल्लिप्तं खर्परे दग्धं द्रुतिं मुञ्चति शोभनाम् ॥ १९९ ॥
चतुर्दशलसद्वर्णसुवर्णसदृशच्छविः ।
देहलोहकरी प्रोक्ता युक्ता रसरसायने ॥ २०० ॥
निम्बूरसशिलागन्धवेष्टिता पुटिताऽष्टधा ।
रीतिरायाति भस्मत्वं ततो योज्या यथायथम् ॥ २०१ ॥
ताम्रवन्मारणं तस्याः कृत्वा सर्वत्र योजयेत् ।
मृतारकूटकं कान्तं व्योमसत्त्वं च मारितम् ॥ २०२ ॥

---

१ ग. शीतकं ज्व°। घ. शीतकज्व°। २ ख. संतप्त्वा। ३ ङ. ताम्रभा। ४ ग. कृष्णकु°। ५ घ. °ण्डी त्वतिस्ने°। ६ ङ. तप्त्वा। ७ क. रीतिर्मुञ्चति शोभनम्।

त्र्यं समांशकं तुल्यव्योषं जन्तुघ्नसंयुतम् ।
ब्रह्मबीजाजमोदाग्निभल्लाततिलसंयुतम् ॥ २०३ ॥
सेवितं निष्कमात्रं हि जन्तुघ्नं कुष्ठनाशनम् ।
विशेषाच्छ्वेतकुष्ठघ्नं दीपनं पाचनं हितम् ॥ २०४ ॥

**अथ कांस्यम्**—अष्टभागेन ताम्रेण द्विभागकुटिलेन च ।
विद्रुतेन भवेत्कांस्यं तत्सौराष्ट्रभवं शुभम् ॥ २०५ ॥
तीक्ष्णशब्दं मृदु स्निग्धमीषच्छ्यामलशुभ्रकम् ।
निर्मलं दाहरक्तं च षोढा कांस्यं प्रशस्यते ॥ २०६ ॥
तत्पीतं दहने ताम्रं खरं रूक्षं घनासहम् ।
मर्दनादागतज्योतिः सप्तधा कांस्यमुत्सृजेत् ॥ २०७ ॥
कांस्यं लघु च तिक्तोष्णं लेखनं दृक्प्रसादनम् ।
क्रिमिकुष्ठहरं वातपित्तघ्नं दीपनं हितम् ॥ २०८ ॥
घृतमेकं विना चान्यत्सर्वं कांस्यगतं नृणाम् ।
भुक्तमारोग्यसुखदं हितं सात्म्यकरं तथा ॥ २०९ ॥
तप्तं कांस्यं गवां मूत्रे वापितं परिशुध्यति ।
म्रियते गन्धतालाभ्यां निरुत्थं पञ्चभिः पुटैः ॥ २१० ॥
त्रिक्षारं पञ्चलवणं सप्तधाऽम्लेन भावयेत् ।
कांस्यारघोषपत्राणि तेन कल्केन लेपयेत् ॥
रुद्ध्वा गजपुटे पक्वं शुद्धिमायाति नान्यथा ॥ २११ ॥

**अथ वर्तलोहम्**—कांस्यार्करीतिलोहाहिजातं तद्वर्तलोहकम् ।
तदेव पञ्चलोहाख्यं लोहविद्भिरुदाहृतम् ॥ २१२ ॥
हिमाम्लं कटुकं रूक्षं कफपित्तविनाशनम् ।
रुच्यं त्वच्यं क्रिमिघ्नं च नेत्र्यं मलविशोधनम् ॥ २१३ ॥
तद्भाण्डे साधितं सर्वमन्नव्यञ्जनसूपकम् ।
अम्लेन वर्जितं चातिदीपनं पाचनं हितम् ॥ २१४ ॥
द्रुतमश्वजले क्षिप्तं वर्तलोहं विशुध्यति ॥ २१५ ॥
म्रियते गन्धतालाभ्यां पुटितं वर्तलोहकम् ।
तेषु [10]तेष्विह योगेषु योजनीयं यथाविधि ॥ २१६ ॥

---

१ ग. °व्योषज°। २ ग. °गखुरकेन । ३ ट. तत्तप्तं । ४ क. मन्दनादं गतज्योति स°। ५ क. °मिकोटिह°। ६ क. पञ्चकटुकं । ७ क. मर्दयेत् । ८ ख. °स्यारकुटप°। ९ क. °हानि जा°। ग. °हादि जा°॥
१० ख. तेष्वपि । ङ. तेष्वथ ।

जातिमद्भिर्विशुद्धैश्च विधिना परिसाधितैः[1]।
रसोपरसलोहाद्यैः सूतः सिध्यति नान्यथा ॥ २१७ ॥
रत्नानि लोहानि वराटशुक्तिपाषाणजातं खुरशृङ्गशल्यम्।
महारसाद्येषु कठोरदेहं भस्मीकृतं तत्खलु सूतयोग्यम्[2] ॥२१८॥
वज्राणां द्रावणार्थाय सत्त्वं भूनागजं ब्रुवे[3]।
तदेव परमं तेजः सूतराजेन्द्रवज्रयोः ॥ २१९ ॥
धौतं[4] भूनागसंभूतं मर्दयेद्भृङ्गजद्रवैः।
निम्बुद्रवैश्च निर्गुण्ड्याः स्वरसैस्त्रिदिनं पृथक् ॥ २२० ॥
तद्द्रावणगणोपेतं[5] संमर्द्य वटकीकृतम्।
निरुध्य दृढमूषायां द्विदण्डं* प्रधमेद्दृढम् ॥ २२१ ॥
स्वतः शीतं समाहृत्य पट्टके विनिवेश्य तत्।
रवकान्राजिकातुल्यान्रेणूनतिभरान्वितान् ॥
द्वादशांशार्कसंयुक्तान्धमित्वा रवकांश्चरेत्[6] ॥ २२२ ॥
प्रक्षाल्य रवकानाशु समादाय प्रयत्नतः।
वज्रादिद्रावणं तेन प्रकुर्वीत यथेप्सितम् ॥ २२३ ॥
खरसत्त्वमिदं प्रोक्तं रसायनमनुत्तमम्।
द्वित्रिमूषासु चैकस्यां सत्त्वं भवति निश्चयः[7] ॥ २२४ ॥
भुजङ्गमानुपादाय चतुष्प्रस्थसमन्वितान्।
सुवर्णरूप्यताम्रायस्कान्तसंभूतभूमिजान्[8] ॥ २२५ ॥
प्रक्षाल्य रजनीतोयैः शीतलैश्च जलैरपि ॥ २२६ ॥
उपोषितं मयूरं वा शूरं वा चरणायुधम्।
क्रमेण चारयित्वाऽथ तद्विष्ठां समुपाहरेत् ॥ २२७ ॥
क्षाराम्लैः सह संपेष्य विशोष्य च खरातपे।
ततः खर्परके क्षिप्त्वा भर्जयित्वा मषीं चरेत् ॥ २२८ ॥
मषीं द्रावणवर्गेण संयुक्तां संप्रमर्दिताम्।
निरुध्य[9] कोष्ठिकामध्ये प्रधमेद्घटिकाद्वयम् ॥
शीतलीभूतमूषायाः खोटमाहृत्य पेषयेत् ॥ २२९ ॥

* दण्डमिति घटिका।

१ घ. परिशोधितैः। २ क. योज्यम्। ३ क. ब्रुवे। ग. वपेत्। ज. भवेत्। ४ ङ. धौतभू°। ५ घ. तत्तद्द्रावग°। ६ ज. °वकान्पचेत्। ७ ख. निश्चयम्। ङ. निश्चितम्। ८ ङ. ज. °भूतिभू°। ९ क. °ध्य क्रौञ्चिका°।

प्रक्षाल्य [1]खकानाशु समादाय प्रयत्नतः ।
सुवर्णमानवद्ध्मात्वा [2]नैवं कृत्वा नियोजयेत् ॥ २३० ॥
भूनागोद्भवसत्त्वमुत्त[3]मतमं श्रीसोमदेवोदितं
दत्तं पादमितं [4]द्विषाणकनकेनैकंगतेनो[5]र्मिकाम् ।
तद्धौताम्बुवि[6]लेपनं स्थिरचरोद्भूतं विषं [7]नेत्ररु-
क्शूलं मूलगदं च कर्णजरुजो हन्यात्प्रसूतिग्रहम् ॥ २३१ ॥

**अथ तैलपातनविधिः**—मूलान्युत्तरवारुण्या [8]जर्जरीकृत्य काञ्जिके ।
क्षिपेद[9]ङ्कोल्लबीजानां [10]पेषिकां [11]झर्झरीकृताम् ॥ २३२ ॥
तत्तैलं घृतवत्स्त्यानं ग्राह्यं तत्तु यथाविधि ।
संपेष्योत्तरवारुण्याः [12]पेटकार्या दलान्यथ ॥ २३३ ॥
काञ्जिकेन ततस्तेन कल्केन परिमर्दयेत् ।
रजश्चाङ्कोल्लबीजानां तद्बद्ध्वा विरलाम्बरे ॥ २३४ ॥
तद्विलम्ब्याऽऽतपे तीव्रे तस्याधश्चषकं न्यसेत् ।
तस्मिन्निपतितं तैलमादेयं श्वित्रनाशनम् ॥ २३५ ॥
अङ्कोलबीजसंभूतं चूर्णं संमर्द्य काञ्जिकैः ।
एकरात्रोषितं तत्तु पिण्डीकृत्य ततः परम् ॥ २३६ ॥
स्वेदयेत्क[13]न्दुके यन्त्रे घटिकाद्वितयं ततः ।
तां च पिण्डीं दृढे वस्त्रे बद्ध्वा निष्पीड्य काष्ठतः ॥ २३७ ॥
अधःपात्रस्थितं तैलं समाहृत्य नियोजयेत् ।
एवं कन्दुकयन्त्रेण सर्वतैलान्युपाहरेत् ॥ २३८ ॥
अङ्कोल्लस्यापि तैलं स्यात्काकतुण्ड्या [14]संमूलया ।
बाकूचीदेवदाल्योश्च कर्कोटीमूलतो भवेत् ॥ २३९ ॥
अपामार्गकषायेण तैलं स्याद्विषमुष्टिजम् ।
मूलक्वाथैः कुमार्याश्च तैलं [15]जैपालजं हरेत् ॥ २४० ॥
क्वाथे रक्तापमार्गस्य बाकूचीतैलमाहरेत् ।
कृष्णायाः काकतुण्ड्याश्च बीजचूर्णानि कारयेत् ॥ २४१ ॥

---

१ ग. कान्सूक्ष्मान्समा°। ङ. °कान्पांसून्समा°। २ ख. खं । ३ क. °ममतं श्री°। ४ क. ठ. द्विशाण°। ५ ख. °र्मिकम् । ६ ख. °लेपितं स्थि°। ७ ङ. नेत्र्यरु°। ८ क. कर्करीकृत्य । ख. झर्झरीकृत्य । ९ क. °ङ्कोलबी°। १० ज. पेशिकां । ११क. कर्करीकृताम् । घ. जर्जरीकृताम् । १२ ग. पट्टकार्या । १३ क. °न्दुकाय°। घ. °त्कटुकाय°। १४ घ. सुमूलया । १५ घ. नेपालजं ।

कान्तपाषाणचूर्णं च एकीकृत्य विशोधयेत् ।
धान्यराशिगतं पश्चादुद्धृतं तैलमाहरेत् ॥ ४२ ॥ ७३८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये लोहशोधनमारणादिनिरूपणं नाम पञ्चमोऽध्यायः ॥ ५ ॥

---

## अथ षष्ठोऽध्यायः ।

### [ अथ शिष्योपनयनम् । ]

रसशास्त्राणि सर्वाणि समालोच्य यथाक्रमम् ।
साधकानां हितार्थाय प्रकटीक्रियतेऽधुना ॥ १ ॥
न क्रमेण विना शास्त्रं न शास्त्रेण विना क्रमः ।
शास्त्रं क्रमयुतं ज्ञात्वा यः करोति स सिद्धिभाक् ॥ २ ॥
आचार्यो ज्ञानवान्दक्षो रसशास्त्रविशारदः ।
मन्त्रसिद्धो महावीरो निश्चलः शिववत्सलः ॥ ३ ॥
देवीभक्तः सदाधीरो देवतायागतत्परः ।
सर्वाम्नायविशेषज्ञः कुशलो रसकर्मणि ॥ ४ ॥
एवं लक्षणसंयुक्तो रसविद्यागुरुर्भवेत् ।
गुरुभक्ताः सदाचाराः सत्यवन्तो दृढव्रताः ॥ ५ ॥
निरालस्याः स्वधर्मज्ञाः सदाऽऽज्ञापरिपालकाः ।
दम्भमात्सर्यनिर्मुक्ताः कुलाचारेषु दीक्षिताः ॥ ६ ॥
अत्यन्तसाधकाः शान्ता मन्त्राराधनतत्पराः ।
इत्येवंलक्षणैर्युक्ताः शिष्याः स्युः कार्यसिद्धये ॥ ७ ॥
सहायाः सोद्यमास्तत्र यथा शिष्यास्ततोऽधिकाः ।
कुलीनाः स्वामिभक्ताश्च कर्तव्या रसकर्मणि ॥ ८ ॥
नास्तिका ये दुराचाराश्चुम्बका गुरुतोऽपरात् ।
विद्यां ग्रहीतुमिच्छन्ति चौर्यच्छद्मखलोत्सवात् ॥ ९ ॥
न तेषां सिध्यते किंचिन्मणिमन्त्रौषधादिकम् ।
कुर्वन्ति यदि मोहेन नाशयन्ति स्वकं धनम् ॥ १० ॥
इह लोके सुखं नास्ति परलोके तथैव च ।
तस्माद्भक्तिबलादेव संतुष्यति यथा गुरुः ॥ ११ ॥

---

१ घ. ङ. ड. विशोधयेत् । ट. निरोधयेत् । २ क. पश्चादुद्धृत्य । ३ ग. समालोक्य । ४ ख. °सिद्धो म° । ५ ग. शिक्षिताः । ६ ग. °स्युः सुतासि° । ७ क. चौर्याच्छ° ।

तदा शिष्येण संग्राह्या रसविद्याऽऽत्मसिद्धये ।
हस्तमस्तकयोगेन वरं लब्ध्वा सुसाधयेत् ॥ १२ ॥
आतङ्करहिते देशे धर्मराज्ये मनोरमे ।
उमामहेश्वरोपेते समृद्धे नगरे शुभे ॥ १३ ॥
कर्तव्यं साधनं तत्र रसराजस्य धीमता ।
अत्यन्तोपवने रम्ये चतुर्द्वारोपशोभिते ॥ १४ ॥
तत्र शाला प्रकर्तव्या सुविस्तीर्णा मनोरमा ।
सम्यग्वातायनोपेता दिव्यचित्रैर्विचित्रिता ॥ १५ ॥
तत्समीपे समे दीप्ते कर्तव्यं रसमण्डपम् ।
अतिगुप्तं सुविस्तीर्णं कपाटार्गलशोभितम् ॥ १६ ॥
ध्वजच्छत्रवितानाढ्यं पुष्पमालाविलम्बितम् ।
भेरिकाहलघण्टादिशृङ्गीनादविनादितम् ॥ १७ ॥
भूः समा तत्र कर्तव्या सुदृढा दर्पणोपमा ।
तन्मध्ये वेदिका रम्या कर्तव्या लक्षणान्विता ॥ १८ ॥
निष्कत्रयं हेमपत्रं रसेन्द्रं नवनिष्ककम् ।
अम्लेन मर्दयेद्यामं तेन लिङ्गं तु कारयेत् ॥ १९ ॥
दोलायन्त्रे सारनाले जम्बीरस्थं दिनं पचेत् ।
तल्लिङ्गं पूजयेत्तत्र सुशुभैरुपचारकैः ॥ २० ॥
लिङ्गकोटिसहस्रस्य यत्फलं सम्यगर्चनात् ।
तत्फलं कोटिगुणितं रसलिङ्गार्चनाद्भवेत् ॥ २१ ॥
ब्रह्महत्यासहस्राणि गोहत्या अयुतानि च ।
तत्क्षणाद्विलयं यान्ति रसलिङ्गस्य दर्शनात् ॥ २२ ॥
स्पर्शनात्प्राप्यते मुक्तिरिति सत्यं शिवोदितम् ।
आग्नेय्यां श्रीमघोरेण मन्त्रराजेन चार्चयेत् ॥ २३ ॥
अष्टादशभुजं शुभ्रं पञ्चवक्त्रं त्रिलोचनम् ।
प्रेतारूढं नीलकण्ठं रसलिङ्गं विचिन्तयेत् ॥ २४ ॥
तस्योत्सङ्गे महादेवीमेकवक्त्रां चतुर्भुजाम् ।
अक्षमालाङ्कुशं दक्षे वामे पाशाभयं शुभम् ॥ २५ ॥
दधतीं तप्तहेमाभां पीतवस्त्रां विभावयेत् ॥ २६ ॥

---

१ ङ. तथा । २ क. ठ. ड. सा ग्राह्या । ३ घ. सुशोधयेत् । ङ. तु साधयेत् । ४ ग. °मालोपशोभितम् । ५ क. °विडम्बितम् । ६ घ. भेरीकाहलघण्टादिशृङ्गिना° । ङ. भेरीकलहघ° । ७ घ. स्त्रीगोहत्यायुतानि च । ८ ङ. °त्याश्वायु° । ज. °त्यासंयु° । ९ क. आग्नेयीं ।

**अथ मन्त्रः**—[१]वाङ्मयी श्रीः काम[२]राजशक्ति[३]बीजं रसाङ्[४]कुशा ।
[५]यैः समा [६]द्वादशाः [७]शैवज्ञेया विद्या रसाङ्कुशा ॥ २७ ॥
अनया पूजयेद्देवीं गन्धपुष्पाक्षतादिभिः ।
नन्दीभृङ्गीमहाकालकुलीराः पूर्वदिक्क्रमात् ॥ २८ ॥
पूजयेन्नाममन्त्रैस्तु प्रणवादिनमोन्तकैः ।
एवं नित्यार्चनं तत्र कर्तव्यं रससिद्धये ॥ २९ ॥
र[८]सविद्या शिवेनोक्ता दातव्या साधकाय वै ।
यथोक्तेन विधानेन गुरुणा मुदितात्मना ॥ ३० ॥
सुमुहूर्ते सुनक्षत्रे चन्द्रताराबलान्विते ।
कलशं तोयसंपूर्णं हेमरत्नफलैर्युतम् ॥ ३१ ॥
स्थापयेद्रसलिङ्गाग्रे दिव्यवस्त्रेण वेष्टितम् ।
गन्धपुष्पाक्षतैर्धूपैर्नैवेद्यैश्च सुपूजयेत् ॥ ३२ ॥
पूजान्ते [९]हवनं कुर्याद्योनिकुण्डे सु[१०]लक्षणे ।
तिलाज्यैः पायसैः पुष्पैः शतपुष्पादिकैः पृथक् ॥ ३३ ॥
अघोरेण रसाङ्[११]कुश्या होमान्ते शिष्यमाह्वयेत् ।
[१२]कालिनी शक्तिसंयुक्ता रससिद्धिपरायणा ॥ ३४ ॥
यस्यास्तु कुञ्चिताः केशाः श्यामा या पद्मलोचना ।
सुरूपा तरुणी भिन्ना विस्तीर्णजघना शुभा ॥ ३५ ॥
संकीर्णहृदया पीनस्तनभारेण *नम्रिता ।
चुम्बनालिङ्गनस्पर्शकोमला मृदुभाषिणी ॥ ३६ ॥
अश्वत्थपत्रसदृशयोनिदेशसुशोभिता ।
कृष्णपक्षे पुष्पवती सा नारी कालिनी स्मृता ॥ ३७ ॥
रसबन्धे प्रयोगे च उत्तमा सा रसायने ।
तदभावे सुरूपा तु या काचित्तरुणाङ्गना ॥ ३८ ॥

---

* नामिता ( साधीयान् ).

---

१ क. वाङ्मयीं । ग. वाङ्मयश्रीः । ङ. वाङ्माया श्री कामराजशक्तिबीजरसाङ्कुश । यैनमो द्वादशार्णैषा ज्ञेया विद्या रसाङ्कुशी ॥ २७ ॥ २ ग. °राजाङ्शक्ति° । ज. °राजाच्छक्ति° । ३ ज. °बीजरसाङ्कुशाः । ४ घ. °ङ्कुशाः । ५ क. यः । ६ ग. द्वादशार्णा च ज्ञेया° । ७ घ. सैव ज्ञेया । ८ ग. °सदीक्षा शि° । ज. °स शिक्षा शि° । ९ क. वाचनं । च. वाहनं । १० घ. सलक्षणे । ११ ग. ज. °ङ्कुश्ये हो° । १२ ग. घ. ङ. ज. कालिनीशक्तिसंयुक्तं रससिद्धिपरायणम् । ज. काकिनी ।

तस्या देयं त्रिसप्ताहं गन्धकं घृतसंयुतम् ।
कर्षैकैकं प्रभाते तु सा भवेत्[1]कालिनीसमा ॥ ३९ ॥
एवं [2]शक्तियुतो योऽसौ दीक्षयेत्तं गुरूत्तमः ।
सुस्नातमभि[3]षिञ्चेत मन्त्रेण कलशोदकैः ॥ ४० ॥
[4]अघोरामङ्कुशीं विद्यां दद्याच्छिष्याय सद्गुरुः ।
यथाश[5]क्त्यो सुशिष्येण दातव्या गुरुदक्षिणा ।
अथाऽऽज्ञया गुरो[6]र्मंत्रं लक्षं लक्षं [7]पृथक् जपेत् ॥ ४१ ॥
ॐ ह्रां ह्रीं ह्रूं अघोरतरप्रस्फुट २ प्रकट २
कह २ शमय २ जात २ दह२ पातय २
ॐ ह्रीं ह्रैं ह्रौं ह्रूं अघोराय फट् इममघोरमन्त्रं तु
ॐ कामराजशक्तिबीजरसाङ्कुशायै आज्ञैया विद्यां रसाङ्कुशाम् ॥
अनया पूजयेद्देवीमिमां कुशविद्याम् ।
दशांशेन हुनेत्कुण्डे त्रिकोणे हस्तमात्रके ।
[8]जातिपुष्पं त्रिमध्वक्तं पूर्णान्ते कन्यकार्चनम् ॥ ४२ ॥
कृत्वाऽथ प्रविशेच्छालां शुद्धां लिप्तां सवेदिकाम् ।
षट्कोणं मण्डलं तत्र सिन्दूरेण द्विहस्तकम् ॥ ४३ ॥
वेदिकायां लिखेत्सम्यक्तद्बहिश्चाष्टपत्रकम् ।
कमलं चतुरस्रं च चतुर्द्वारैः सुशोभितम् ॥ ४४ ॥
कर्णिकायां न्यसेत्खल्वं लोहजं स्वर्णलेखितम् ।
तन्मध्ये रसराजं तु पलानां शतमात्रकम् ॥ ४५ ॥
पञ्चाशत्पञ्चविंशद्वा पूजयेद्रसलिङ्गवत् ।
वज्रवैक्रान्तवज्राभ्रकान्तपाषाणटङ्कणम् ॥ ४६ ॥
भूना[9]गं शक्तयश्चैताः षट्पत्रे पूजयेत्क्रमात् ॥ ४७ ॥
गन्धतालककासीसशिलाकङ्कुष्ठभू[10]षणम् ।
राजावर्तो गैरिकं च ख्याता उपरसा अमी ॥
पूज्या अष्ट[11]दलैश्चैते पूर्वा[12]दीशा[13]नगं क्रमात् ॥ ४८ ॥

१ ग. घ. °त्काकिनी° । २ ज. शक्तिसमो । ३ ग. °षिञ्चयेनं म° । ज. °षिञ्चेत्तं म° । ४ क. °अघोरम° । ५ ङ. °क्त्या च शि° । ६ क. °मंत्रैर्लक्षं लक्षं पृथक्पृथक् । छ. °मंत्रे ल° । ७ ज. पुनर्जपेत् । ८ क. जातीपु° । ९ ग. °नागश° । ज. °नागः श° । १० क. °भूगुणम् । ज. °भूगणम् । ११ ङ. °दलेष्वेते । १२ ग. °दीनां दिशां क्र° । १३ ग. °नगक्र° ।

रसकं विमला ताप्यं चपला तुत्थमञ्जनम् ।
हिङ्गुलं सस्यकं चैव ख्याता एते महारसाः ॥ ४९ ॥
पूर्वादीशान[1]पर्यन्तं पैत्राग्रेषु[2] प्रपूजयेत् ।
पूर्वद्वारे स्वर्णरूप्ये[3] दक्षिणे ताम्रसीसके ॥ ५० ॥
पश्चिमे वङ्गकान्तौ च उत्तरे मुण्डतीक्ष्णके ।
सर्वमेतदघोरेण पूजयेदङ्कुशान्वितम् ॥ ५१ ॥
बिडं काञ्जिकर्यन्त्राणि[4] क्षारमृल्लवणानि च ।
कोष्ठी मूषा वङ्कनाली[5] तुषाङ्गारवनोत्पलाः[6] ॥ ५२ ॥
भस्त्रिका दंण्डिका[7]नेका[8] शिलाखल्वान्युलूखलम् ।
स्वर्णकारोपकरणं समस्ततुलनानि च ॥ ५३ ॥
मृत्काष्ठताम्रलोहोत्थपात्राणि विविधानि च ।
दिव्यौषधादिवर्गाश्च[9] रञ्जकस्नेहनानि च ॥ ५४ ॥
एतानि द्वारबाह्ये तु मूलमन्त्रेण पूजयेत् ।
वाङ्मयां[10] ह्रीं ततः क्षें च क्ष्मश्च पञ्चाक्षरो मनुः ॥ ५५ ॥
अनेन मूलमन्त्रेण भैरवं तत्र पूजयेत् ।
सर्वेषां रससिद्धानां नाम संकीर्तयेत्तदा ॥ ५६ ॥
*व्यालाचार्यश्चन्द्रसेनः सुबुद्धिर्नरवाहनः ।
नागार्जुनो रत्नघोषः सुरानन्दो यशोधनः ॥ ५७ ॥
इन्द्र[11]धूमश्च माण्डव्यश्चर्पटिः[12] सूरसेनकः ।
आगमो[13] नागबुद्धिश्च खण्डः कापालिको[14] मतः ॥ ५८ ॥
कामारिस्तान्त्रिकः[15] शंभुर्लङ्को[16] लम्पटशारदौ ।
बाणासुरो मुनिश्रेष्ठो गोविन्दः कपिलो बलिः ॥ ५९ ॥
एते सर्वे तु राजेन्द्रा[17] रससिद्धा[18] महाबलाः ।
चरन्ति सर्वलोकेषु नित्या[19] भोगपरायणाः ॥ ६० ॥
सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः ।
वन्द्याः[20] पूज्याः प्रयत्नेन ततः कुर्याद्रसार्चनम् ॥ ६१ ॥

---

* व्याल्याचा° (साधीयान्)

१ ङ. °शान्यप°। २ च. पत्राङ्गेषु । ३ क. स्वर्णरौप्ये । ४ क. °कपत्राणि । ५ ङ. °नालतु°। ६ ग. °नोपलाः । ७ ङ. °दंशिका° । ८ °नेकाः शि°। ( साधीयान् ) ९ ज. °षधीनां वर्गश्च । १० क. वाङ्मयी ह्रीं ततः क्षेंच क्ष्मश्च । ङ. वाङ्माया ह्रीं ततः क्ष्मं च क्ष्मश्च । ट. वाङ्मायां ह्रीं ततः क्षें च क्ष्मश्च । ११ ङ. °न्द्रद्युम्नश्च । १२ ख. °र्पटी शूर°। ङ. °र्पटः शूर°। १३ ङ. आढमो°। ङ. आडमो । १४ ग. लिकः परः । १५ क. °मारिः सात्त्विकः । ज. °मारिस्तात्त्विकः । १६ ग. °र्लङ्काल°। १७ क. सूतेन्द्रा । ङ. भूपेन्द्रा । १८ ग. °सिद्धिम°। १९ ग. नित्यभो°। ङ. नित्यं भो°। २० ज. वैद्याः ।

हर्षयन्द्विजदेवानां तर्पयेदिष्टदेवताः ।
कुमारीयोगिनीयोगीश्वरान्मेलकसाधकान् ॥ ६२ ॥
तर्पयेत्पूजयेद्भक्त्या यथाशक्त्यनुसारतः ॥ ६३ ॥
इत्येवं सर्वसंभारयुक्तं कुर्याद्रसोत्सवम् ।
सर्वविघ्नप्रशान्त्यर्थं सर्वेप्सितफलप्रदम् ॥ ६४ ॥
अन्यथा यो विमूढात्मा मन्त्रदीक्षाक्रमाद्विना ।
कर्तुमिच्छति सूतस्य साधनं गुरुवर्जितः ॥ ६५ ॥
नासौ सिद्धिमवाप्नोति यत्नकोटिशतैरपि ।
तस्मात्सर्वप्रयत्नेन शास्त्रोक्तां कारयेत्क्रियाम् ॥ ६६ ॥
सम्यक्साधनसोद्यमा गुरुयुता राजाज्ञयाऽलंकृता
नानाकर्मपराङ्मुखा रसपराश्चाढ्या जनैश्चार्थिताः ।
मात्रायन्त्रसुपाककर्मकुशलाः सर्वौषधे कोविदा-
स्तेषां सिध्यति नान्यथा विधिबलाच्छ्रीपारदः पारदः॥६७॥
रसशास्त्रं प्रदातव्यं विप्राणां धर्महेतवे ।
राज्ञे वैश्याय वृद्ध्यर्थं दास्यार्थमितरस्य च ॥ ६८ ॥
गुरौ तुष्टे शिवस्तुष्येच्छिवे तुष्टे रसस्तथा ।
रसे तुष्टे क्रियाः सर्वाः सिध्यन्त्येव न संशयः ॥ ६९ ॥
रसविद्या दृढं गोप्या मातुर्गुह्यमिव ध्रुवम् ।
भवेद्वीर्यवती गुप्ता निर्वीर्या च प्रकाशनात् ॥ ७० ॥
न रोगिविदितं कार्यं बहुभिर्विदितं तथा ।
रोगिणां बहुभिर्ज्ञातं भवेन्निर्वीर्यमौषधम् ॥ ७१ ॥ ८०९ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये शिष्योपनयनं नाम षष्ठोऽध्यायः ॥ ६ ॥

---

अथ सप्तमोऽध्यायः ।

[ अथ रसशाला । ]

रसशालां प्रकुर्वीत सर्वबाधाविवर्जिताम् ।
सर्वौषधमये देशे रम्ये कूपसमन्विते ॥ १ ॥

---

१ क. छ. °रान्म्लेच्छक°। २ घ. °रा वैद्या ज°। ३ ङ. °श्चार्थतः । ४ च. °षधैः को°। ५ ग. रोगिणा । ६ ङ. °र्जिते । ७ क. रम्यकू°।

[1]यक्षत्र्यक्षां सहस्राक्षां दिग्भागे सुशोभने ।
नानोपकरणोपेतां प्राकारेण सुशोभिताम् ॥ २ ॥
शालायाः पूर्वदिग्भागे स्थापयेद्रसभैरवम् ।
वह्निकर्माणि चाग्नेये याम्ये पाषाणकर्म च ॥ ३ ॥
नैर्ऋत्ये शस्त्रकर्माणि वारुणे क्षालनादिकम् ।
शोषणं वायुकोणे च वेधकर्मोत्तरे तथा ॥ ४ ॥
स्थापनं सिद्धवस्तूनां प्रकुर्या[2]दीशकोणके ।
पदार्थसंग्रहः कार्यो रससाधनहेतुकः ॥ ५ ॥
सत्त्वपातनकोष्ठीं च झ[3]रत्कोष्ठीं सुशोभनाम् ।
भूमि[4]कोष्ठीं चलत्कोष्ठीं जलद्रोण्योऽप्यनेकशः ॥ ६ ॥
भस्त्रिकायुगलं त[5]द्वन्नालिके पङ्कलोहयोः ।
स्वर्णायोघोषशुल्बाश्म[6]कुण्ड्यश्चर्मकृतां तथा ॥ ७ ॥
करणानि विचित्राणि द्रव्याण्यपि समाहरेत् ।
कँ[7]ण्डणी पेषणी स्वल्वा द्रोणीरूपाश्च वर्तुलाः ॥ ८ ॥
आयसास्तप्तखल्वाश्च मर्दकाश्च तथाविधाः ।
सूक्ष्मच्छिद्रसहस्राढ्या द्रव्यगालनहेतवे ॥ ९ ॥
चालनी च *[8]कटत्राणि शला[9]का हि[10] च कुं[11]ण्डनी ।
चालनी त्रिविधा प्रोक्ता तत्स्वरूपं च कथ्यते ॥ १० ॥
वैणवीभिः शलाकाभिर्निर्मिता ग्रथिता गुणैः ।
कीर्तिता सा सदा स्थूलद्रव्याणां गालने हिता ॥ ११ ॥
चूर्णचालनहेतोश्च चालन्यन्यो[12]ऽपि वंशजा ।
कर्णिकारस्य शाल्मल्या हरिजातस्य कम्बया ॥ १२ ॥
चतुरङ्गुलविस्तार[13]युक्तया निर्मिता शुभा ।
कुण्डल्यरत्निविस्तारा छागच[14]र्माभिवेष्टिता ॥ १३ ॥
वाजिवालाम्बरानद्धतला चालनिका परा ।
तया प्रचालनं कुर्याद्धर्तुं सूक्ष्मतरं रजः ॥ १४ ॥

* कटत्राणीति कषायितचर्मखण्डानि ।

१ क. यक्षअक्षसहस्राक्षदि°। ख. यक्षराजसहस्राक्षदि°। ग. त्र्यक्षां त्र्य°। ङ. त्र्यक्षत्र्यक्षसहस्राक्षदि°। ज. त्र्यक्ष्यां अक्ष्यां °। २ घ. °नांकुर्यादीशानको°। ३ क. कुराकोष्ठीं । घ. गारकोष्ठीं। ङ. जराकोष्ठीं । छ. सुराकोष्ठीं । ४ ख. °कोष्ठी चलत्कोष्ठी ज°। ५ ङ. तद्वन्नालिके वंशलोहयोः । ६ ग. °श्मकुण्ड्यचर्म°। ७ क. कण्डनी । ङ. खण्डान्नपे°। ८ ज करत्राणि । ९ ङ. °काभिश्च खण्डनी । १० क. ही च । ज. हिश्च । ११ ख. कुण्डली । ज. कण्डनी १२ ख. °न्यातिकांविजा । १३ छ. °युक्ता या । १४ ङ. °र्मादिवे°।

मूषामृत्तुषकार्पासवनो[1]पलकपिष्टकम् ।
त्रिविधं भेषजं[2] धातुजीवमूलमयं तथा ॥ १५ ॥
शिखित्रा गोवरं[3] चैव शर्करा च शितोपला[4] ।
शिखित्राः पावकोच्छिष्टा अङ्गाराः कोकिला मताः ॥ १६ ॥
कोकिलाश्चेतिताङ्गारा निर्वाणाः पयसा विना ।
पिष्टकं छगणं[5] छाणमुपलं चोत्पलं तथा ॥ १७ ॥
गिरिण्डोपलसांठी[6] च संशुष्कच्छगणाभिधाः[7] ।
काचायोमृद्वराटानां कूपिकाचषकानि च ॥ १८ ॥
कूपिका कुपिका सिद्धा गोला चैव गिरिण्डिका ।
चषकं च कटोरी च वाटिका खारिका[8] तथा ॥ १९ ॥
कञ्चोली[9] ग्राहिका चेति नामान्येकार्थकानि हि ।
शूर्पादिवेणुपात्राणि क्षुद्राक्षिप्राश्च[10] शङ्किकाः[11] ॥
क्षुरप्राश्च[12] तथा पक्यो[13] यच्चान्यत्तत्र युज्यते ॥ २० ॥
पालिका कणिका[14] चैव शाकच्छेदनशस्त्रकाः ।
शालासंमार्जना[15]द्यं हि रसपाकान्तकर्म यत् ॥ २१ ॥
तत्रोपयोगि यच्चान्यत्तत्सर्वं परिविद्यया[16] ।
श्रीरसाङ्कुशया सर्वं मन्त्रयित्वा समाचरेत्[17] ॥ २२ ॥
अन्यथा तद्गतं तेजः परिगृह्णन्ति[18] भैरवाः ।
रससंहितया[19] वैद्या निघण्टुज्ञाश्च वार्तिकाः ॥ २३ ॥
सर्वदेशजभाषज्ञाः[20] संग्राह्यास्तेऽपि साधकैः[21] ।
रसपाकावसानं हि सदा घोरं च जापयेत् ॥ २४ ॥
सोद्यमाः शुचयः शूरा बलिष्ठाः परिचारकाः ।
धर्मिष्ठः सत्यवाग्विद्वाञ्शिवकेशवपूजकः ॥ २५ ॥
सदयः पञ्चहस्तश्च स योज्यो रसवैद्यके ।
पताकाकुम्भपाथोजमत्स्यचापाङ्कपाणिकः ॥ २६ ॥

---

१ ङ. °नोत्पल°। २ ख. °जं साधुजी°। ३ ख. गोवरं। ४ ङ. सितोपला। ५ ङ. छागणं। छ. छगलं। ६ घ. °साढी च। ङ. °साटी च। छ. °साठीय सं°। ७ ज. °भिधा। ८ ग. सुरिका। ९ ङ. कम्बोली। १० ङ. क्षुद्रशिप्राश्च शाङ्किकाः। ११ ख. शाङ्किकाः। १२ ङ. क्षुरकाश्च। ज. क्षुरपाश्च। १३ ङ. शक्यो। १४ ङ. वर्तिका। ज. कूचिका। १५ क. °लायां मा°। १६ क. परिवि°। १७ घ. समर्चयेत्। १८ ङ. °गृह्णाति भैरवः। १९ ग. °ससंविस्तरा वै°। घ. °ससंहितयो वै°। २० घ. भाषाज्ञाः। २१ ङ. साध्यकाः।

अनामाधस्थरेखाङ्कः स स्यादमृतहस्तवान् ।
[1]अदैष्टिकः कृपामुक्तो लुब्धो गुरुविवर्जितः ॥ २७ ॥
कृष्णरे[2]खाकरो वैद्यो दग्धहस्तो[3] विवर्जितः ।
भूतनिग्रहमन्त्रज्ञास्ते योज्या निधिसाधने ॥ २८ ॥
बलिष्ठाः [4]सत्यवन्तश्च रक्ताक्षाः कृष्णविग्रहाः ।
भूतत्रासनविद्याश्च ते योज्या बलिसाधने ॥ २९ ॥
निर्लोभाः सत्यवक्तारो देवब्राह्मणपूजकाः ।
यमिनः पथ्यभोक्तारो योजनीया रसायने ॥ ३० ॥
धनवन्तो वदान्याश्च सर्वो[5]पस्करसंयुताः ।
गुरुवाक्यरता नित्यं धातुवादेषु ते शुभाः ॥ ३१ ॥
तत्तदौषधनामज्ञाः शुचयो वञ्चनोज्झिताः ।
नानाविषयभा[6]षज्ञास्ते मता भेषजाहृतौ ॥ ३२ ॥
शुचीनां सत्यवाक्यानामास्तिकानां मनस्विनाम् ।
संदेहोज्झितचित्तानां रसः सिध्यति सर्वदा ॥ ३३ ॥
दशाष्टक्रियया सि[7]द्धो रसोऽसौ साधकोत्तमः ।
हा[8] रसो नष्ट इत्यु[9]क्त्वा सेवेतान्यत्र तं रसम् ॥ ३४ ॥
रससिद्धो भवेन्मर्त्यो दाता भोक्ता न याचकः ।
ज[10]रामुक्तो जगत्पूज्यो दिव्यकान्तिः सदा सुखी ॥ ३५ ॥८४४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये
रसशालाप्रकरणं नाम सप्तमोऽध्यायः ॥ ७ ॥

---

अथाष्टमोऽध्यायः ।

[ अथ परिभाषा । ]

कथ्यते सोमदेवेन मुग्धवैद्यप्रबुद्धये ।
परिभाषा रसेन्द्रस्य शा[11]स्त्रैः सिद्धैश्च भाषिता ॥ १ ॥
अर्धं सिद्धरसस्य तैलघृतयोर्लोहस्य भागोऽष्टमः
संसिद्धाखिललोहचू[12]र्णवटकादीनां तथा सप्तमः ।
यो दीयेत भिषग्वराय गदिभिर्निर्दिश्य धन्वन्तरिं
सर्वारोग्यसुखाप्तये निगदितो भागः *स धन्वन्तरेः ॥ २ ॥

---

* स एवाश्विनीकुमारभागः ।

---

१ ज. अदेशिकः । २ ख. °रेखक° । ३ ङ. °हस्तः स उच्यते । ४ ग. सत्त्ववन्तश्च । ५ ङ. °पस्कार° । ६ घ.ङ. °भाषाज्ञास्ते । ७ घ. सिद्धे रसेऽसौ° । ८ घ. महारसोऽष्ट इत्युक्त्वा सवेत्ताऽन्य° । ९ ख. ठ. ड. °त्युक्त्वा से° । १० ख. जरोन्मुक्तो । ११ ख. शास्त्रे । १२ ख. °र्णगुटिका° ।

[ क्षेपकः। भैषज्यक्रीणितद्रव्यभागोऽप्येकादशो हि यः।
वणिग्भ्यो गृह्यते वैद्यै रुद्रभागः स उच्यते ॥ ३ ॥
अगृह्याधिकरुद्रांशं योऽसमीचीनमौषधम्।
दापयेल्लुब्धधीर्वैद्यः स स्याद्विश्वासघातकः ॥ ४ ॥
धातुभिर्गन्धकाद्यैश्च निर्द्रवैर्मर्दितो रसः।
सुश्लक्ष्णः कज्जलाभोऽसौ कज्जलीत्यभिधीयते ॥ ५ ॥
सद्रवा मर्दिता सैव रसपङ्क इति स्मृतः ॥ ६ ॥
अर्कांशतुल्याद्र[4]सतोऽथ गन्धान्निष्कार्धतु[5]ल्यात्त्रुटिशोऽभिखल्वे।
अर्कातपे तीव्रतरे विम[6]र्द्या पिष्टी भवेत्सा नवनीतरूपा ॥ ७ ॥
खल्वे विमर्द्य गन्धेन दुग्धेन सह पारदम्।
पेषणात्पिष्टतां याति सा पि[7]ष्टीति मता परैः ॥ ८ ॥
चतुर्थांशसुवर्णेन र[8]सेने[9] घृष्टपिष्टिका।
भवेत्पातनपिष्टी सा रसस्योत्तमसिद्धिदा ॥ ९ ॥
रूप्यं वा जातरूपं वा रसगन्धादिभिर्हतम्।
समुत्थितं च बहुशः सा कृ[10]ष्टी हेमतारयोः ॥ १० ॥
[11]कृष्णीं [12]क्षिपेत्सुवर्णान्तर्न वर्णो हीयते त[13]था।
स्वर्णकृ[14]ष्ट्या कृतं बीजं रसस्य परिरञ्जनम् ॥ ११ ॥
ताम्रं तीक्ष्णसमायुक्तं द्रु[15]तं निक्षिप्य भूरिशः।
स[16]गन्धलकुचद्रावे निर्गतं वरलोहकम् ॥ १२ ॥
तेन र[17]क्तीकृतं स्वर्णं हेमर[18]क्तीत्यु[19]दाहृतम्।
निक्षिप्ता सा द्रु[20]ते स्वर्णे वर्णोत्कर्षविधायिनी ॥ १३ ॥
तारस्य रञ्जनी चापि बीजरागविधायिनी।
एवमेव प्रकर्तव्या तारर[21]क्ती मनोहरा ॥
रञ्जनी खलु रूप्यस्य बीजानामपि रञ्जनी ॥ १४ ॥
मृतेन वा बद्धरसेन वाऽन्यल्लोहेन वा साधितमन्यलोहम्।
[22]सितं च पीतत्वमुपागतं तद्दलं हि चन्द्रानलयोः प्रसिद्धम् ॥१५॥

---

१ घ. °ज्यत्रितयद्रव्ये भागो। २ क. °णितं द्रव्यं भा°। ३ घ. ङ. °द्रवे भागमेका°। ४ ख. °सताप्यगन्धा°। छ. °सतोऽप्यग°। ज. °सतोयग°। ५ क. °तुल्यतृटि ग. °तुल्यात्रुटि°। ङ. तुल्यात्कुटि°। ६ ग. घ. °मर्द्यातिपिष्टी°। ७ ज. °ष्टी कथिता। ८ ङ. रसस्य कृतापि°। ९ ग. °न कृतापि°। छ. °न घृतपि°। १० ङ. कृष्णी। ११क. कृष्लीं। १२ ङ. क्षिप्त्वा सुव°। १३ क. तथा। १४ ङ. °कृष्णीकृ°। १५ ज. मृतं। १६ घ. ङ. °गन्धे ल°। १७ घ. ठ. रत्नीकृतं। १८ घ. ठ. °रत्नीत्यु°। १९ ङ. °दाहृता। २० ङ सिते। २१ घ, ठ. °रत्नी म°। २२ क. सीतं।

[1]आवासकृत[2]बद्धेन रसेन सह योजितम् ।
साधितं वाऽन्यलोहेन सितं पीतं च तद्दलम् ॥ १६ ॥
माक्षिकेण हतं ताम्रं दशवारं समुत्थितम् ।
तद्वद्वि[3]शुद्धनागं हि द्वितयं तच्चतुष्पलम् ॥ १७ ॥
नीलाञ्जनहतं भूयः सप्तवारं समुत्थितम् ।
इति [4]संशुद्धिमेतद्धि शुल्बनागं प्रकीर्त्यते ॥ १८ ॥
साधितस्तेन सूतेन्द्रो वदने विधृतो नृणाम् ।
निहन्ति [5]मासमात्रेण मेह[6]व्यूहं विशेषतः ॥ १९ ॥
पथ्याशनस्य [7]वर्षेण पलितं वलिभिः सह ।
गृध्रदृष्टि[7]र्लसत्पुष्टिः सर्वारोग्यसमन्वितः ॥ २० ॥
लोहं लोहान्तरे क्षिप्तं ध्मातं निर्वापितं द्रवे ।
पाण्डुपीतप्रभं [8]जातं पि[9][10]ञ्जरीत्यभिधीयते ॥ २१ ॥
भागाः षोडश तारस्य तथा द्वादश भास्वतः ।
एकत्राऽऽवर्तितास्तेन चन्द्रार्क[11]मपि कथ्यते ॥ २२ ॥
साध्यलोहे[12]ऽन्[13]यलोहं चेत्प्रक्षिप्तं वङ्कनालतः ।
निर्वापणं तु तत्प्रोक्तं वैद्यै[14]र्नि[15]र्वाहणं खलु ॥ २३ ॥
क्षिपेन्नि[16]र्वापणं द्रव्यं नि[17]र्वाह्ये समभागिकम् ।
[18]आवाह्यं वापनीये च भागे दृष्टे च दृष्टवत् ॥ २४ ॥
मृतं तरति [19]यत्तोये लोहं वारितरं हि [20]तत् ।
अङ्गुष्ठतर्जनीघृष्टं यत्तद्रे[21]खान्तरे विशेत् ॥ २५ ॥
[22]मृतलोहं तदुद्दिष्टं रेखापूर्णाभिधानतः ॥ २६ ॥
[23]गुडगुञ्जासुखस्पर्शमध्वाज्यैः सह योजितम् ।
नाऽऽयाति प्रकृतिं ध्मानादपुनर्भवमुच्यते ॥ २७ ॥
तस्योपरि गुरु द्रव्यं धान्यं चोपनयेद्ध्रुवम् ।
हंसवत्तर्यिते वारिण्यूनमं परिकीर्तितम् ॥ २८ ॥
रौप्येण सह संयुक्तं ध्मातं रौप्येण चेल्लगेत् ।
तदा निरुत्थमित्युक्तं लोहं तदपुनर्भवम् ॥ २९ ॥

---

१ ङ. आमाम॰। २ ङ. ॰बन्धेन । ३ ख. ॰शुद्धं ना॰। ४ ङ. संसिद्धमे॰। ५ ग. क्षणमात्रेण । ६ ङ. ॰व्यूहमशे॰। ७ ग. ॰ष्ठिरुम॰। ८ ज. जलम् । ९ ङ. ॰तं पक्र॰। १० क. पिण्डरी॰। ११ क.ङ.ड. ॰।मिति क॰। १२ ख. ॰हेन लो॰। १३ क. ॰न्यलोहे चे॰। १४ क. ॰र्वापणं । १५ ङ. ॰र्वाहणे द्रव्ये निर्वाहे म॰। १६ क. ॰पणद्र॰। १७ क. निर्वाह्ये । १८ क. आवाह्यं ङ. आवाप्यं । १९ क. तत्तोये । २० ग. गत् । २१ क. ॰द्रेखान्तरं वि॰। २२ क. मृतं लो॰। २३ क. गुलगु॰।

निर्वापणविशेषेण तत्तद्वर्णं भवेद्यदा ।
मृदुलं चित्रसंस्कारं तद्बीजमिति कथ्यते ॥ ३० ॥
इदमेव विनिर्दिष्टं वैद्यैरुत्तरणं खलु ।
संस्पृष्टलोहयोरेकलोहस्य परिसाधनम् ।
प्रध्मातं वङ्कनालेन तत्ताडनमुदाहृतम् ॥ ३१ ॥
चूर्णाभ्रं शालिसंयुक्तं वस्त्रबद्धं हि काञ्जिके ।
निर्यातं मर्दनाद्वस्त्राद्धान्याभ्रमिति कथ्यते ॥ ३२ ॥
क्षाराम्लद्रावकैर्युक्तं ध्मातमाकरकोष्ठके ।
यस्ततो निर्गतः सारः सत्त्वमित्यभिधीयते ॥ ३३ ॥
कोष्ठिकाशिखरापूर्णैः कोकिलैर्ध्मानयोगतः ।
मूषाकण्ठमनुप्राप्यैरेकैकोलीसको मतः ॥ ३४ ॥
द्रावणे सत्त्वपाते च माधुकाः खादिराः शुभाः ।
निर्द्रवे वङ्कजास्ते तु स्वेदने बादराः शुभाः ॥ ३५ ॥
विद्याधराख्ययन्त्रस्थादार्द्रकैद्रावमर्दितात् ।
समाकृष्टो रसो योऽसौ हिङ्गुलाकृष्ट उच्यते ॥ ३६ ॥
स्वल्पतालयुतं कांस्यं वङ्कनालेन ताडितम् ।
मुक्तरङ्गं हि तत्ताम्रं घोषाकृष्टमुदाहृतम् ॥ ३७ ॥
तीक्ष्णं नीलाञ्जनोपेतं ध्मातं हि बहुशो दृढम् ।
मृदुकृष्णं द्रुतद्रावं वरं नागं तदुच्यते ॥ ३८ ॥
मृतस्य पुनरुद्भूतिः संप्रोक्तोत्थापनाख्यया ।
द्रुतद्रव्यस्य निक्षेपो द्रवे तद्ढालनं मतम् ॥ ३९ ॥
त्रिंशत्पलमितं नागं भानुदुग्धेन मर्दितम् ।
विमर्द्य पुटयेत्तावद्यावत्कर्षावशेषितम् ॥ ४० ॥
न तत्पुटसहस्रेण क्षयमायाति सर्वथा ।
चपलोऽयं समादिष्टो वार्तिकैर्नागसंभवः ॥ ४१ ॥
इत्थं हि चपलः कार्यो वङ्गस्यापि न संशयः ।
तत्स्पृष्टहस्तसंस्पृष्टः केवलो बध्यते रसः ॥ ४२ ॥

---

१ ङ. °र्वाहण°। २ ङ. °रुत्तार°। ३ क. संसृष्ट°। ४ क. परिनाशनम् । ५ क. °प्रक्षरे°। ६ ङ. °कनालिशको । ७ क. माधूकाः । ८ क. दुर्द्रावे वंशजास्ते तु । ९ ङ. °कद्रव°। १० ख. मुक्तवङ्गं हितं ताम्रं। ग. मुक्तगन्धं ।११ क. तीक्ष्णनी°। १२ क. °कृष्टद्रु°। ज. °कृष्टं द्रु°। १३ क. वरना°। १४ ग. °वे-त्तत् दा°। १५ क. विमृद्य । ङ. विगृह्य । १६ ग. °र्तिके नाग°। १७ क. °ष्टहतसं°। ङ. °ष्टहंसस°।

स रसो धातुवादेषु शस्यते न रसायने ।
अयं हि [1]खर्वणाख्येन लोकनाथेन कीर्तितः ॥ ४३ ॥
भूभुजङ्गशकृत्तोयैः प्रक्षाल्यापहृतं रजः ।
[2]कृष्णवर्णं हि तत्प्रोक्तं धौताख्यं रसवादिभिः ॥ ४४ ॥
द्रव्यय[3]योर्मर्दनाद्ध्मा[4]नाद्द्वानं परिकीर्तितम् ।
[5]भागाद्द्रव्याधिकक्षेपमनुवर्णसुवर्णके ॥ ४५ ॥
[6]दलैर्वा [7]वह्निकाग्रासो भञ्जनी वादिभिर्मता ।
पत[8]ङ्गीकल्कतो जा[9]ता लोहे[10]तारत्वहेमता ॥ ४६ ॥
दिनानि कतिचित्स्थित्वा यात्यसौ [11]चुल्लका मता ।
रञ्जिताद्धि चिराल्लोहाद्ध्मानाद्वा चिरकालतः ॥ ४७ ॥
[12]विनिर्यासः स निर्दिष्टः पतङ्गीराग[13]संज्ञका ॥ ४८ ॥
द्रुते द्रव्यान्तरक्षेपो लोहाद्ये क्रियते हि यः ।
स आवापः प्रतीवापस्तदे[14]वाऽऽच्छादनं मतम् ॥ ४९ ॥
द्रुते वह्निस्थिते लोहे विरम्याष्टनिमेषकम् ।
सलिलस्य परिक्षेपः सोऽभिषेक [15]इति स्मृतः ॥ ५० ॥
[16]तप्तस्याप्सु विनिक्षेपो निर्वा[17]पः स्नपनं च तत् ।
[18]प्रतीवापादिकं कार्यं द्रुते लोहे सुनिर्मले ॥ ५१ ॥
यदा हुताशो दीप्तार्चिः शुक्लोत्थानसमन्वितः ।
शुद्धावर्तस्तदा ज्ञेयः स कालः सत्त्वनिर्गमे ॥ ५२ ॥
द्राव्यद्रव्यनिभा ज्वाला दृश्यते धमने यदा ।
द्रावस्योन्मुखता सेयं बीजावर्तः स उच्यते ॥ ५३ ॥
वह्निस्थमेव शीतं यत्तदुक्तं स्वाङ्गशीतलम् ।
अग्नेराकृष्य शीतं यत्तद्बहिः शीतमीरितम् ॥ ५४ ॥
क्षाराम्लैरौषधैर्वाऽपि दोलायन्त्रे स्थितस्य हि ।
पचनं स्वेदनाख्यं स्यान्मलशैथिल्यकारकम् ॥ ५५ ॥

---

१ क. खर्पराख्येन । २ ज. कृष्टव° । ३ ग. °योर्मलना° । ङ. °योर्मेलनं ध्मा° । ४ ग. °ध्मानाद्वन्दनं । ङ. °ध्मानाद्वन्धनं । ५ ख. नागाद्रव्या° । घ. भागाद्रव्याधिकाः क्षे° । ङ. भागाद्रूप्या° । ज. भोगिदग्धाधिके क्षे° । ट. भागाद्द्रव्याद्विकक्षेयम° । ६ क द्रवैर्वा । ग. द्रव्यैर्वा । ७ ङ. वर्णिकाद्रासो । ८ क. °तङ्गक° । ९ ग. जातलो° । १० ज. तारे च हे° । ११ क. वल्लिका । ग. कुल्लुका । ङ. खल्लिका । ज. फुल्लिका । ट. उलका । १२ क. विनिर्यातः । ङ. विनिर्याति । १३ ङ. संज्ञकः ज. संज्ञिता । १४ ज. °देव च्छेद° । १५ घ. इतीरितः । १६ ज. तप्तास्वप्सु । १७ क. °वांसः स्न° । ख. °र्वापस्नाप° । ज. °र्वापस्तप° । १८ ङ. प्रतिवा° ।

[1]उदितैरौषधैः सार्धं [2]सर्वाम्लैः काञ्जिकैरपि ।
पेषणं मर्दनाख्यं स्याद्बहिर्मलविनाशनम् ॥ ५६ ॥
मर्[3]दनादिष्टभैषज्यै[4]र्नष्टपि[5]ष्टत्वकारकम् ।
तन्मूर्छनं हि[6] वङ्गादिभुजकञ्चुकनाशनम् ॥ ५७ ॥
स्वेदातपादियोगेन स्वरूपापादनं कृ[7]तम् ।
तदुत्थापनमित्युक्तं मूर्छाव्यापत्तिनाशनम् ॥ ५८ ॥
स्वरूपस्य विनाशेन पिष्टत्वा[8]द्बन्धनं हि तत् ।
विद्भि[9]र्निर्जितः सूतो नष्टपिष्टिः स उच्यते ॥ ५९ ॥
उक्तौषधैर्मर्दितपारदस्य यन्त्रस्थितस्योर्ध्वमधश्च तिर्यक् ।
नि[10]र्वापणं पातनसंज्ञमुक्तं वङ्गाहिसंपर्कजकञ्चुकघ्नम् ॥ ६० ॥
जलसैन्धवयुक्तस्य रसस्य दिवस[11]त्रयम् ।
स्थिति[12]रास्थापनी कुम्भे याऽसौ रोधनमुच्यते ॥ ६१ ॥
रोधनाल्लब्धवीर्यस्य चपलत्वनिवृत्तये ।
क्रियते पारदे स्वेदः प्रोक्तं नियमनं हि तत् ॥ ६२ ॥
धा[13]तुपाषाणमूलाद्यैः संयुक्तो घटमध्य[14]गः ।
ग्रासार्थं त्रिदिनं [15]स्वेदो दीपनं तन्मतं बुधैः ॥ ६३ ॥
इयन्मानस्य सूतस्य [16]भोज्यद्रव्या[17]त्मिका मि[18]तिः ।
[19]इयतीत्युच्यते[20] याऽसौ ग्रासमा[21]नं समीरितम् ॥ ६४ ॥
ग्रासस्य चा[22]रणं ग[23]र्भद्रावणं जारणं तथा ।
इति त्रिरूपा निर्दिष्टा जारणा व[24]र्रवार्तिकैः ॥ ६५ ॥
ग्रासः पि[25]ण्डः परीणामस्तिस्र[26]श्चाख्या परा पुनः ।
स[27]मुखा निर्मुखा चेति जारणा द्विविधा पुनः ॥ ६६ ॥
निर्मुखा जारणा प्रोक्ता [28]बीजादानेन भागतः ।
शुद्धं स्वर्णं च रूप्यं च बीजमित्यभिधीयते ॥ ६७ ॥

१ क. उदिष्टैरौ°। २ ग. सत्त्वाम्लैः । ३ क. ठ. ड. °र्दनोद्दिष्ट°। ङ. °र्दनं पिष्ट°। ४ ज. °र्नष्टं पि°। ५ क. °ष्टकका°। ६ क. हि वार्यादि°। ङ. हि यत् । ७ ज. पुनः । ८ क. °त्वाबाधनं । ङ. °त्वापादनं हि यत् । ज. °त्वात्साधनं तु यत् । ९ क. °द्भिर्जितसूतोऽतो न°। ङ. °द्भिर्जितसूतोऽसौ नष्टपिष्टः स । ज. °द्भिर्हि जितः सूतो नष्टपिष्टः स ।१० ङ. निर्यापणं । ११ क. °त्रये ।१२ क. °रास्यायनी । ख. °राप्यायनी । घ. °राख्यायिनी । ङ. °राप्यायने कुं। ज. °राख्यायनी । १३ क. °तुवापण° । ख. °तुवापनमू°। १४ क. °ध्यगः । १५ क. स्वेद्यो । १६ ग. भोज्यैर्द्रव्यात्मिका मितिः । १७ ज. °व्यात्मका°। १८ ङ. मितिः । १९ ज.जयन्तीत्यु°। २० ज. °तऽथासौ । २१ क. °मानमितीरि°। २२ ट. चरणं । २३ क. गर्भे द्रा°। २४ ङ. °रवार्ति°। २५ ङ. पिंष्टः । २६ ङ. ड°.श्चाख्याः प°। २७ क. ठ. ड. संमु°। ङ. सुमु°। २८ घ. बीजदा°। ज. बीजाधाने°।

चतुःषष्ट्यंशतो बीजप्रक्षेपो मुखमुच्यते ।
एवं कृते रसो ग्रासलोलुपो मुखवान्भवेत् ॥ ६८ ॥
कठिनान्यपि लोहानि क्षमो भवति भक्षितुम् ।
इयं हि संमुखा प्रोक्ता जारणा मृगचारिणा ॥ ६९ ॥
दिव्यौषधिसमायोगात्स्थितः प्रकटकोष्ठिषु ।
भुञ्जीताखिललोहाद्यं योऽसौ राक्षसवक्त्रवान् ॥ ७० ॥
रसस्य जठरे ग्रासक्षेपणं चारणा मता ।
ग्रस्तस्य द्रावणं गर्भे गर्भद्रुतिरुदाहृता ॥ ७१ ॥
बहुवारं द्रुतिं कृत्य घनसत्त्वादिकं खलु ।
जारणाय रसेन्द्रस्य सा बाह्यद्रुतिरुच्यते ॥ ७२ ॥
निर्लेपत्वं द्रुतत्वं च तेजस्त्वं लघुता तथा ।
असंयोगश्च सूतेन पञ्चधा द्रुतिलक्षणम् ॥ ७३ ॥
औषधाध्मानयोगेन लोहधात्वादिकं तथा ।
संतिष्ठते द्रवाकारं सा द्रुतिः परिकीर्तिता ॥ ७४ ॥
द्रुतग्रासपरीणामो विडयन्त्रादियोगतः ।
जारणेत्युच्यते तस्याः प्रकाराः सन्ति कोटिशः ॥ ७५ ॥
क्षारैरम्लैश्च गन्धाद्यैर्मूत्रैश्च पटुभिस्तथा ।
रसग्रासस्य जीर्णार्थं तद्विडं परिकीर्तितम् ॥ ७६ ॥
सुसिद्धबीजधात्वादिजारणेन रसस्य हि ।
पीतादिरागजननं रञ्जनं परिकीर्तितम् ॥ ७७ ॥
सूते सतैलयन्त्रस्थे स्वर्णादिक्षेपणं हि यत् ।
वेधाधिक्यकरं लोहे सारणा सा प्रकीर्तिता ॥ ७८ ॥
व्यवायिभेषजोपेतो द्रव्ये क्षिप्तो रसः खलु ।
वेध इत्युच्यते तज्ज्ञैः स चानेकविधः स्मृतः ॥ ७९ ॥
लेपः क्षेपश्च कुन्तश्च धूमाख्यः शब्दसंज्ञकः ।
लेपेन कुरुते लोहं स्वर्णं वा रजतं तथा ॥ ८० ॥
लेपवेधः स विज्ञेयः पुटमत्र च सौकरम् ।
प्रक्षेपणं द्रुते लोहे वेधः स्यात्क्षेपसंज्ञितः ॥ ८१ ॥

१ ङ. °षष्टयद्रुतो । २ ग. समुखा । ३ ग. °गचारि° । ४ घ. °कोष्टिषु । ५ ज. भुञ्जे निखि° । ६ क. °प्रक्षेप° । ७ ग. बाहुवेन । ८ क. द्रुताकृत्य । ९ ग. लोहं धा° । १० घ. द्रुते ग्रा° । ङ. °द्रुतिग्रा° । ११ ग. °परिमाणो वि° । १२ क.ड.ङ. °रैरम्लै° । १३ ग. जारणं । १४ ध. °ते सुते° । १५ ग. °वायिभेषजोपेतो° । १६ क. लेपनं । १७ ज. °संज्ञकः ।

[1]संदंशधृतसूतेन द्रुतद्र[2]व्याहृतिश्च या ।
सुवर्णत्वादि[3]करणं कुन्तवेधः स उच्यते ॥ ८२ ॥
वह्नौ धूमायमानेऽन्तः प्रक्षिप्तरसधूमतः ।
स्वर्णाद्यापादनं लोहे धूमवेधः स ईरितः ॥ ८३ ॥
[4]मुख[5]स्थितरसेनाल्पलोह[6]स्य दमनात्खलु ।
स्वर्णरूप्यत्वजननं शब्दवेधः [7]स कीर्तितः ॥ ८४ ॥
सिद्ध[8]द्रव्यस्य सूतेन कालुष्यादिनिवारणम् ।
प्रकाशनं च वर्णस्य तदु[9]द्घाटनमीरितम् ॥ ८५ ॥
क्षाराम्लैरौषधैः सार्धं भाण्डं रुद्ध्वाऽतियत्नतः ।
भूमौ निखन्यते [10]यत्नात्स्वेदनं संप्रकीर्तितम् ॥ ८६ ॥
रसस्यौषधयुक्तस्य भाण्डरुद्धस्य यत्नतः ।
[11]सदाग्नियुतचूल्यन्तं क्षेपः संन्यास उच्यते ॥ ८७ ॥
द्वावेतौ स्वेदसंन्यासौ रसराजस्य [12]निश्चितम् ।
गुणप्रभावजनकौ शीघ्रव्याप्तिकरौ तथा ॥ ८८ ॥
रस[13]निर्गममहाब्धेः सोमदेवः समन्ता-
त्स्फुटतरपरि[14]भाषानामरत्नानि हृत्वा ।
व्यरचयदतियत्नात्तैरिमां कण्ठमालां
कलय[15]न्ति भिष[16]गग्र्यो मण्डनार्थं सभायाम् ॥ ८९ ॥
भवेत्पठित[17]वारो यः अध्यायो रसवादि[18]ना ।
रसकर्माणि कुर्वाणो न स मुह्यति कुत्रचित् ॥ ९० ॥ ९३४ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रसपरिभाषाकथनं नामाष्टमोऽध्यायः ॥ ८ ॥

---

## अथ नवमोऽध्यायः ।

### [ अथ यन्त्राणि । ]

अथ यन्त्राणि वक्ष्यन्ते रसतन्त्राण्यशेषतः ।
समालोक्य समासेन सोमदेवेन सांप्रतम् ॥ १ ॥

---

१ ख. सद्दशं द्दत° । ङ. सदंश° । २ ङ. °व्याहति° । ज. °व्याहतिस्तु या । ग. °व्या हि निश्चया । ३ ग. घ. रणी कु° । ४ ङ. मुखास्थितिरसेनाल्पं लो° । ५ क. °स्थिते र° । ६ °स्य धम° । ७ ग. °धः प्रकी° । ८ ङ. °द्रव्येण सूतस्य का° । ९ ङ. ज. °दुत्थापनं° । १० घ. यत्तत्स्वे° । ११ घ. मन्दाग्नियुतचुल्लयन्तः । १२ ग. ठ. निश्चितौ । १३ ट. °नियम° । १४ ङ. °भाषां ना° । १५ ग. °यतु भि° । १६ क. °षगग्रयां म° । १७ ख. °तवादोयमध्या° । क. ठ. °तवारोऽयमध्या° । ङ. °तपाठोऽयमध्या° । १८ ज. °दिनाम् । ङ. °दिनः ।

स्वेदादि कर्म निर्मातुं वार्तिकेन्द्रैः प्रयत्नतः।
यन्त्र्यते पारदो यस्मात्तस्माद्यन्त्रमिति स्मृतम्॥ २॥

[१ अथ दोलायन्त्रम्]—द्रवद्रव्येण भाण्डस्य पूरितार्धोदरस्य च।
मुखस्योभयतो द्वारद्वयं कृत्वा प्रयत्नतः॥ ३॥
तयोस्तु निक्षिपेद्दण्डं तन्मध्ये रसपोटलीम्।
बद्ध्वा तु स्वेदयेदेतद्दोलायन्त्रमिति स्मृतम्॥ ४॥

[२ अथ स्वेदनीयन्त्रम्]—साम्बुस्थालीमुखाबद्धे वस्त्रे पाक्यं निवेशयेत्।
पिधाय पच्यते यत्र स्वेदनीयन्त्रमुच्यते॥ ५॥

[३ अथ पातनायन्त्रम्]—अष्टाङ्गुलपरीणाहमानोहेन दशाङ्गुलम्।
चतुरङ्गुलकोत्सेधं तोयाधारं गलादधः॥ ६॥
अधोभाण्डे मुखं तस्य भाण्डस्योपरिवर्तिनः।
षोडशाङ्गुलविस्तीर्णपृष्ठस्याऽऽस्ये प्रवेशयेत्॥ ७॥
पार्श्वयोर्महिषीक्षीरचूर्णमण्डूरफाणितैः।
लिप्त्वा विशोषयेत्संधिं जलाधारे जलं क्षिपेत्॥
चुल्ल्यामारोपयेदेतत्पातनायन्त्रमीरितम्॥ ८॥

[४ अथाधःपातनयन्त्रम्]—अधोर्ध्वभाजने लिप्तं स्थापितस्य जले सुधीः।
दीप्तैर्वनोत्पलैः कुर्यादधःपातं प्रयत्नतः॥ ९॥

[५ अथ दीपिकायन्त्रम्]—कच्छपयन्त्रान्तर्गतमृन्मयपीठस्थदीपिकासंस्थः।
तस्मिन्निपतितसूतः प्रोक्तं तद्दीपिकायन्त्रम्॥ १०॥

[६ अथ ढेकीयन्त्रम्]—भाण्डकण्ठादधश्छिद्रे वेणुनालं विनिःक्षिपेत्।
कांस्यपात्रद्वयं कृत्वा संपुटं जलगर्भितम्॥ ११॥
नलिकास्यं तत्र योज्यं दृढं तच्चापि कारयेत्॥ १२॥
युक्तद्रव्यैर्विनिक्षिप्तः पूर्वं तत्र घटे रसः।
अग्निना तापितो नालात्तोये तस्मिन्पतत्यधः॥ १३॥
यावदुष्णं भवेत्सर्वं भाजनं तावदेव हि।
जायते रससंधानं ढेकीयन्त्रमितीरितम्॥ १४॥

१ ख. ठ. °दकस्य। २ ङ. °मुखे बद्धव°। ३ ग. °हे च द°। ४ ग. °लतोत्से°। ५ क. °त्सेधतो°। ङ. °त्सेधे तो°। ६ ग. °धारे ग°। ७ क. भाण्डमुखे त°। ज. भाण्डमु°। ८ ज. °ण्डस्य परिवर्तितम्। ९ क. °लवर्तिन्यः पृष्ठस्यास्य प्र°। ग. °लविस्तीर्णे पृष्ठस्यास्मिन्प्रवे°। १० ङ. °स्यास्यं प्र°। घ. °स्यास्य प्र°। ११ घ. °शोधये° १२ ग. °अस्योर्ध्वे भा°। ङ. अस्योर्ध्वे°। १३ घ. °लिप्तस्था°। १४ घ. °नोपलैः। १५ घ. संस्थम्। १६ घ. ङ. यस्मिन्निपतति सू°। १७ ङ. °ण्डखण्डाद°। १८ क. °लमब्जित°। १९ ज. °अनास्ता°। २० क. °नं ढेकी।

[७ अथ जारणायन्त्रम्]—लोहमूषाद्वयं कृत्वा द्वादशाङ्गुलमानतः ।
ईषच्छिद्रान्वितामेकां तत्र गन्धकसंयुताम् ॥ १५ ॥
मूषायां रसयुक्तायामन्यस्यां तां प्रवेशयेत् ।
तोयं स्यात्सूतकैस्याध[1] ऊर्ध्वाधो वह्निदीपनम् ॥ १६ ॥
रसोनकै[2]वसां भंद्रे[3] पक्वतो वस्त्रगालिताम्[4] ।
दापयेत्[5]प्रचुरं यत्नादाप्लाव्य रसगन्धकौ ॥ १७ ॥
स्थालिकायां पिधायोर्ध्वं स्थालीमन्यां दृढां[6] कुरु ।
संधिं विलेपयेद्यत्नान्मृदा वस्त्रेण चैव हि ॥ १८ ॥
स्थाल्यन्तरे कपोताख्यं पुटं कर्षाग्निना सदा ।
यन्त्रस्याधः करीषाग्निं दद्यात्तीव्राग्निमेव वा ॥ १९ ॥
एवं तु त्रिदिनं कुर्यात्ततो यन्त्रं विमोचयेत् ।
तप्तोदके तप्तचुल्ल्यां न कुर्याच्छीतले[7] क्रियाम् ॥ २० ॥
न[8] तत्र क्षीयते सूतो न च गच्छति कुत्रचित् ।
अनेन च क्रमेणैव कुर्याद्गन्धकजारणाम् ॥ २१ ॥

[८ अथ कच्छपयन्त्रम्]—जलपूर्णपात्रमध्ये दत्त्वा[9] घटखर्परं सुविस्तीर्णम् ।
तदुपरि बिडमध्यगतः स्थाप्यः सूतः कृतः[10] कोष्ठ्याम् ॥ २२ ॥
लघुलोहकटोरिकया[11] कृतपणमृत्संधिलेपयाऽऽच्छाद्य ।
पूर्णेतर[12]घटखर्परमध्येऽङ्गारैः खदिरकोलभवैः ॥ २३ ॥
स्वेदनतो मर्दनतः कच्छपयन्त्रस्थितो रसो जरति ।
अग्निबलेनैव ततो गर्भे द्रवन्ति सर्वसत्त्वानि ॥ २४ ॥

[९ अथ विद्याधरयन्त्रम्]—यन्त्रं विद्याधरं ज्ञेयं स्थालीद्वितयसंपुटात् ।
चुल्लीं चतुर्मुखीं कृत्वा यन्त्रभाण्डं निवेशयेत् ॥ २५ ॥
तत्रौषधं विनिक्षिप्य निरुन्ध्याद्भाण्डकाननम् ।
कोष्ठीयन्त्रमिदं नाम्ना तन्त्रज्ञैः परिकीर्तितम् ॥ २६ ॥

[१० अथ सोमानलयन्त्रम्]—ऊर्ध्वं वह्निरधश्चाऽऽपो मध्ये तु रससंग्रहः ।
[13]सोमनालमिदं प्रोक्तं जारयेद्गगनादिकम् ॥ २७ ॥

[११ अथ गर्भयन्त्रम्]—गर्भयन्त्रं प्रवक्ष्यामि पिष्टिका[14]भस्मकारणम्[15] ।
चतुरङ्गुलदीर्घां तु त्र्यङ्गुलोन्मितविस्तराम् ॥ २८ ॥

---

१ ङ. °कस्योधो गन्धाधो°। २ ट. °करसं भ°।३ ज. रुद्रे । ४ ट. °लितम् ।५ ख. °दापात्य र°। ६ ङ. दृढं । ७ क. °तलीं क्रि°। ८ ग. तेनात्र । ९ ङ. °त्वाऽथ घ°। १० घ. कृतकोष्ठ्यम् । ११ ग. °या पटुत्तं°। १२ घ. पूर्वोक्तघ°। ङ. पूर्ण तद्घट°। १३ क. ठ. सोमानल°। १४ ङ. पिष्टाभस्म च कारकम् । १५ क. °रकम् ।

मृन्मयीं सुदृढां मूषां वर्तुलं कारयेन्मुखम् ।
[1]लोहस्य विंशतिर्भागा भाग एकस्तु गुग्गुलोः ॥ २९ ॥
सुश्लक्ष्णं पेषयित्वा तु वारं वारं पुनः पुनः ।
मूषालेपं दृढं कृत्वा लव[2]णार्ध[3]मृदम्बुभिः ॥ ३० ॥
[4]कर्षैस्तुषाग्निना भूमौ स्वेदयेन्मृदुमानवित् ।
अहोरात्रं त्रिरात्रं वा रसेन्द्रो भस्मतां व्रजेत् ॥ ३१ ॥

[१२ अथ हंसपाकयन्त्रम्]—खर्परं सिकतापूर्णं कृत्वा तस्योपरि न्यसेत् ।
अपरं खर्परं तत्र शनैर्मृद्वग्निना पचेत् ॥ ३२ ॥
पञ्चक्षारैस्तथा मूत्रैर्लवणं च बिडं ततः ।
हंसपाकं समाख्यातं यन्त्रं तद्वार्तिकोत्तमैः ॥ ३३ ॥

[१३ अथ वालुकायन्त्रम्]—[5]सरसां गूढवक्त्रां [6]मृद्वस्त्राङ्गुलघनावृ[7]ताम् ।
शोषितां काचकलशीं पूरयेत्रिषु भागयोः ॥ ३४ ॥
भाण्डे वितस्तिगम्भीरे वालुकासु प्रति[8]ष्ठितम् ।
[9]भागस्य पूरयेत्रिभिरन्याभिरवगुण्ठयेत् ॥ ३५ ॥
भाण्डवक्त्रं [10]माणिकया संधिं लिम्पेन्मृदा पचेत् ।
चुल्ल्यां तृणस्य [11]चाऽऽदा[12]हान्मणिकापृष्ठवर्तिनः ॥
एतद्धि वालुकायन्त्रं तद्यन्त्रं लवणा[13]श्रयम् ॥ ३६ ॥
[14]पञ्चाढवालु[15]कापूर्णे भाण्डे निक्षिप्य यत्नतः ।
पच्यते रसगो[16]लोऽयं वालुकायन्त्रमीरितम् ॥ ३७ ॥

[१४ अथ लवणयन्त्रम्]—एवं लव[17]णनिक्षेपात्प्रोक्तं लवणयन्त्रकम् ।
अन्तःकृतरसा[18]लेपात्ताम्रपात्रमुखस्य च ॥ ३८ ॥
लिप्त्वा मृल्लवणेनैव संधिं भाण्डतलस्य च ।
तद्भाण्डं पटुनाऽऽपूर्य क्षारैर्वा पूर्ववत्पचेत् ॥ ३९ ॥
एवं लवणयन्त्रं स्याद्रसकर्मणि शस्यते ॥ ४० ॥

[१५ अथ नालिकायन्त्रम्]—लोहनालगतं सूतं भाण्डे लवणपूरिते ।
निरुद्धं विपचेत्प्रा[19]ग्वन्नालिकायन्त्रमीरितम् ॥ ४१ ॥

---

१ क. लोणस्य । ङ. लोनस्य । २ ङ. °वणेन मृदाम्बुभिः । ३ क. मृदाम्बु° । ४ ग. कर्षे तुषा° । ङ. कर्षैस्तुषा° । ज. कर्षे तुषा° । ५ ग. सुरसां । ६ क. °मृद्वस्त्रयङ्गुल° । ७ घ. °वृतम् । ८ घ. °ष्ठिताम् । ९ ग. तद्भाण्डं । ज. भाण्डस्य । १० क. नालिकायाः । ग. मणिकया । घ. मालिकाया । ट. मालिकया । ११ ज. स्य चाऽऽदा° । १२ ङ. °हान्माणि° । १३ च. °श्रये । १४ क. पाश्चा° । १५ ङ. °काचूर्णे । १६ ज. °लाऽयं वा° । १७ °णनिक्षे° । १८ ट. °लेपस्ताम्र° । १९ घ. °ग्वन्नालि° ।

[१६ अथ भूधरयन्त्रम्]—वालुकागूढसर्वाङ्गां गर्ते[1] मूषां रसान्विताम् ।
दीप्तोत्पलैः संवृणुयाद्यन्त्रं तद्भूधराह्वयम् ॥ ४२ ॥
[१७ अथ पुटयन्त्रम्]—शरावसंपुटान्तस्थं करीषेष्वग्निमानवित् ।
पचे[2]च्चुल्ल्यां[3] द्वियामं वा रसं तत्पुटयन्त्रकम् ॥ ४३ ॥
[१८ अथ कोष्ठीयन्त्रम्]—षोडशाङ्गुलविस्तीर्णं[4] हस्तमात्रायतं समम् ।
धातुसत्त्वनिपातार्थं कोष्ठीयन्त्रमिति[5] स्मृतम् ॥ ४४ ॥
यत्र[6] लोहमये पात्रे पार्श्वयोर्वलयद्वयम् ।
ताद्दक्स्वल्पतरं पात्रं वलयप्रोत[7]कोष्ठकम् ॥ ४५ ॥
पूर्वपात्रोपरि[8]न्यस्तस्वल्पपात्रे[9] परि[10]क्षिपेत् ।
रसं संमूर्छितं स्थूलपात्रमापूर्य काञ्जिकैः ।
द्वियामं स्वेदयेदेवं रसोत्थापनहेतवे ॥ ४६ ॥
[१९ अथ जलहार्ययन्त्रम्]—एतत्[11]स्याज्जलहार्य[12]यन्त्रं रस[13]षाड्गुण्यकारणम् ।
सूक्ष्मकान्तमये पात्रे रसः स्याद्गुणवत्तरः ॥ ४७ ॥
[२० अथ तिर्यक्पातनयन्त्रम्]—क्षिपेद्रसं घटे[14] दीर्घे[15] नताधोनालसंयुते ।
तन्नालं[16] निक्षिपेदन्य[17]घटकुक्ष्यन्तरे खलु ॥ ४८ ॥
तत्र रुद्ध्वा मृदा सम्यग्वदने घटयोरधः ।
अधस्ता[18]द्रसकुम्भस्य ज्वालयेत्तीव्रपावकम् ॥ ४९ ॥
इतरस्मिन्घटे तोयं प्रक्षिपेत्स्वादुशीतलम् ।
तिर्यक्पातनमेतद्धि वार्तिकैरभिधीयते ॥ ५० ॥
[२१ अथ पालिकायन्त्रम्]—चषकं वर्तुलं[19] लौहं विनताग्रोर्ध्वदण्डकम् ।
एतद्धि[20] पालिकायन्त्रं बलिजारणहेतवे ॥ ५१ ॥
[२२ अथ घटयन्त्रम्]—चतुष्प्रस्थजलाधार[21]श्चतुरङ्गुलिकानन[22]ः ।
घटयन्त्रमिदं प्रोक्तं तदा[23]प्यायनकं स्मृतम् ॥ ५२ ॥
[२३ अथेष्टकायन्त्रम्]—विधाय वर्तुलां[24] गर्तां मल्ल[25]मत्र निधाय च ।
विनिधायेष्टकां तत्र मध्य[26]गर्तवतीं शुभाम् ॥ ५३ ॥

---

१ क. गर्भे । २ ज. पचेत्तच्चुल्ल्यां यामं । ३ ङ. °ल्ल्यां च या° । ४ ङ. °विस्तारं ह° ।५ ङ. °मिदं शुभम् । ६ ङ. यन्त्रलो° । ७ ग. °तपात्रक° । ८ ङ. °रि न्यस्य स्व° । ९ ज. °पात्रोप° । १० क. परे क्षि° । ११ ङ. तत्स्यात्खलचरीयन्त्रं । १२ °हाय° । १३ ङ. रससाद्गुण्यका° । क. रसः स्याद्गुण्यका° । ज. रसे स्याद्गुणकारकम् । १४ ङ. घटं दीर्घगलाधो° । १५ ग. दीर्घनताधो° । घ. दीर्घनताधो । १६ क. तं नालं । १७ क. °न्यद्घट° । १८ ज. °स्तात्कुम्भराजस्य । १९ ङ. °लं लोहं वितताग्रोर्ध्वद° । २० ङ. °द्धि पलि° । २१ ङ. °धारं चतु° । २२ ङ. °ननम् । २३ ग. तदुत्थापनकं । २४ ङ. °र्तुलं गर्तं म° । २५ ज. °ल्लयन्त्रं नि° । २६ ग. मध्ये ग° ।

गर्तस्य परितः कुर्यात्पालिकामङ्गुलोच्छ्रयाम् ।
गर्ते सूतं विनिक्षिप्य गर्तास्ये वसनं क्षिपेत् ॥ ५४ ॥
निक्षिपेद्गन्धकं तत्र मल्लेनाऽऽस्यं निरुध्य च ।
मल्लपालिकयोर्मध्ये मृदा सम्यङ्निरुध्य च ॥ ५५ ॥
वनोत्पलैः पुटं देयं कपोताख्यं न चाधिकम् ।
इष्टिकायन्त्रमेतत्स्याद्गन्धकं तेन जारयेत् ॥ ५६ ॥
[२४हिङ्गुलाकृष्टिविद्याधरयन्त्रम्]स्थालिकोपरि विन्यस्य स्थालीं सम्यङ्निरु
ऊर्ध्वस्थाल्यां जलं क्षिप्त्वा वह्निं प्रज्वालयेदधः ॥ ५७ ॥
एतद्विद्याधरं यन्त्रं हिङ्गुलाकृष्टहेतवे ॥ ५८ ॥
[२५अथ डमरुकाख्यं यन्त्रम्]–यन्त्रस्थाल्युपरि स्थालीं न्युब्जां दत्वा निरुं
यन्त्रं डमरुकाख्यं तद्रसभस्मकृते हितम् ॥ ५९ ॥
[२६ अथ नाभियन्त्रम् ]—मल्लमध्ये चरेद्गर्तं तत्र सूतं सगन्धकम् ।
गर्तस्य परितः कुड्यं प्रकुर्यादङ्गुलोच्छ्रितम् ॥ ६० ॥
ततश्चाऽऽच्छादयेत्सम्यग्गोस्तनाकारमूषया ।
सम्यक्तोयमृदा रुद्ध्वा सम्यग्यन्त्रोच्यमानया ॥ ६१ ॥
लेहवत्कृतबब्बूलक्काथेन परिमर्दितम् ।
जीर्णकिट्टरजः सूक्ष्मं गुडचूर्णसमन्वितम् ।
इयं हि जलमृत्प्रोक्ता दुर्भेद्या सलिलैः खलु ॥ ६२ ॥
खटिकापटुकिट्टैश्च महिषीदुग्धमर्दितैः ।
वह्निमृत्स्ना भवेद्घोरवह्नितापसहा खलु ॥ ६३ ॥
एतया मृत्स्नया रुद्धो न गन्तुं क्षमते रसः ।
विदग्धवनिताप्रौढप्रेम्णा रुद्धः पुमानिव ॥ ६४ ॥
नन्दी नागार्जुनश्चैव ब्रह्मज्योतिर्मुनीश्वरः ।
वेत्ति श्रीसोमदेवश्च नापरः पृथिवीतले ॥ ६५ ॥
ततो जलं विनिक्षिप्य वह्निं प्रज्वालयेदधः ।
नाभियन्त्रमिदं प्रोक्तं नन्दिना सर्ववेदिना ॥ ६६ ॥
अनेन जीर्यते सूतो निर्धूमः शुद्धगन्धकः ॥ ६७ ॥

---

१ क. वदनं । २ ग. °कृष्टिहे° । ३ क. °यन्त्रं स्था° । घ. यन्त्र स्था° । ४ घ. °रुध्यते । ५ क. °र
६ घ. °क्तोयं मृ° । ७ ङ. °मृदां रु° । ८ कं. °म्यग्यन्त्रोच्य° । ङ. °सम्यग्गर्तोच्च° । ९ क. बर्बूरक्का

[२७ अथ ग्रस्तयन्त्रम्]—मूषां मूषोदराविष्टामा[1]द्यन्तसमवर्तुलाम्।
चि[2]पिटा च तले प्रोक्तं ग्रस्तयन्त्रं मनीषिभिः॥
सूते[3]न्द्ररन्धनार्थं हि रसविद्भिरुदीरितम्॥ ६८॥

[२८अथ स्थालीयन्त्रम्]—स्थाल्यां ताम्रादि नि[4]क्षिप्य मल्लेनाऽऽस्यं निरुध्य च।
पच्यते स्थालिकाध[5]स्थस्थालीयन्त्रमि[6]तीरितम्॥ ६९॥

[२९ अथ धूपयन्त्रम्]—वि[7]धायाष्टाङ्गुलं पात्रं लौहमष्टाङ्गुलोच्छ्रयम्।
कण्ठाधो द्व्यङ्गुले देशे [8]जलाधारं हि तत्र च॥ ७०॥
तिर्यग्लोहशलाकाश्च [9]तन्वीस्तिर्यग्विनिक्षिपेत्।
तनूनि स्वर्णपत्राणि तासामुपरि विन्यसेत्॥ ७१॥
[10]पात्राधो निक्षिपेद्धूमं वक्ष्यमाणमिहैव हि।
तत्पात्रं न्युब्जपात्रेण च्छादयेदपरेण हि॥ ७२॥
मृदाविलिप्य संधिं च वह्निं प्रज्वालयेदधः।
तेन पत्राणि [11]कृष्णानि हतान्युक्तविधानतः॥ ७३॥
रसश्चरति वेगेन द्रुतं [12]गर्भे द्रवन्ति च।
गन्धालकशिलानां हि कज्जल्या वा मृताहिना॥ ७४॥
धूपनं स्व[13]र्णपात्राणां प्रथमं परिकीर्तितम्।
[14]ता[15]रार्थं तारपत्राणि [16]मृतवङ्गेन धूपयेत्॥ ७५॥
धूपयेच्च यथायो[17]ग्यैरन्यैरुपरसैरपि।
धूपयन्त्रमिदं प्रोक्तं जारणा[18]द्रव्य[19]साधनम्॥ ७६॥

[३०अथ कन्दुकयन्त्रम्]—स्थूलस्थाल्यां जलं क्षिप्त्वा वासो बद्ध्वा मुखे दृढम्।
तत्र स्वेद्यं विनि[20]क्षिप्य [21]तन्मुखं प्रपिधाय च॥ ७७॥
[22]अधस्ताज्ज्वालयेदग्निं [23]यन्त्रे तत्[24]कन्दुयन्त्रकम्।
स्वेदनीयन्त्रमित्यन्ये प्राहुरन्ये मनीषिणः॥ ७८॥
यद्वा स्थाल्यां जलं क्षिप्त्वा तृणं क्षिप्त्वा तृणोपरि।
स्वेद्यद्रव्यं परिक्षिप्य पिधानं प्रविधाय च॥ ७९॥
अधस्ताज्ज्वालयेद्वह्निं यन्त्रं तत्कन्दुयन्त्रकम्॥८०॥

---

१ क. °माद्यां तत्सम°। ख. °माद्यन्तः स°। २ घ. °पिटां च°। ३ क. °तेन्द्रं र°। ४ घ. निक्षेप्य। ५ घ. °धस्तात्स्थाली°। ज. °धस्थः स्था°। ६ ज. °मिदं स्मृत°। ७ ङ. पिधा°। ८ ज. गलाधारे। ९ घ. तन्व्यस्ति°। १० ज. पत्रा°। ११ क. °कृत्स्नानि। ज. कृष्टानि। १२ ट. गर्ते। १३ क. °र्णपत्रा°। १४ क. तारार्धं। १५ ज. रार्थता°। १६ क. मृन्मयेह्नि च°। १७ ङ. ग्यै रसै रु°। १८ ख. द्रवसाधने। १९ ग. °साधने। २० ङ. °क्षिप्तं त°। २१ ङ. पिधानं प्रविधाय°। ग. मल्लेन। २२ ङ. अधोऽग्निं ज्वालयेत्तत्र तत्स्यात्कन्दुकय°। २३ क. यन्त्रं। २४ ग. °त्कम्बुय°।

[३१ अथ खल्वयन्त्रम्]–खल्वयोग्या शिला नीला श्यामा स्निग्धा दृढा गुरुः ।
षोडशाङ्गुलकोत्सेधा नवाङ्गुलकविस्तरा ॥ ८१ ॥
चतुर्विंशाङ्गुला दीर्घा घर्षणी[1] द्वादशाङ्गुला ॥
विंशत्यङ्गुलदीर्घा वा स्यादुत्सेधे दशाङ्गुला ।
खल्वप्रमाणं तज्ज्ञेयं श्रेष्ठं स्याद्रसमर्दने ॥ ८२ ॥
खल्वयन्त्रं त्रिधा[2] प्रोक्तं रसादि[3]सुखमर्दने ।
निरुद्द्वारौ[4] सुमसृणौ कार्यौ पुत्रिकया युतौ[5] ॥ ८३ ॥
उत्सेधे[6] स दशाङ्गुलः खलु कलातुल्याङ्गुलायामवा-
न्विस्तारेण दशाङ्गुलो मुनिमितैर्निम्नः[7] स्थितैर्वाऽङ्गुलैः ।
पाल्या[8]द्व्यङ्गुलविस्तरश्च मसृणोऽतीवार्धचन्द्रोपमो[9][10]
घर्षो[11] द्वादशकाङ्गुलश्च तदयं खल्वो मतः सिद्धये ॥ ८४ ॥
अस्मिन्पञ्चपलः सूतो मर्दनीयो विशुद्धये ।
तत्तदौचित्ययोगेन खल्वेष्वन्येषु [12]योजयेत् ॥ ८५ ॥
द्वादशाङ्गुलविस्तारः [13]खल्वोऽतिमसृणोपलः ।
चतुरङ्गुलनिम्नश्च मध्येऽतिमसृणीकृतः ॥ ८६ ॥
मर्दकश्चिपिटोऽधस्तात्सुग्राहश्च शिखोपरि ।
अयं हि वर्तुलः खल्वो मर्दनेऽतिसुखप्रदः[14] ॥ ८७ ॥
लौहो नवाङ्गुलः खल्वो निम्नत्वे च षडङ्गुलः ।
मर्दकोऽष्टाङ्गुलश्चैव तप्तखल्वाभिधोऽप्ययम् ॥ ८८ ॥
कृत्वा खल्वाकृतिं चुल्लीमङ्गारैः परिपूरिताम् ।
तस्यां [15]निवेशितं खल्वं पार्श्वे भस्त्रिकया धमेत् ॥ ८९ ॥
[16]रसेन मर्दिता पिष्टिः क्षारैरम्लैश्च संयुता ।
[17]प्रद्रवत्यतिवेगेन स्वेदिता नात्र संशयः ॥ ९० ॥
कृतः कान्तायसा[18] सोऽयं भवेत्कोटिगुणो रसः ॥९१॥१०२९॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रससमुच्चये
यन्त्रनिरूपणं नाम नवमोऽध्यायः ॥ ९ ॥

---

१ ङ. घर्षणा । २ ग. घ. द्विधा । ३ घ. °दिमुख° । ४ ट. °द्वारे सुमसृणे कार्ये पुत्रिकया युते । ५ ग. तु ते । ६ ङ. °धेन द° । ७ ङ. °म्नस्तथैवाङ्गु° । ८ ग. पाल्यां द्व्य° । ९ ज. °णो जीवार्धचन्द्रोपमा घर्षी द्वा° । १० क. °चन्द्रोपमाघर्षी द्वा° । ११ घ. घस्री । ङ. धात्री । १२ ङ. शोधयेत् । ट. साधयेत् । १३ ज. खल्वः स्याच्चतुरङ्गुलः । १४ ङ. °खल्वो भवति वर्तुलः । ङ. °खल्वोऽभिधीयते । १५ ङ. निवेश्य तं । १६ ङ. तस्मिन्निवमर्दिता पिष्टी । ग. तदन्तर्मर्दिता । १७ ज. प्रवहत्यतियोगेन । १८ ज. °यसः सो° ।

अथ दशमोऽध्यायः ।

[ अथ मूषादिकथनम् । ]

मूषा हि [1]क्रौञ्चिका प्रोक्ता कुमुदी [2]करैभादिका ।
[3]पाँचनी वह्निमित्रा च रसवादि[4]भिंरिष्यते ॥ १ ॥
मुष्णाति दोषान्[5]मूँषेया सा मूषेति निगद्यते ।
उपादानं भवे[6]त्तस्या मृत्तिकालोहमेव च ॥ २ ॥
[7]मूँषा मुखविनिष्क्रान्ता वरमेकाऽपि [8]काकिनी ।
दुर्जनप्रणिपाते[10]नं धिग्लक्षमपि मानिनाम् ॥ ३ ॥
मूषापिधानयो[11]र्बन्धे बन्धनं संधिलेपनम् ।
[12]रन्ध्राणं रन्ध्रणं चैव संश्लिष्टं संधिबन्धनम् ॥ ४ ॥
मृत्तिका पाण्डुर[13]स्थूला शर्करा शोणपाण्डुरा ।
चिराध्मानसहा सा हि मूषार्थमतिशस्यते ॥
तदभावे च वाल्मीकी कौलाली वा समीर्यते ॥ ५ ॥
या मृत्तिका दग्धतुषैः शणेन शिखित्रकैर्वा [14]हयैलद्दिना च ।
लौहेन दण्डेन च कुट्टिता सा साधार[15]णा सा खलु मूषि[16]कार्थे ॥६॥
श्वेताश्मानस्तुषा दग्धाः शि[17]खित्राः श[18]र्णखर्परैः ।
[19]लद्दिः [20]किट्टं च योग्यं च संयोज्या [21]मूषिका[22]मृदा ॥ ७ ॥
मृदस्त्रिभागाः शणलद्दि[23]भागौ भागश्च निर्दग्धतुषोपलादेः ।
किट्टार्धभागं परिखण्ड्य [24]वज्रमूषां विदध्यात्खलु सत्त्वपाते ॥ ८ ॥
[25]दग्धाङ्गारतुषोपेता मृत्स्ना वल्मीकमृत्तिका ।
[26]तत्तद्भिडसमायुक्ता तत्तद्भिडविलेपिता ॥ ९ ॥
[27]तथा या विहिता मूषा योगमूषेति कथ्यते ।
अनया साधितः सूतो जायते गुणवत्तरः ॥ १० ॥
गारभूनागधौताभ्यां शणैर्दग्धतुषैरपि ।
समैः समा च मूषामृन्महिषीदुग्धसंयुता ॥ ११ ॥

---

१ ङ. कोविका । २ ग. °रहाटिका । ३ ट. पावनी । ४ ग. °भिरीर्यते । ५ ङ. न्मूषा या । ६ ङ. °सस्यां मृ° । ७ क. मूखा मूखविनिःक्रान्ता । ८ ङ. °काकिका° । ९ घ. कालिनी । १० ग. °न दिग्ल° । ११ ग. °न्धे रन्ध्रणं प्रविले° । १२ क. अंघ्रणं । घ. अन्ध्रणं । १३ क. °स्थूलश° । १४ ङ. °यलिद्दि° । १५ घ. °णास्यात्खलु । १६ क. °कार्थम् । १७ ज. °खिजा सणकर्पटैः ।१८ क. °णखर्परे । ख. °णखर्परौ । ग. °णखर्परम् । ग. °णकर्पटैः । ङ. °णकर्पटे । १९ क. लार्द्दिः कि° । ग. लद्दि । २० ङ. °ट्टं कृष्णमृत्स्ना सं° । २१ ज. °ज्या मृत्तिकामृदि । २२ ङ. मृदि । २३ ङ. °भागो भा° । २४ ग. वज्रे मू° । २५ ङ. दग्धगार° । २६ क. तद्वद्भि° । २७ ङ. तया ।

[1]क्रौञ्चिका [2]यन्त्रमात्रं हि बहुधा परि[3]कीर्तिता ।
[4]एषा विरचिता मूषा वज्रद्रावण[5]केरिता ॥ १२ ॥
[6]दग्धपङ्कणगारा[7]ख्या किट्टाङ्गारं[8]शणान्विता ।
कृष्णमृद्भिः कृता मूषा गारमूषेत्युदाहृता ॥ १३ ॥
यामयुग्मपरिध्मानान्नासौ द्रवति वह्निना ।
वज्राङ्गारतुषास्तुल्यास्तच्चतुर्गुणमृत्तिका ॥ १४ ॥
गारा च मृत्तिकातुल्या सर्वैरेतैर्विनिर्मिता ।
[9]वरमूषेति निर्दिष्टा याममग्निं सहेत सा ॥ १५ ॥
पाषाणसहिता रक्ता रक्तवर्गा[10]म्बुसाधिता ।
[11]मृत्तदासाधिता मूषा क्षितिखेचरलेपिता ॥ १६ ॥
वर्णमूषेति सा प्रोक्ता वर्णोत्कर्षे [12]नियोज्यते ।
एवं हि श्वेतवर्गेण रूप्यमूषा समीरिता ॥ १७ ॥
[13]तत्तद्विदमृदोद्भूता तत्तद्विडविलेपिता ।
देहलोहार्थयोगार्थं बिडमूषेत्युदाहृता ॥ १८ ॥
गारभूनागधौताभ्यां तु[14]षैमष्टगुणेन च ।
समैः समा च मूषामृन्महिषीदु[15]ग्धैमर्दिता ॥ १९ ॥
[16]क्रौञ्चिका [17]पक्षसूत्रं हि बहुधा परिकीर्तिता ।
तया विरचिता मूषा [18]लिप्त्वा मत्कुणशोणितैः ॥ २० ॥
[19]बालाब्दध्वनिमूलैश्च वज्रद्रावण[20]क्रौञ्चिका ।
[21]सहतेऽग्निं चतुर्यामं [22]द्रवेण व्यधिता सती ॥ २१ ॥
द्रवे [23]द्रवीभावमुखे मूषायां[24] ध्मानयोगतः ।
क्षणमुद्धरणं यत्तन्मू[25]षोप्यायनमुच्यते ॥ २२ ॥
वृन्ताकाकारमूषायां नालं द्वादशकाङ्गुलम् ।
धत्तूरपुष्पवच्चोर्ध्वं [26]सुदृढं श्लिष्टपुष्पवत् ॥ २३ ॥

---

१ ङ. कौञ्चिका । २ क. यन्त्रमात्रे । ङ. पक्षमात्रं । ३ ख. °तिताः । ४ क. एता । ङ. तया । ५ घ. °णकौञ्चिताः । क. ङ. ठ. °णकौञ्चिता । ६ ग. दुग्ध° । ७ क. ठ. ङ. °राष्टकि° । ८ क. °रगणान्विताः । ९ ज. गार° । १० क. °र्गानुसा° । ११ ङ. मृत्स्नया सा° । ज. मृत्तया सा° । १२ ट. नियुज्यते । ज. प्रयुज्यते । १३ ट. °त्तद्विडमृ° । ङ. °त्तद्विडसमुद्भूता । १४ ज. °षमृष्टशणे° । ङ. °षमध्याशणे° । १५ ङ. °ग्धर्मिश्रिता । १६ ङ. कौञ्चिका पक्षमात्रं ग. कौष्ठिका पक्षमूत्रं । १७ ख. पक्षमृत्सा । ट. यन्त्रमात्रं । क. पक्षमुत्रं । घ. पक्षमात्रं । १८ घ. लिप्ता । १९ ग. आबालाबन्धनिमूलैर्वज्रद्रावणकोष्ठिका । ख. बालाद्धध्वनिमूलैश्च वज्रद्रावणकौञ्चिकाः । २० ङ. °णकौञ्चिका । २१ ङ. सहतेऽग्निश्चतुर्यामं द्रवेण पतिता यदि । २२ क. ठ. द्रवेन व्यथिता । ग. द्रवेणापूरिता । घ. द्रव्येण व्यथिता । ज. द्रवेणार्पिता । २३ क. द्रवीभावमुखे । ग. द्रवीभवेमुखे । ङ. द्रवीभावमुखे । २४ क. °या ध्यान° । २५ ङ. °षायामुपपच्य° । २६ क. °ढं भूत्वा° ।

अष्टाङ्गुलं च सच्छिद्रं सा[1] स्याद्वृन्ताकमूषिका[2] ।
अनया खर्परादीनां मृदूनां सत्त्वमाहरेत् ॥ २४ ॥
मूषा या गोस्तनाकारा शिखायुक्त[3]पिधानका ।
सत्त्वानां द्रावणे शुद्धौ मूषा सा गोस्तनी भवेत् ॥ २५ ॥
निर्दिष्टा मल्लमूषा या मल्लद्वितयसंपुटात्[4] ।
पर्पट्यादिरसादीनां स्वेदनाय प्रकीर्तिता ॥ २६ ॥
कुलालभाण्डरूपा या दृढा च परिपाचिता ।
पक्वमूषेति सा प्रोक्ता पोटल्यादिविपाचने ॥ २७ ॥
निर्वक्त्रगोलकाकारा पुटन[5]द्रव्यगर्भिणी ।
गोलमूषेति सा प्रोक्ता सत्वर[6]द्रवरोधिनी ॥ २८ ॥
तले या कूर्पराकारा क्रमादुपरि विस्तृता ।
स्थूलवृन्ताकवत्स्थूला महामूषेत्यसौ स्मृता ॥ २९ ॥
सा[7] चायोभ्रकसत्त्वादेः पुटाय द्रावणाय च ।
मण्डूका[8]कारमूषा या निम्न[9]तायामविस्तरा[10] ॥ ३० ॥
षडङ्गुलप्रमाणेन मूषा मञ्जूष[11]संज्ञका ।
भूमौ निखन्य तां मूषां दद्यात्पुटमथोपरि ॥ ३१ ॥
मूषा या चिपिटा मूले वर्तुलाऽष्टाङ्गुलोच्छ्रया ।
मूषा सा मूसला[12]ख्या स्या[13]च्चक्रिबद्धरसे हिता ॥ ३२ ॥
सत्त्वानां पातनार्थाय पा[14]तितानां विशुद्धये ।
कोष्ठिका विविधाकारास्तासां लक्षणमुच्यते ॥ ३३ ॥
राजहस्तसमुत्सेधा तदर्धायामविस्तरा ।
चतुरस्रा च कुड्येन वेष्टिता मृन्मयेन च[15] ॥ ३४ ॥
एक[16]भित्तौ चरेद्द्वारं वितस्त्या भोगसंयुतम् ।
द्वारं सार्धवितस्त्या च संमितं सुदृढं शुभम् ॥ ३५ ॥
देहल्यधो विधातव्यं धमनाय यथोचितम् ।
प्रादेशप्रमिता भित्तिरु[17]त्तरङ्गस्य चोर्ध्वतः ॥ ३६ ॥

---

१ क. साक्षाद्° । २ ङ. °मूषका । ३ ङ. °युक्तापि° । ४ ज. °पुटी । ५ क. °द्रवग° । ६ ज. °द्रव्यरोधिनी । ङ. °द्रवशोधिनी । ७ क. सा च याभ्र° । ङ. सा च योभ्र ज. सा चायाभ्र° । ग. काचायोभ्र° । ८ ङ. मञ्जूषाका° । ९ ज. °म्रतो या° । ङ. °म्रत्वाया° । १० क. °रात् । ११ च. मण्डूकसं° । १२ क. मूशला° । ङ. मुशलाख्या° । ट. मुसलाख्या° । १३ घ. °चक्रीब° । १४ ज. पतितानां । १५ घ. सा । ङ. या । १६ क. वंक° । १७ ग. °त्तराङ्ग° ।

द्वारं चोपरि कर्तव्यं प्रादेशप्रमितं खलु।
ततश्चेष्टकया रुद्ध्वा द्वारसंधिं विलिप्य च॥ ३७॥
शिखित्रैस्तां समापूर्य धमेद्भस्त्राद्वयेन च।
शिखित्रान्धमनद्रव्यमूर्ध्वद्वारेण निक्षिपेत्॥ ३८॥
सत्त्वपातनगोलांश्च पञ्च पञ्च पुनः पुनः।
भवेदङ्गारकोष्ठीयं खराणां सत्त्वपातनी॥ ३९॥
दृढभूमौ चरेद्गर्तं वितस्त्या संमितं शुभम्।
वर्तुलं चाथ तन्मध्ये गर्तमन्यं प्रकल्पयेत्॥ ४०॥
चतुरङ्गुलविस्तारनिम्नत्वेन समन्वितम्।
गर्तद्वाराणि पर्यन्तं तिर्यङ्नालसमन्वितम्॥ ४१॥
किंचित्समुन्नतं बाह्यगर्ताभिमुखनिम्नगम्।
मृच्चक्रीं पञ्चरन्ध्राढ्यां गर्भगर्तोदरे क्षिपेत्॥ ४२॥
आपूर्य कोकिलैः कोष्ठीं प्रधमेदेकभस्त्रया।
पातालकोष्ठिका ह्येषा मृदूनां सत्त्वपातनी॥ ४३॥
ध्मानसाध्यपदार्थानां नन्दिना परिकीर्तिता।
द्वादशाङ्गुलनिम्ना या प्रादेशप्रमिता तथा॥ ४४॥
चतुरङ्गुलतश्चोर्ध्वं वलयेन समन्विता।
भूरिच्छिद्रवतीं चक्रीं वलयोपरि निक्षिपेत्॥ ४५॥
शिखित्रांस्तत्र निक्षिप्य प्रधमेद्वङ्कनालतः।
मूषामृद्भिर्विधातव्यमरत्निप्रमितं दृढम्॥ ४६॥
अधोमुखं च तद्वक्त्रे नालं पञ्चाङ्गुलं खलु।
वङ्कनालमिति प्रोक्तं दृढध्मानाय कीर्तितम्॥ ४७॥
गारकोष्ठीयमाख्याता सृष्टलोहविनाशनी।
कोष्ठी सिद्धरसादीनां विधानाय विधीयते॥ ४८॥
द्वादशाङ्गुलकोत्सेधा सा बुध्ने चतुरङ्गुला।
तिर्यक्प्रधमनास्याच मृदुद्रव्यविशोधनी॥४९॥ इति यन्त्राणि॥

---

१ क. रससंधिं। २ घ. ठ. ढ. °मूर्ध्वद्वा°। ३ क. °गोलाश्च। ४ ङ. गर्तोद्वराणि°। ५ ङ. °ङ्नल°। ६ क. बाह्ये ग°। ७ ख. °म्नगाम्। ८ ख. गर्भे गार्तो°। घ. गर्भगर्तोपरि। ९ ख. °देव भ°। १० ग. °तने। ११ क. °न्वितम्। १२ क. गाराकोष्ठीयमादिष्टा। १३ ज. °ता मृष्ट°। १४ ग. °सा ह्येषा वि°। ज. °साद्येषु त्रि°। १५ ङ. °नायाभिधी°। १६ ग. °स्या च मृ°।

**अथ पुटानि**—रसादिद्रव्यपाकानां प्रमाणज्ञापनं पुटम् ।
नेष्टो न्यूनाधिकः पाकः सुपाकं हितमौषधम् ॥ ५० ॥
लोहादेरपुनर्भावो गुणाधिक्यं ततोऽग्रता ।
अनप्सुमज्ज[1]नं रेखापूर्णता पुटतो भवेत् ॥ ५१ ॥
पुटाद्ग्राव्णो लघुत्वं च शीघ्रव्याप्तिश्च दीपनम् ।
[2]ज्वालितादपि सूतेन्द्राल्लोहानामधिको गुणः ॥ ५२ ॥
यथा[3]ऽऽत्मनि विशे[4]द्वह्निर्बहिस्थपुटयोगतः ।
[5]चूर्णत्वाद्धि गुणावाप्तिस्तथा लोहेषु निश्चितम् ॥ ५३ ॥
नि[6]म्ने विस्तरतः कुण्डे द्विह[7]स्ते चतुरस्रके ।
वनोत्प[8]लसहस्रेण पूरिते पुटनौषधम् ॥ ५४ ॥
[9]क्रौञ्च्यां रुद्धं प्रयत्नेन पिष्टिकोपरि निक्षिपेत् ।
वनोत्पलसहस्रार्धं [10]क्रौञ्चिकोपरि विन्यसेत् ॥ ५५ ॥
वह्निं प्रज्वालयेत्तत्र महापुटमिदं स्मृतम् ।
राजहस्तप्रमाणेन चतुरस्रं च निम्नकम् ॥ ५६ ॥
पूर्णं [11]चोपलै[12]संधीभिः कण्ठावध्यथ विन्यसेत् ।
विन्यसेत्कुमुदीं तत्र पुटनद्रव्यपूरिताम् ॥ ५७ ॥
[13]पूर्णच्छगणतोऽर्धानि गिरिण्डानि विनिक्षिपेत् ।
एतद्गजपुटं प्रोक्तं महागुणविधायकम् ॥ ५८ ॥
इत्थं चारत्निके कुण्डे पुटं वाराहमुच्यते ॥ ५९ ॥
पुटं भूमि[14]तलं यत्तद्वितस्तिद्वितयोच्छ्रयम् ।
तावच्च तलविस्तीर्णं तत्स्यात्कुक्कुटकं पुटम् ॥ ६० ॥
यत्पुटं दीयते भूमावष्टसंख्यैर्वनोत्पलैः ।
ब[15]द्ध्वा सूतार्कभस्मार्थं[16] कपोतपुटमुच्यते ॥ ६१ ॥
गोष्ठान्तर्गोखुरक्षुण्णं शुष्कं चूर्णितगोमयम् ।
[17]गोवरं तत्समादिष्टं वरिष्ठं रससा[18]र्धनम् ॥ ६२ ॥
गोवरैर्वा तुषैर्वाऽपि पुटं यत्र प्रदीयते ।
तद्गोवरपुटं प्रोक्तं रसभस्मप्रसिद्धये ॥ ६३ ॥

---

१ ङ. °ज्जने रे°। २ ङ. जारिता°। ३ ङ. °थाऽश्मनि । ४ ङ. °द्वह्नेर्ब°। ५ घ. चूर्णत्वाद्द्विगुणाव्याप्ति° ङ. चूर्णत्वादिगु°। ट. चूर्णत्वाद्विगुणाव्याप्ति°। ६ घ. निम्नवि°। ७ ङ. °हस्तच°। ८ ज. °त्पलास°। ९ ङ. कोवयां ज. कोठ्यां । १० ज. कोविकोपरि क. मूषोपरि च । ११ ख. चोत्पलसाहस्रं° । १२ क. °लसाठीभिः । १३ ङ. पूर्वच्छ°। १४ ङ. °तले य°। ग. तलं तत्त°। १५ क. बद्ध्वा सूतकभस्मार्थं । ग. तद्बध्वा सूतभस्मार्थं । १६ ङ. °र्थं कापो°। १७ क. गोवरे । १८ क. °धने ।

स्थूलभाण्डे तुषापूर्णे मध्ये मूषासमन्विते ।
वह्निना विहिते पाके तद्भाण्डपुटमुच्यते ॥ ६४ ॥
अधस्तादुपरिष्टाच्च क्रौञ्चिकाऽऽच्छाद्यते खलु ।
वालुकाभिः प्रतप्ताभिर्यत्र तद्वालुकापुटम् ॥ ६५ ॥
वह्नि[1]मित्रां क्षितौ सम्यङ्निखन्याद्द्व्यङ्गुलादधः ।
उपरिष्टात्पुटं यत्र पुटं तद्भूधराह्वयम् ॥ ६६ ॥
ऊर्ध्वं षोडशिका[2]मात्रैस्तुषैर्वा गोर्वरैः पुटम् ।
यत्र तल्लावकाख्यं स्यात्सुमृदुद्रव्यसाधने ॥ ६७ ॥
अनुक्तपुटमाने तु साध्यद्रव्यबलाबलात् ।
पुटं विज्ञाय दातव्यमूहापोहविचक्षणैः ॥ ६८ ॥
[3]पिष्टकं छगणं छाणमुत्पलं चोपलं तथा ।
गिरिण्डोपल[4]सौंठी च वराटी छगणा[5]भिधाः ॥ ६९ ॥
सुवर्णं रजतं ताम्रं त्रपु सीसकमायसम् ।
षडेतानि च लोहानि कृत्रिमौ कांस्यपित्तलौ ॥ ७० ॥
लवणानि षडुच्यन्ते सामुद्रं सैन्धवं बिडम् ।
सौवर्चलं रोमकं च चूलिकालवणं तथा ॥
क्षारत्रयं समाख्यातं य[6]वसर्जिकटङ्कणम् ॥ ७१ ॥
पलाशमुष्ककक्षारौ यवक्षारः सुवर्चिका ।
तिलनालोद्भवः क्षारः संयुक्तं क्षारपञ्चकम् ॥ ७२ ॥
घृतं गुडो माक्षिकं च विज्ञेयं मधुरत्रयम् ।
कङ्गुणीतुम्बिनी घोषा [7]करीरश्रीफलोद्भवम् ॥ ७३ ॥
[8]कटुवार्ताकसिद्धा[9]र्थसोमराजीबिभीतजम् ।
अतसीजं महाकालीनिम्बजं तिलजं तथा ॥ ७४ ॥
अपामार्गदेवदालीदन्तीतुम्बरुविग्रहात् ।
अङ्कोलोन्मत्तभल्लातपलाशेभ्यस्तथैव च ॥ ७५ ॥
एतेभ्यस्तैलमादाय रसकर्मणि योजयेत् ।
[10]जम्बूकमण्डूकवसा [11]वसा कच्छपसंभवा ॥ ७६ ॥

---

१ क. °मित्रान्क्षितौ°। ग. °मित्रक्षि°। च. °मित्रा क्षि°। २ क. °कामूत्रै°। ३ ङ. पिष्टिकं। ४ ग. °सारी च। ५ च. °भिधा। ६ क. °वर्जजि°। ७ ङ. करञ्जश्री°। ८ ख. कण्टवा°। ट. करवा°। ९ ख. °र्धरोम°। १० ङ. जलौक°। ११ घ. तथा।

कर्कोटी[1] शिशुमारी च गोमूक[2]रनरोद्भवा ।
अजो[3]ष्ट्रखरमेषाणां महिषस्य वसा[4] तथा ॥ ७७ ॥
मूत्राणि हस्तिकरभमहिषीखरवाजिनाम् ।
गोजावीनां[5] स्त्रियः पुंसां पुष्पं[6] बीजं तु योजयेत्[7] ॥ ७८ ॥
माहिषाम्बु दधिक्षीरं साभिघारं शकृद्रसः ।
तत्पञ्चमाहिषं ज्ञेयं तद्वच्छागलपञ्चकम् ॥ ७९ ॥
अम्लवेतसजम्बीरनिम्बुकं बीजपूरकम् ।
चाङ्गेरीचणकाम्लं च अम्लिकं[8] कोलदाडिमम् ॥ ८० ॥
अम्बष्ठा तिन्तिणीकं च नारङ्गं[9] रसपत्रिका ।
करवन्दं[10] तथा चान्यदम्लवर्गः प्रकीर्तितः ॥ ८१ ॥
चणकाम्लश्च सर्वेषामेक एव प्रशस्यते ॥ ८२ ॥
अम्लवेतसमेकं वा सर्वेषामुत्तमोत्तमम् ।
रसादीनां विशुद्ध्यर्थं द्रावणे जारणे हितम् ॥ ८३ ॥
कोलदाडिमवृक्षाम्लचुल्लिका[11]चुक्रिकारसैम्[12] ।
पञ्चाम्लकं समुद्दिष्टं तच्चोक्तं चाम्लपञ्चकम् ॥ ८४ ॥
इष्टिका गैरिका लोणं भस्म वल्मीकमृत्तिका ।
रसप्रयोगकुशलैः कीर्तिताः पञ्चमृत्तिकाः ॥ ८५ ॥
शृङ्गीकं कालकूटं च वत्सनाभं[13] सकृत्रिमम् ।
पित्तं च विषवर्गोऽयं स वरः[14] परिकीर्तितः ॥ ८६ ॥
रसकर्मणि शस्तोऽयं तद्भेदन[15]विधावपि ।
अयुक्त्या सेवितश्चायं मारयत्येव निश्चितम् ॥ ८७ ॥
लाङ्गली विषमुष्टिश्च करवीरजया[16]स्तथा ।
नीलिकः[17] कनकोऽर्कश्च वर्गो ह्युपविषात्मकः ॥ ८८ ॥
हस्त्यश्ववनिता धेनुर्गर्दभी छागिकाऽविका ।
उष्ट्रिकोदुम्बराश्वत्थभानुन्यग्रोधतिल्वकम् ॥ ८९ ॥
दुग्धिका स्नुग्गणं[18] चैतत्तथैवोत्तमकैण्ठिका[19] ।
एषां दुग्धैर्विनिर्दिष्टो दुग्धवर्गो रसादिषु ॥ ९० ॥

---

१ घ. कुक्कुटी । ङ. कर्कटी शिशुमाली । २ ग. गोधाक° । क. गोभूक° । ३ घ. अश्वोष्ट्र° । ४ घ. तथा वसा । ५ ङ. °जाविकाः स्त्रि° । ६ ङ. पुष्पबी° । ७ घ. °जं नियोजयेत् । ८ घ. अम्लीकं । ङ. ह्यम्लकं । ९ ग. °ङ्गं सुरप° । ङ. °ङ्गं नीरप° । १० घ. करमर्दं । ११ क. °म्लचुह्लिका° । ङ. °म्लचक्रिकाशुक्तिका° । १२ घ. रसः । १३ ग. °भं च कृ° । ङ. °भं च सक्तुकम् । १४ ग. चरः । ज. परः । १५ ङ. तद्बन्धन° । १६ क. °जटा त° । घ. °जया त° । १७ ज. तिल्वकः । ट. तिलकः । १८ घ. स्नुग्गुडश्चैव तथै° । १९ ग. °कर्णिका । ङ. °कन्यका ।

[1]पारावतस्य चाषस्य कपोतस्य कलापिनः ।
गृध्रस्य कुक्कुटस्यापि विनिर्दिष्टो हि विड्गणः ॥ ९१ ॥
[2]शोधनं सर्वलोहानां पुटना[3]ल्लेपनात्खलु ।
कुसुम्भं खदिरो लाक्षा मञ्जिष्ठा रक्तचन्दनम् ॥ ९२ ॥
[4]अक्षी च बन्धुजीवश्च तथो[5]क्तपूरगन्धिनी ।
माक्षिकं चेति विज्ञेयो रक्तवर्गोऽतिर[6]ञ्जनः ॥ ९३ ॥
किंशुकः कर्णिकारश्च हरिद्राद्वितयं तथा ।
पीतवर्गोऽयमादिष्टो रसराजस्य कर्मणि ॥ ९४ ॥
तगरः कुटजः कुन्दो गुञ्जा जीवन्तिका तथा ।
सिताम्भोरुहकन्दश्च श्वेतवर्ग उदाहृतः ॥ ९५ ॥
कदली [7]कारवल्ली च त्रिफला [8]नीलिका नलः ।
[9]पङ्कः कासीसबालाभ्रं कृष्णवर्ग उदाहृतः ॥ ९६ ॥
रक्तवर्गादिवर्गैश्च द्र[10]व्यं तज्जारणात्मकम् ।
भावनीयं प्रयत्नेन तादृग्रागाप्तये खलु ॥
काचटङ्कण[11]शिग्राभिः शोधनी[12]यो गणो मतः ॥ ९७ ॥
सत्त्वानां बद्धसूतस्य लोहानां मलनाशनः ।
[13]कापालीकङ्गुणध्वंसी रसवादिभिरुच्यते ॥ ९८ ॥
[14]महिषीमेढ्राण्डगर्भकालिङ्गो धवबीजयुक् ।
[15]शस्तास्थिनी च वर्गोऽयं लोहकाठिन्यनाशनः ॥ ९९ ॥
गुडगु[16]ग्गुलुगुञ्जाज्यसा[17]रघैष्टङ्कणान्वितैः ।
[18]दुर्द्रावाखिललोहादेर्द्रावणाय गणो मतः ॥ १०० ॥
क्षाराः सर्वे मलं हन्युरम्लं शोध[19]नेजारणम् ।
[20]मान्द्यं विषाणि निघ्नन्ति स्नैग्ध्यं स्नेहाः प्रकुर्वते ॥ १०१ ॥

---

१ क. पारापतस्य । २घ. शोधनः । ३ क. °ल्लेखना° । ४ घ. अक्षीवब° । ङ. अक्षीवं° । ५ क. °थाक्तपुर° । क. °थाकर्पूर° । ६ क. °ञ्जनम् । ७ ख. कुरवल्ली । ङ. कूरवल्ली । ८ ख. नीलिनी । ९ ग. कापिकाशसिबालाभ्रं° । १० ङ. °व्यं यत्ना° । ११ ग. °णलिप्ताभिः । ङ. °णशीग्राभिः । १२ ङ. °नीयग° । १३ क. कपालिकं गुणध्वंसा । ख. कापिलिकं गुणध्वंसी । घ. कापालीकगुणध्वंसी । ङ. कापालिकगणध्वंसी । १४ क. माहिषीमेढ्राण्डभेशृङ्गो कालिङ्गो यवबीजयुक् । ग. माहिषीमेढ्राण्डघर्भकालिङ्गो धवबीजयुक् । महिषीमेढ्रगर्भश्च । घ. माहिषी मेढ्रगर्भश्च कालिङ्गो यवबीजयुक् । ङ. माहिषीमेषशृङ्गोत्थकालिङ्गो धवबीजक । १५ क. शशास्थि° ख. शशास्थीनी । घ. शशास्थीनि ङ. शशास्थिनि च वार्गोऽयं । १६ क. °ग्गुलगु° । १७ ग. °रभेष्ट° । घ. °रभैष्ट° । १८ घ. दुर्द्रवा° । १९ ज. °नमार° । २० ख. मर्द्यं ।

षट् तृस्यश्चैकलिक्षा[1] तु षड्लिक्षा यूकमेव च।
षड्यूकास्तु रजःसंज्ञं कथितं तव सुव्रते ॥ १०२ ॥
षड्रजःसर्षपैः[2] स स्यात्सिद्धार्थः स च कीर्तितः ॥ १०३ ॥
षट्सिद्धार्थेन देवेशि यवस्त्वेकः प्रकीर्तितः।
षड्यवै[3]रेकगुञ्जा तु त्रिगुञ्जो वल्ल उच्यते ॥ १०४ ॥
षड्भि[4]रेव तु गुञ्जाभिर्माष एकः प्रकीर्तितः।
माषा द्वादश तोलः स्यादष्टौ तोलाः पलं भवेत् ॥१०५॥११३०॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये मूषाकोष्ठिकापुटादिकथनं नाम दशमोऽध्यायः ॥ १० ॥

---

## अथैकादशोऽध्यायः।

### [ अथ रसशोधनादिकथनम्। ]

त्रु[5]टिः स्यादणुभिः षड्भिस्तैर्लिक्षा षड्भिरीरिता।
ताभिः षड्भिर्भवेद्यू[6]कः षड्यूका[7]स्तद्रजः स्मृतम् ॥ १ ॥
षड्रजः सर्षपः प्रोक्तस्तैः षड्भिर्यव ईरितः।
एका गुञ्जा यवैः षड्भिर्निष्पावस्तु द्विगुञ्जकः ॥ २ ॥
स्याद्गुञ्जात्रितयं वल्लो द्वौ वल्लौ माष उच्यते।
द्वौ माषौ धरणं ते द्वे[8] षाणनिष्ककलाः स्मृता ॥ ३ ॥
निष्कद्वयं तु वटकः[9] स च कोल इतीरितः।
स्यात्कोल[10]त्रितयं तोलः कर्षो निष्कचतुष्टयम् ॥ ४ ॥
उदुम्बरं पाणितलं सुवर्णं कवलग्रहः।
अक्षं विडालपदकं शुक्तिः पाणितलद्वयम् ॥ ५ ॥
शुक्तिद्वयं पलं केचिदन्ये शुक्तित्रयं विदुः।
तदेव कथितं मुष्टिः प्र[11]कुञ्चो बिल्वमित्यपि ॥ ६ ॥
पलद्वयं तु प्रसृतं तद्द्वयं कुडवोऽञ्जलिः।
कुडवौ[12] मानिका तौ स्यात्[13]प्रस्थो द्वे मानिके स्मृतः ॥ ७ ॥

---

१ घ. °क्षास्यात्षड्°। २ क. °पः साक्षात्सि°। ३ क. °रेव गुञ्जा च त्रि°। घ. °रेकगुञ्जा च त्रि°। ४ ज. °रेवात्र गु°। ५ छ. त्रुटिः। ६ क. °यूका षड्यूकास्तं रजः। ७ क. °कास्तु रजः। ८ घ. द्वे शाण°। ङ. द्वे षाणं निष्ककला स्मृता। ९ क. वटकं। १० क. घ. °लद्वित°। ११ अ. प्रकुञ्चं। १२ ङ. °वौ द्वौ मानिकास्या°। ट. °वौ मानिका च स्या°। १२ अ. °त्प्रस्थं द्वे मानिके स्मृतम्।

प्रस्थद्वयं शुभं तौ द्वौ पात्रकद्वयमाढकम् ।
तैश्चतुर्भिर्घटैर्मानं नल्वनर्मणशूर्पकाः ॥ ८ ॥
द्रोणस्य शब्दाः पर्यायाः पलानां शतकं तुला ।
चत्वारिंशत्पलशतैस्तुला भारः प्रकीर्तितः ॥ ९ ॥
रसार्णवादिशास्त्राणि निरीक्ष्य कथितं मया ।
रसोपयोगि यत्किंचिद्दिङ्मात्रं तत्प्रदर्शितम् ।
अधुना रसराजस्य संस्कारान्संप्रचक्ष्महे ॥ १० ॥
स्यात्स्वेदनं तदनु मर्दनमूर्छनं च
　स्यादुत्थितिः पतनरोधनियामनानि ।
संदीपनं गगनभक्षणमानमत्र
　संचारणा तदनु गर्भगता द्रुतिश्च ॥ ११ ॥
बाह्या द्रुतिः सूतकजारणा स्याद्ग्रासस्तथा सारणकर्म पश्चात् ।
संक्रामणं वेधविधिः शरीरे योगस्तथाऽष्टादशधाऽत्र कर्म ॥ १२ ॥
संयोज्यो मर्मणि च्छिन्ने न च क्षाराग्निदग्धयोः ।
शुद्धः स मूर्द्धग्निसहो मूर्छितो व्याधिनाशनः ॥ १३ ॥
निष्कम्पवेगस्तीव्राग्नावायुरारोग्यदो मृतः ।
विषं वह्निर्मलश्चेति दोषा नैसर्गिकास्त्रयः ॥ १४ ॥
रसे मरणसंतापमूर्छानां हेतवः क्रमात् ॥ १५ ॥
यौगिकौ नागवङ्गौ द्वौ तौ जाड्याध्मानकुष्ठदौ ।
औपाधिकाः पुनश्चान्यैः कीर्तिताः सप्त कञ्चुकाः ॥ १६ ॥
भूमिजा गिरिजा वार्जा द्वे च द्वे नागवङ्गजे ।
द्वादशैते रसे दोषाः प्रोक्ता रसविशारदैः ॥ १७ ॥
"पर्पटी पाटनी भेदी द्रावी मलकरी तथा ।
अन्धकारी तथा ध्वांक्षी विज्ञेयाः सप्त कञ्चुकाः" ॥ १८ ॥
भूमिजाः कुर्वते कुष्ठं गिरिजा जाड्यमेव च ।
वारिजा वातसंघातं दोषौ द्व्यं नागवङ्गयोः ॥ १९ ॥

"१ पर्पटाभा । २ विदारणी । ३ रन्ध्रकरी । ४ लोहादिद्रवकरी । ५ वातादिकरी । ६ कृष्णत्वकरी । ७ कालिमा ।"

१ अ. °शुभोऽन्ये द्वौ पात्रकं सस्वमा° । २ घ. °त्रकं द्व° । ३ °टोन्माननल्वणार्मणकुम्भकाः । (साधीयान्) ४ घ. °णश्च श° । ५ च. ट. ठ. °शतं तु° । ६ ङ. °छेने च । ७ अ. बाह्यद्रु° । ८ अ. °रीरयो° । ९ ङ. °श कर्म चात्र । १० ग. स यो° । घ. न यो° । ११ घ. समिद्धोऽग्नि° । अ. समृद्धाग्नि° । १२ ग. मृतम् । १३ ख. °मूर्छनाहे° । १४ क. °श्चान्ये की° । १५ च. °मिजा कुरुते । अ. °मिजः कु° । १६ ग. °षाद्यं ना° ।

तस्मात्सूतविधानार्थं सहायैर्निपुणैर्युतः ।
सर्वोपस्कारमादाय रसकर्म समारभेत् ॥ २० ॥
द्वे सहस्रे पलानां तु सहस्रं शतमेव वा ।
अष्टाविंशत्पलान्येव दश पञ्चैकमेव वा ॥ २१ ॥
पलार्धेनैव कर्तव्यः संस्कारः सूतकस्य च ।
सुदिने शुभनक्षत्रे रसशोधनमाचरेत् ॥ २२ ॥

[अथ संस्काराः]

**अथ स्वेदनविधिः**—त्र्यूषणं लवणासूर्यौ चित्रकार्द्रकमूलम् ।
क्षिप्त्वा सूतो मुहुः स्वेद्यः काञ्जिकेन दिनत्रयम् ॥२३॥

**अथ मर्दनविधिः**—गृहधूमेष्टिकाचूर्णं तथा दधि गुडान्वितम् ।
लवणासुरिसंयुक्तं क्षिप्त्वा सूतं विमर्दयेत् ॥ २४ ॥
षोडशांशं तु तद्द्रव्यं सूतमानान्नियोजयेत् ।
सूतं क्षिप्त्वा समं तेन दिनानि त्रीणि मर्दयेत् ॥ २५ ॥
जीर्णाभ्रकं तथा बीजं जीर्णसूतं तथैव च ।
नैर्मल्यार्थं हि सूतस्य खल्वे धृत्वा तु मर्दयेत् ॥ २६ ॥
गृह्णाति निर्मलो रागान्ग्रासे ग्रासे विमर्दितः ।
मर्दनाख्यं हि यत्कर्म तत्सूतगुणकृद्भवेत् ॥ २७ ॥

**अथ मूर्छनविधिः**—गृहकन्या मलं हन्यात्त्रिफला वह्निनाशनी ।
चित्रमूलं विषं हन्ति तस्मादेभिः प्रयत्नतः ॥ २८ ॥
मिश्रितं सूतकं द्रव्यैः सप्तवाराणि मूर्छयेत् ।
इत्थं संमूर्छितः सूतो दोषशून्यः प्रजायते ॥ २९ ॥

**अथोद्धरणविधिः**—अस्माद्विरेकात्संशुद्धो रसः पात्यस्ततः परम् ।
उद्धृतः काञ्जिकक्काथात्पूतिदोषनिवृत्तये ॥ ३० ॥

**अथ पातनविधिः**—ताम्रेण पिष्टिकां कृत्वा पातयेदूर्ध्वभाजने ।
वङ्गनागौ परित्यज्य शुद्धो भवति सूतकः ॥ ३१ ॥
शुल्बेन पातयेत्पिष्टिं त्रिधोर्ध्वं सप्तधा त्वधः ।
त्रिफलाशिग्रुशिखिभिर्लवणासुरिसंयुतैः ॥ ३२ ॥
नष्टपिष्टि[11]रसं कृत्वा लेपयेच्चोर्ध्वभाजनम्[12] ।
ततो दीप्तैरधःपातमुत्पलैस्तत्र कारयेत् ॥ ३३ ॥

---

१ च. °सूर्यौ चि°। २ ज. °णासूरि°। ३ घ. °शांशयुतं द्रव्यं। ४ च. बजिजी°। ५ ङ. °सूतस्तथै°। ६ ङ. नु। ७ ज. निखिलान्रोगान्ग्रासो ग्रासे विमर्दयेत्। ८ घ. ङ. °लो रोगा°। ९ घ. विमर्दयेत्। १० ञ. °त्सूतं गु°। ११ क. °पिष्टिं र°। ङ. °पिष्टं र°। १२ ङ. °जने।

हरिद्रांकोल्लशम्याककुमारित्रिफलाग्निभिः।
तन्दुलीयकवर्षाभूहिङ्गुसैन्धवमाक्षिकैः॥ ३४॥
पिष्टं रसं सलवणैः सर्पाक्ष्यादिभिरेव वा।
पातयेदथवा देवि व्रणघ्नीयक्षलोचनैः॥ ३५॥
इत्थं ह्यधोर्ध्वपातेन पातितोऽसौ यदा भवेत्।
तदा रसायने योग्यो भवेद्द्रव्यविशेषतः॥ ३६॥
अथवा दीपकयन्त्रे निपातितः सर्वदोषनिर्मुक्तः।
तिर्यक्पातनविधिना निपातितः सूतराजस्तु॥ ३७॥
श्लक्ष्णीकृतमभ्रदलं रसेन्द्रयुक्तं तथाऽऽरनालेन।
खल्वे दत्वा मृदितं यावत्तन्नष्टपिष्टतामेति॥ ३८॥
कुर्यात्तिर्यक्पातनपातितसूतं क्रमेण दृढवह्निम्।
संस्वेद्यः पात्योऽसौ न पतति यावद्दृढश्चाग्नौ॥ ३९॥
तदाऽसौ शुध्यते सूतः कर्मकारी भवेद्ध्रुवम्।
मर्दनैर्मूर्छनैः पातैर्मन्दः शान्तो भवेद्रसः॥ ४०॥

**अथ निरोधविधिः**—संपृष्ट्यम्बुजैर्निरोधेन ततो मुखकरो रसः।
स्वेदनादिवशात्सूतो वीर्यं प्राप्नोत्यनुत्तमम्॥ ४१॥

**अथ नियामनविधिः**—नियम्योऽसौ ततः सम्यक्चपलत्वनिवृत्तये।
कर्कोटीफणिनेत्राभ्यां वृश्चिकाम्बुजमार्कवैः॥ ४२॥
समं कृत्वाऽऽरनालेन स्वेदयेच्च दिनत्रयम्।
मरिचैर्भूखगयुक्तैर्लवणासुरिशिग्रुटङ्कणोपेतैः॥
काञ्जिकयुक्तैस्त्रिदिनं ग्रासार्थी जायते स्वेदात्॥ ४३॥

**अथ दीपनविधिः**—त्रिक्षारसिन्धुखगभूशिखिशिग्रुराजी-
तीक्ष्णाम्लवेतसमुखैर्लवणोषणाम्लैः।
नेपालताम्रदलशोषितमारनाले
साम्लासवाम्लपुटितं रसदीपनं तत्॥ ४४॥
स्वेदयेदासवाम्लेन वीर्यतेजःप्रवृद्धये।
यथोपयोगः स्वेद्यः स्यान्मूलिकानां रसेषु च॥ ४५॥

१ ङ. °द्राकोलश°। २ क. तण्डुली°। ३ घ. च। ४ क. देवी। ५ ग. °ध्नीपक्ष°। ६ ख. पतितोऽसौ। ७ ज. °वन°। ८ ङ. °सूतः क्र°। ९ ङ. °ढमग्नौ। १० ग. °श्चासौ। ११ ग. कामकारी। १२ अ. °र्दनैः स्वेदनैः। १३ ख. पृष्ट्यम्बु°। घ. पष्ठ्यम्बु°। १४ अ. तदा। १५ क. °येत्तद्दिन°। ग. °येन्नादि°। छ. °येत्तद्दिन°। १६ ज. °भूर्जयु°। १७ ग. ग्रासार्थे। १८ क. द्विक्षा°। १९ ख. °नालसा°। ङ. °नालैः सा°। २० ख. साम्लासघाम्ल°। ग. साम्लासत्रा°। ङ. नाम्नासवाम्लमुदितं। २१ ग. °योग्यः स्वे°।

सर्पाक्षी क्षीरिणी वन्ध्या मत्स्याक्षी शङ्खपुष्पिका।
काकजङ्घा शिखिशिखा ब्रह्मदण्ड्याखु[1]कर्णिका ॥ ४६ ॥
वर्षाभूक[2]म्बुकी दूर्वा सैर्यकोत्पलशिम्बिकाः।
शतावरी वज्रलता वज्रकन्दाऽग्निकर्णिका ॥ ४७ ॥
श्वेतार्कशिग्रुधत्तूरमृगदूर्वारसाङ्कुशाः।
रम्भा रक्ता[3]भ्रनिर्गुण्डी लज्जा[4]लुः सुरदालिका ॥ ४८ ॥
मण्डूकपर्णी पाताली चित्रकं ग्रीष्मसु[5]न्दरा।
काकमाची महाराष्ट्री हरिद्रा तिलपर्णिका ॥ ४९ ॥
जाती जयन्ती श्रीदेवी भूकदम्बः कुसुम्भकः।
कोशातकी नीरकणा लाङ्गली कटुतुम्बिका ॥ ५० ॥
चक्रमर्दोऽमृता कन्दः सूर्यावर्तेषुपुङ्खिका।
वाराही हस्तिशुण्डी च प्रायेण रसमूलिकाः ॥ ५१ ॥
रसस्य भावने स्वेदे मूषालेपे च पूजिताः।
इत्यष्टौ सूतसंस्काराः समा द्रव्ये रसायने ॥ ५२ ॥
कार्यास्ते प्रथमं शेषा नोक्ता द्रव्योपयोगिनः ॥ ५३ ॥

**अथ रसबन्धाः**—पञ्चविंशति[6]संख्याकान्रसबन्धान्प्रचक्ष्महे।
येन येन हि चाञ्चल्यं दुर्ग्रहत्वं च नश्यति ॥
रसराजस्य [7]संप्रोक्तो बन्धना[8]र्थो हि वार्तिकैः ॥ ५४ ॥
ह[9]ठारोटौ [10]तदाभासः क्रियाहीनश्च पिष्टिका।
क्षारः खोटश्च [11]पोटश्च कल्कबन्धश्च क[12]ज्जलिः ॥ ५५ ॥
सजीवश्चैव निर्जीवो निर्बीजश्च सबीजकः।
शृङ्खला [13]द्रुतिबन्धौ च बालकश्च [14]कुमारकः ॥ ५६ ॥
तरुणश्च तथा वृद्धो मूर्ति[15]बद्धस्तथाऽपरः।
[16]जलबन्धोऽग्निबन्धश्च सुसंस्कृतकृताभिधः ॥ ५७ ॥
महाबन्धाभि[17]धातश्च पञ्चविंशतिरीरिताः।
केचिद्वदन्ति षड्विंशो जलूकाबन्धसंज्ञकः ॥ ५८ ॥

---

१ ञ. °खुपर्णि°। २ ञ. °कम्बुकी। ३ ग. °क्तालुनि°। घ. °क्ता च नि°। °क्ताभ्रं नि° (साधीयान्) ४ च. °ज्जालु सु°। ५ च. °न्दराः। ६ ञ. °संस्कारान्र°। ७ च. सप्रोक्तो। ट. संप्रोक्ता बन्धा नाम्ना हि। ८ क. °नाम्नो हि। ९ क.ठ. हठारो°। १० ङ. तथा भा°। ११ क. पाटश्च। १२ ङ. कज्जली। १३ क. द्रुति°। १४ क. कुमारिकः। १५ ख. °बन्धस्त°। १६ क. जलबद्धोऽग्निबद्धश्च। १७ क. °भिधाश्चेति प°। ङ. °भिधश्चेति प°। ट. °भिधाश्चैव प°।

स[1] तावन्नेक्षते [2]देही स्त्रीणां द्रावेऽतिशस्यते ।
हठो रसः स विज्ञेयः सम्यक्शुद्धिविवर्जितः ॥ ५९ ॥
स[3] सेवितो नृणां कुर्यान्मृत्युं वा व्याधिमुद्धतम् ।
सुशोधितो रसः सम्यगारोट इति कथ्यते ॥ ६० ॥
स [4]क्षेत्रकरणे श्रेष्ठः शनैर्व्याधिविनाशनः ।
पुटितो[5]ऽधो रसो याति [6]योगं मुक्त्वा [7]स्वभावताम् ॥ ६१ ॥
[8]भावितो धातुमूला[9]द्यैराभासो गुणवैकृ[10]ते ।
असंशोधितलोहाद्यैः साधितो यो रसोत्तमः ॥
क्रियाहीनः स विज्ञेयो विक्रियां यात्यपथ्यतः ॥ ६२ ॥
तीव्रातपे गाढतरावमर्दात्पिष्टी भवेत्सा नवनीतरूपा ॥ ६३ ॥
सरसः पिष्टिका[11]बन्धो दीपनः पाचनस्तराम् ।
शङ्खशुक्तिवराटाद्यैर्योऽसौ संसाधितो रसः ॥ ६४ ॥
क्षारबन्धः परं [12]दीप्तिपुष्टिकृच्छूलनाशनः ।
[13]बन्धो यः खोटतां [14]यातो ध्मातो ध्मातः क्षयं व्रजेत् ॥ ६५ ॥
खोट[15]बद्धः स विज्ञेयः शीघ्रं [16]सर्वगदापहः ।
[17]द्रुतकज्जलिका [18]मोचापत्रके चिपिटी कृता ॥ ६६ ॥
स पाटः पर्पटी सैव[19] बालाद्यखिलरोगनुत् ।
स्वेदाद्यैः साधितः सूतः पङ्कत्वं समुपागतः ॥ ६७ ॥
कल्क[20]बद्धः स विज्ञेयो [21]योगोक्तफलदायकः ॥ ६८ ॥
कज्जली रसगन्धोत्था सुश्लक्ष्णा कज्जलोपमा ।
तत्तद्योगेन संयुक्ता कज्जली[22]बन्ध उच्यते ॥ ६९ ॥
भस्मीकृतो [23]गच्छति[24] वह्नियोगाद्रसः सजीवै[25]ः स खलु प्रदिष्टः ।
संसेवितोऽसौ न करोति भस्मकार्यं [26]जैवाद्याधिविना[27]शनं च ॥७०॥

---

१ घ. स तावन्नेष्यते देहे । ङ. सतावान्नेष्यते देहे । २ क. देहे । ३ क. संसे°। ४ ङ. क्षेत्रीकरणे । च. क्षेत्रकरणश्रे°। ५ क. °तोऽथो र°। ख. °तोऽसौ र° । घ. °तो यो र°। ६ ङ. रोगमुक्त्वा सवासनाम् । ७ ग. स्वभावतः । ८ क. भावि°। घ. माचितो । ङ. मायुतो । ९ क. °द्यैः स मा°। १० ख. °कृतः । ग. °कृतेः । ११ क. °बद्धो दी°। १२ अ. दीप्तः पु°। १३ क. बद्धो । १४ ङ. याति । १५ घ. °बन्धः स°। १६ ङ. सर्वविषापहः । १७ क. दत्तकज्जलिका मोचापत्रके चिपिटा कृता। ग. द्रुतकज्जलिको मोचापत्रके चिपिटा कृता । घ. द्रुतः क° । ङ. दतकाज्जलिका मोचापत्रके चिपिटीकृता । १८ च. मोचपत्रके चिपिटा कृता। १९ ङ. °व बद्धश्चाखि°। २० घ. °बन्धः स । २१ ज. °यो यथोक्त°। अ. ज्ञयः पूर्वोक्त°। २२ °बद्ध उ°। २३ ज. नश्यति । २४ ग. °ति गन्धयो°। २५ अ. °वः खलु संप्रदिष्टः । २६ ङ. जराव्याधि°। २७ घ. °शनश्च ।

जीर्णाभ्रको वा परिजीर्णगन्धो भस्मीकृतश्चाखिललोह[1]मौलिः ।
निर्जीवनामो[2] हि स[3] भस्म[4]भूतो निःशेषरोगान्विनिहन्ति [5]वेगात् ॥ ७१ ॥
[6]रसस्तु पादांशसुवर्णजीर्णः पिष्टीकृतो गन्धकयोगतश्च ।
तुल्यांशगन्धैः पुं[7]टितः क्रमेण निर्बीज[8]र्नामा सकलामयघ्नः ॥ ७२ ॥
पि[9]ष्टीकृतैरभ्रकसत्त्वहेमतारार्ककान्तैः परिजारितो यः ।
ह[10]तस्त्वतः षड्गुणगन्धकेन स बीजब[11]द्धो विपुलप्रभावः ॥ ७३ ॥
व[12]ज्रादिनिहतः सूतो हतः [13]सूतः समोऽपरः ।
शृङ्खला[14]बद्धसू[15]तस्तु देहलोहवि[16]धायकः ॥
चित्रप्रभा[17]वां वेगेन [18]व्याप्तिं जानाति शंकरः ॥ ७४ ॥
युक्तोऽपि बाह्यद्रुतिभिश्च सूतो [19]बन्धंगतो वा भसितस्वरूपः ।
स राजिकापादमितो निहन्ति दुःसाध्यरोगान्द्रुति[20]बद्धनामा ॥ ७५ ॥
समाभ्रजीर्णः शिवजस्तु बालः [21]संसेवितो योगयुतो जवेन ।
रसायनो भाविगदापहश्च सोपद्रवारिष्टगदान्निहन्ति ॥ ७६ ॥
हरोद्भवो यो द्विगुणाभ्रजीर्णः स स्यात्कुमारो मिततन्दुलोऽसौ ।
त्रिःसप्तरात्रैः खलु पापयोगसंघातघाती च रसायनं च ॥ ७७ ॥
चतुर्गुणव्योमकृताशनोऽसौ रसायनाग्र्यस्तरुणाभिधानः ।
स सप्तरात्रात्सकलामयघ्नो रसायनो वीर्यबलप्रदाता ॥ ७८ ॥
यस्या[22]भ्रकः ष[23]ड्गुणितो हि जीर्णः [24]प्राप्ताग्नि[25]संख्यः स हि वृद्धनामा ।
देहे च लोहे च नियोजनीयः शिवादृते कोऽस्य गुणान्प्रवक्ति ॥ ७९ ॥
यो दिव्यमूलिकाभिश्च कृतोऽत्यग्निसहो रसः ।
विनाऽभ्रजारणात्स स्यान्मूर्ति[26]बन्धो महारसः ॥ ८० ॥
अयं [27]हि जार्यमाणस्तु [28]सोऽग्निना क्षीयते रसः ।
योजितः [29]सर्वयोगेषु [30]निरुपम्यफलप्रदः ॥ ८१ ॥
शिलातोयमुखैस्तोयै[31]र्बद्धोऽसौ जलब[32]द्धवत् ।
स जरारोगमृत्युघ्नः कल्पोक्तफलदायकः ॥ ८२ ॥

---

१ ज. °हमोहः । २ ज. °मापि स । ३ ङ. च । ४ घ. °स्मसूतो । ५ घ. सद्यः । ६ च. रसस्य । ७ च. पुटितं । ८ च. °नाम्ना स° । ९ ङ. बीजीकृ° । ञ. बीजाकृ° । १० च. °तः स्वतः । ११ °बन्धो ( साधीयान् ) । १२ ङ. °दिर्निहितः । १३ ङ. सूत स° । १४ ज. °बन्धसू° । १५ ज. °त श्च दे° । १६ क. °धायिनी । ग. °धायिनि । घ. °धायिनः । ज. °धायिना । १७ घ. °भावं वे° । ङ. °भाववे° । ञ. °भावा वङ्गेन । १८ घ. व्याप्ति जा° । ज. व्याप्तं जा° । १९ घ. बन्धं ग° । २० घ. °बन्धना° । २१ ज. संस्वेदितो । २२ ङ. °भ्रतः ष° । २३ ङ. °षड्गुणतो । २४ ङ. प्राप्नोति संज्ञां । २५ ख. °ग्निसख्यः । ख. °ग्निसह्यः स° । २६ ङ. °बद्धो । २७ ग. °हि जीर्य° । २८ ङ. नाग्निना° । २९ क. °वैरोगे° । ३० क. निरौप° । ३१ ट. °बन्धोऽसौ° । ३२ ङ. °द्धवान् ।

केवलो लोहयुक्तो वा ध्मातः स्याद्गुटिकाकृतिः ।
अक्षीणश्चाभि[1]बद्धोऽसौ खेचरत्वा[2]दिकृत्स हि ॥ ८३ ॥

हेम्ना वा रजते[3]न [4]वा स हि परो ध्मातो व्रजत्येकता
मक्षीणो [5]निचितो गुरु[6]श्च गुटिकाकारोऽति[7]दीर्घोज्ज्वलः ।
चूर्णत्वं पटुवत्प्रयाति [8]निहतो [9]घृष्टे न [10]मुञ्चेन्मलं
[11]निर्गन्धो द्रवति क्षणात्स हि [12]मतो बद्धाभिधानो रसः ॥८४॥ [इति रसबद्धलक्षणम् ।

विष्णुक्रान्ताशशिलताकुम्भीकनक[13]कूलिकैः ।
विशालानागिनीकन्दव्याघ्रपादीकुटुम्बकैः ॥ ८५ ॥
वृश्चिकालीभशुण्डीभ्यां हंसपा[14]द्यासहा[15]सुरैः ।
अप्रसूतगवां [16]मूत्रैः [17]पिष्टं [18]वा कुलके पचेत् ॥ ८६ ॥
पक्वमेवं मृतैर्लोहैर्मर्दितं विपचेद्रसम् ।
यन्त्रेषु मूर्छा सूतानामेषकल्पः समासतः ॥ ८७ ॥

सूते गर्भनियोजितार्धकनके पादांशनागेऽथवा
[19]पञ्चाङ्गुष्ठकशाल्मलीकृत[20]मदाश्लेष्मातबीजैस्तथा ।
तद्व[21]त्तेजि[22]निकोलकाख्यफलजैश्चूर्णं तिलं पत्रकं
तप्ते खल्वतले निधाय [23]मृदिते जाता [24]जलूका वरा ॥ ८८ ॥

सैषा स्यात्कपिकच्छुरोमपटले चन्द्रावतीतैलके
चन्द्रे टङ्कणकामपिप्पलिजले स्विन्ना भवे[25]त्तेजिनी ।
[26]तप्ते खल्वतले वि[27]मर्दन[28]विधिय[29]त्नोद्वलि [30]या कृता
सा स्त्रीणां मददर्पनाशनकरी ख्याता [31]जलूका [32]वरा ॥ ८९ ॥

बाल्ये चाष्टाङ्गुला योज्या यौवने च दशाङ्गुला ।
द्वादशैव प्रगल्भानां [33]जलौका त्रिविधा [34]मता ॥ ९० ॥

---

१ ज. °बन्धोऽसौ । २ ज. °दिबन्धकृत् । ३ ज. °न रसंहि वरो । ४ ङ. वा सिद्धि-वरो । ५ ग. निश्चितो । घ. निबिडो । ६ घ. °श्च घुटि° । ७ ङ. °दीप्तोज्ज्वलः । ८ घ. निहितो । ९ क. घृष्टो । १० क. मुञ्चन्मलं । ११ घ. निर्बन्धो । १२ ङ. महाबद्धाभिधानोऽपरः । १३ घ. °कूलकैः । १४ ङ. °द्या महासुतैः । १५ घ. °हाशुभैः । क. °हासुतैः । ज. °हाशुनैः । १६ ग. °मूत्रे । १७ ङ. ।पित्ते । पिष्ट । १८ ग. वालुकके । घ वाकुलकैः । ङ. वा कुकुटे । १९ ख. पञ्चाङ्गस्य च शा° । ज. पञ्चाङ्गोत्थित शा° । ङ. पञ्चाङ्गेषु च शा° ।२० ङ. °मदः श्ले° ।क. °मदश्ले । २१ ङ. °त्तेजनि कोकिलाक्षफ° । २२ क. °नि केलकाक्षफ° । घ. °निकेलिकाख्यफ° । ज. °नि कोकिलाख्यफ° । २३ ङ. मृदितं । ज. मृदिता । २४ ङ. जलौका । २५ ग. °त्तेजनी । २६ ज. दीप्ते । २७ ज. मर्थ विधिवद्यत्नान्मुक्ता या° २८ ङ. °विधेर्यत्नाद्वटी या । २९ घ. °त्नाद्वलिं या । ३० क. पा । ३१ ङ. जलौका । ३२ ज. परा । ३३ क.जलूका । ३४ क. वराः ।

धृत्वा [1]सूतमुखे [2]पात्रं मेषीक्षीरं प्रदापयेत् ।
[3]स्थापये[4]दातपे तीव्रे [5]वासराण्येकविंशतिः ॥ ९१ ॥
द्वितीयाऽत्र मया प्रोक्ता जलौका द्रावणे हिता ।
पुरुषाणां स्थिता मूर्ध्नि द्रावये[6]द्बीजमद्भुतम् ॥ ९२ ॥
मुनिपत्ररसश्चैव शाल्[7]मलीवृन्तवारि[8] [9]च ।
[10]जातीमूलस्य तोयं च [11]शिंशपातोयसंयुतम् ॥ ९३ ॥
श्लेष्मातकफलं चैव त्रिफलाचूर्णमेव च ।
कोकिल[12]ाक्षस्य चूर्णं च पारदं मर्दयेद्बुधः ॥ ९४ ॥
जलूका जायते दिव्या रामाजनमनोहरा ।
सा योज्या कामकाले तु कामयेत्कामिनी स्वयम् ॥ ९५ ॥
त्रिफलाभृङ्गमहौषधमधुसर्पिच्छागदुग्धगोमूत्रे ।
नागं सप्तनिषिक्तं रसस[13]मंजरितं जलूका स्यात् ॥ ९६ ॥
भानुस्वरदिनसंख्याप्रमाण[14]सूतं गृहीत[15]दीनारम् ।
अङ्कोलराजवृक्षकुमारीरसशोधनं कुर्यात् ॥ ९७ ॥
शशिरेखाव[16]रवर्णीसकोकि[17]लाक्ष[18]ापामार्गकनकानाम् ।
चूर्णैः सहैकविंशतिदिनानि संमर्दयेत्सम्यक् ॥ ९८ ॥
[19]निशायाः [20]काञ्जिकं यूषं दत्वा [21]योनौ प्रवेशयेत् ।
बालमध्यम[22]वृद्धास्तु योज्या विज्ञा[23]य तत्क्रमात् ॥ ९९ ॥
[24]नीरसानामपि नृणां योषा स्यात्सङ्गमोत्सुका ।
रसभागचतुष्कं तु वङ्गभागं तु पञ्चमम् ॥ १०० ॥
[25]सुरसारससंयुक्तं टङ्कणेन समन्वितम् ॥ १०१ ॥
त्रिदिनं मर्दयित्वा च गोलकं [26]चै रसोद्भवम् ॥
लिङ्गाग्रे योनिनिक्षिप्तं यावदायुर्वशंकरम् ॥ १०२ ॥

---

१ ख. सूक्ष्ममुखे । ङ. सूतमुखे पात्रे मेष्याः क्षी°। २ ख. पात्रे मेष्याः क्षी°। ३ च. स्वाप°। ४ क. °येद्वाऽऽत°। ५ घ. वाराणामेक°। ६ घ. °येद्वनिताकुलं । ङ. °येद्वीर्यमुद्धतम् । ७ ज. °ल्मलां वृ°। ८ ङ. °रिणा । ९ घ. वा । १० ज. जातिमू° । ११ क. शिंशिपा°। १२ क. °लाख्यस्य । १३ ज. °मरञ्जितं । ग. °मजारि°। ङ. °मजनितं । १४ च. °सूतगृ°। ङ. सूतं दीनान्तरम् । सूतं दीनारं । १५ क. °तदावारम् । १६ क. °रणीस°। घ. °रणीं स° ङ. °रचूर्णकोकीलाक्षापमा°। १७ क. °लाख्यापा°। १८ ट. °क्षापमा°। १९ ज. निर्वीर्याः° । २० ङ. काञ्जिके । २१ ज. योनि । २२ क. °वृद्धासु यो°। क. °वृद्धासु योज्यो वि°। २३ ख. °यतात्क्र°। २४ क. निर°। २५ क. निर्गुण्डीरस° । निर्गुंडीरस । २६ ज. तु ।

कर्पूर[1]रसूरणसुभृङ्ग[2]सुमेघनादै-
नांगं निषिच्य तु मिथो [3]वैलयेद्रसेन ।
लिङ्गस्थितेन वलयेन नितम्बिनीनां
स्वामी भवत्यनुदिनं स तु जीवहेतुः ॥ १०३ ॥
टङ्कणपिप्पलि[4]कामासूरणकर्पूरमातुलुङ्गरसैः ।
कृत्वा [5]स्वाङ्गुलिलेपं योनिं विद्रावयेत्स्त्रीणाम् ॥ १०४ ॥
अग्न्यावर्तितनागे हरबीजं निक्षिपेत्ततो द्वि[6]गुणम् ।
मुनिकनकनाग[7]सर्पैर्दन्त्याऽथ सिच्याच्च तन्[8]मध्यम् ॥ १०५ ॥
[9]तैक्ष्णेण मर्दयित्वा [10]गणतो मदनवलयं कृत्वा ।
रतिसमये वनितानां रतिगर्वविनाशनं कुरुते ॥ १०६ ॥
व्याघ्रीबृहतीफलरससूरणकन्दं च चणकपत्राम्लम् ।
कपिकच्छुवज्रवल्लीपिप्पलि[11]कामाम्लिकाचूर्णे ॥ १०७ ॥
अग्न्यावर्तितनागं न[12]ववारं [13]मर्दयेद्भिमैर्द्रव्यैः ।
स्मरवलयं [14]कृत्वैतद्वनितानां द्रावणं कुरुते ॥ १०८ ॥
पलाश[15]बीजै[16]रक्तं च जम्बी[17]राम्लेन सूतकम् ।
स[18]जीवं मार्दितं यन्त्रे [19]पातितं म्रियते ध्रुवम् ॥ १०९ ॥
खरमञ्जरिबीजान्वितपुष्करबीजैः सुचूर्णितैः कल्कम् ।
कृत्वा सूतं [20]पुटयेद्[21]दृढमूषायां भवेद्भस्म ॥ ११० ॥
काकोदुम्बरिकाया दुग्धेन सुभावितो हिङ्गुः ।
मर्दन[22]पुटेन विधिना सूतं भस्मीकरोत्येव ॥ १११ ॥
[23]देवदालीं हरिक्रान्तामारनालेन [24]पेषयेत् ।
[25]तैर्द्रवैः सप्तधा सूतं कुर्यान्मर्दितमूर्छितम् ॥ ११२ ॥
तत्सूतं खर्परे दद्याद्दत्वा दत्वा तु तद्रवम् ।
[26]चूल्ल्योपरि पचे[27]च्चाह्नं भस्म स्याल्लवणोपमम् ॥ ११३ ॥

---

१ च. °ङ्क्षसमे°। २ ज. महा। ३ क. वलयं रसेन। ४ ग. °कामीसू°।ट. °काभिर°। ५ क. °स्वाऽऽस्माङ्गु°। ङ. °स्वाऽऽत्माङ्गविले°। ६ ङ. °गुणे। ७ ङ. °सर्व दत्वाऽथ। क. °सर्पैर्दत्यार्थं सि°। घ. °सर्पैर्दत्याऽथ। ८ घ. ङ. °न्मध्ये। ९ क. तिक्तेन। घ. तीक्ष्णेन। १० ज. गणेन। ११ घ. °कासाम्लिकाचूर्णम्। १२ ज. °वसारं भावयेदिमैर्द्रव्यैः। १३ ङ. छादयेदिनद्रव्यैः। १४ च. कृत्वैत°। १५ च. °बीजं र°। १६ क. °जकं रक्तज°। १७ ज. °राम्लं च सूतके। १८ ङ. °जीवम°। १९ ङ. पाचितं। २० च. पुटं दृढ°। २१ ज. दृढंमुखायां। २२ ङ. °पुटनविधानात्सू°। २३ क. देवदाली। २४ घ. भावयेत्। २५ घ. तद्द्रव्यैः। २६ ङ. चूल्ल्योप°। २७ घ. °चेच्चाह्ना भ°। ङ. °चेदान्हं भ°। च. °चेह्नान्हौ भ°।

[1]अपामार्गस्य बीजानि तथैरण्डस्य चूर्णयेत् ।
तच्चूर्णं पारदे देयं मूषायामधरोत्तरम् ॥ ११४ ॥
रुद्ध्वा लघुपुटैः[2] पचेत्[3]चतुर्भिर्भस्मतां[4] नयेत् ।
[5]कटुतुम्ब्युद्भवे कन्दे गर्भे[6] नारीपयः[7]प्लुते ॥ ११५ ॥
सप्तधा म्रियते सूतः स्वेदितो गोमयाग्निना ।
अङ्कोलस्य शिफा[8]वारिपिष्टं[9] खल्वे विमर्दयेत् ॥ ११६ ॥
सूतं गन्धकसंतुल्यं दिनान्ते तं निरोधयेत् ।
पुटयेद्भूधरे यन्त्रे दिनान्ते स मृतो भवेत् ॥ ११७ ॥
वटक्षीरेण सूतं[10]ताम्रौ मर्दयेत्प्रहर[11]त्रयम् ।
पा[12]चयेत्तेन को[13]ष्ठेन भस्मीभवति त[14]द्रसः ॥ ११८ ॥
अथाऽऽतुरो रसाचार्यं साक्षाद्देवं महेश्वरम् ।
साधितं च रसं शृङ्गदन्तवेण्वादिधारितम् ॥ ११९ ॥
अर्चयित्वा यथाशक्ति देवगोब्राह्मणानपि ।
प[15]र्णखण्डे ध्रु[16]वं सूतं ज[17]ग्ध्वा स्यादनुपानतः ॥ १२० ॥
घृतसैन्धवधान्याकजीरकार्द्रकसंस्कृतम् ।
तन्दुलीयकधान्याकपटोलाल[18]म्बुसादिकम् ॥ १२१ ॥
गोधूमजीर्णशाल्यन्नं गव्यं क्षीरं घृतं दधि ।
हंसोदकं मु[19]द्गरसः पथ्यव[20]र्गः समासतः ॥ १२२ ॥
बृहतीबिल्वकूष्माण्डं वेत्राग्रं कारवेल्लकम् ।
माषं मसूरं निष्पावं कुलित्थं सर्षपं तिलम् ॥ १२३ ॥
[21]लङ्घनोद्वर्तनस्नानताम्रचू[22]डसुरासवान् ।
[23]आनूपमांसं धान्याम्लं भोजनं कदलीदले ॥
कांस्ये च गुरु विष्टम्भि तीक्ष्णोष्णं च भृशं त्यजेत् ॥ १२४ ॥
[24]कण्टारीफलकाञ्जिकं च [25]कमठस्तैलं तथा राजिका
निम्बूकं कतकं कलिङ्गकफलं कूष्माण्डकं कर्कटी ।
[26]कारीकुक्कुटकारवेल्लकफलं कर्कोटिकायाः फलं
वृन्ताकं च कपित्थकं खलु गणः प्रोक्तः ककारादिकः॥१२५॥

१ अ. आपमा°। २ क. च. °पुटे प°। ३ ज. पश्चाच्च°। ४ ज. व्रजेत् । ५ ङ. कुडुहुंच्युद्भ°। ६ छ. गर्भरावी प°। ७ ज. °परिप्लु°। ८ छ. °लशिखावा°। ९ घ. °पिष्टा ख°। १० अ. °ताम्रे म°। ११ ङ. °रद्वय°। १२ ङ. चालये°। १३ ज. कोष्टिन। १४ क. च. तद्रसम्। १५ ङ. पर्वखण्डे धूतं°। १६ ज. धूतं। १७ ङ. जग्धा। १८ क. °म्बुषादि°। १९ ज. °मुद्गवर्ग° । ज. °मुद्गरसं°। २० ज. °वर्गे स°। २१ ङ. लङ्घनोद्वर्तनं स्नानं ताम्रचूडसुरासवम्। २२ ग. °चूडं सु°। २३ अनू°। २४ ख. कण्टकारी°। २५ ङ. कमले तैलं। अ. कलमस्तै°। २६ घ. कीरी°। ङ. कैकीकु°।

देवीशास्त्रोदितः सोऽयं ककारादिगणो मतः ।
शास्त्रान्तर[1]विनिर्दिष्टः कथ्यतेऽन्यप्रकारतः ॥ १२६ ॥
कं[2]कुः कन्दुककोलकुक्कुटकलकोडाः कुलत्थास्तथा
कण्टारी कटुतैलकृ[3]ष्णगलकः कूर्मः कला[4]यः कै[5]णी ।
कर्[6]कारुं च कटिल्लकं च कतकं कर्कोटकं कर्कटी
कां[7]ली काञ्जिकमेषकादिकगणः श्रीकृष्णदेवोदितः ॥१२७॥
यस्मिन्रसे च कण्ठोक्त्या ककारादि[8]र्निषेधितः ।
तत्र तत्र नि[9]षेध्यस्तु तदौचित्यमतोऽन्यतः ॥ १२८ ॥
उद्गारे सति दध्यन्नं कृ[10]ष्णमीनं सजीरकम् ।
अभ्यङ्गमनिलक्षोभे तैलैर्नारायणादिभिः ॥ १२९ ॥
अरतौ शीततोयेन मस्तकोपरि [11]सेचनम् ।
तृष्णायां नारिकेलाम्बु मु[12]द्गयूषं सशर्करम् ॥ १३० ॥
द्राक्षादाडिमखर्जूरकदलीनां फलं भजेत् ।
रसवी[13]र्यविवृद्ध्यर्थं दधिक्षीरेक्षुशर्कराः ॥ १३१ ॥
शीतोपचारमन्यच्च रसत्यागविधौ पुनः ।
भक्षयेद्बृ[14]हतीबिल्वं सकृत्साधारणो विधिः ॥ १३२ ॥ १२६२॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रसशोधनबन्धनभस्मजलूकादिनिरूपणं नामैकादशोऽध्यायः ॥११॥

---

## अथ द्वादशोऽध्यायः ।

### [ अथ ज्वरचिकित्सनम् । ]

ज्वरस्य रक्तपित्तस्य कासस्य श्वासहि[15]ध्मयोः ।
वैस्वर्यस्य क्षयस्यापि तथाऽरोचप्रसेकयोः ॥ १ ॥
छर्दिहृद्रोगयोश्चैव तृष्णामयोद्भवार्शसाम् ।
उदावर्तातिसाराणां ग्र[16]हण्यर्तिप्रवाहिणोः ॥ २ ॥
विषूच्या वह्निमान्द्यस्य मूत्रकृच्छ्राश्मरीरुजाम् ।
मेहस्य सोमरोगस्य [17]पिटकानां च विद्रधेः ॥ ३ ॥

---

१ क. °न्तरे वि°। २ ग. कङ्कु। ३ ज. °कृष्ठग°। ४ ङ. °लापः क°। ५ ख. कणीः। छ. कणा। ६ अ. कर्कोरं। कर्कारुश्च (साधीयान्)। ७ ङ. कीरी। च. कीली। ८ क. च. °दिनि°। ९ क. निषेध्यं तत्तदौचित्यतोऽन्यतः। १० ज. कृष्णमत्रं। अ. कृष्णामी°। ११ ङ. पेचनम्। १२ अ. मुद्गं यू°। १३ अ. °र्यस्य वृ°। १४ ङ. °हतीं वि°। १५ अ. °हिक्कयोः। १६ ट. °हण्यार्ति°। १७ क. पिटिका°।

वृद्धिगुल्मादिरोगाणां शूलानामुदरस्य च।
पाण्डुशोफविसर्पाणां कुष्ठचित्रनभस्वताम्[1] ॥ ४ ॥
वातास्रस्याऽऽवृतानां च वन्ध्यानां गर्भिणीरुजाम्।
सूतिकाबालरोगाणामुन्मादेऽपस्मृतावपि ॥ ५ ॥
नेत्ररोगे कर्णरोगे नासारोगास्यरोगयोः।
शिरःसंजातरोगेषु व्रणे भङ्गे[3] भगन्दरे ॥ ६ ॥
ग्रन्थ्यादौ क्षुद्ररोगेषु गुह्यरोगे विषेषु च।
जरायास्त्वनपत्यानां बीजपोषणहेतवे ॥ ७ ॥
परिपाट्याऽनया सर्वं रोगाणां हि चिकित्सितम्।
रसलोहविषैरत्र योगैर्वक्ष्ये यथागमम् ॥ ८ ॥
रोमाञ्चकम्पौ वदने मधुरत्वमुज्जृम्भणं मस्तकतोददाहौ।
वातज्वरस्योक्तमिदं हि[4] लक्ष्म भुक्तोत्तरः[5] स्याद्यदि शश्वदेव ॥९॥
विरेकशोषास्यकटुत्वतीव्रतापप्रलापभ्रममूर्छनानि।
एतानि पित्तज्वरलक्षणानि वमिः सतृष्णाङ्गविदाहिता च ॥१०॥
कासश्वासौ मुखे जाड्यं माधुर्यं बहुनिद्रता।
प्रस्वेदः स्वल्पदाहश्च श्लेष्मजज्वरलक्षणम् ॥ ११ ॥
मिश्रितं लक्षणं यत्तु द्वयोस्त्रिषु भवेच्च तत् ॥ १२ ॥

[ अथ रसायनान्याह।

**अथ *त्रैलोक्यसुन्दररसः**—विमर्दिताभ्यां रसगन्धकाभ्यां
नीरेण कुर्यादिह गोलकं तम्।
भाण्डे नवीने विनिवेश्य पश्चा-
त्तद्गोलकस्योपरि ताम्रपात्रम् ॥ १३ ॥
सार्धं मुहूर्तं विनिरुन्ध्य धीमानुदीपयेद्दीप्तकृशानुनाऽस्य[6]।
अधस्ततः सिध्यति पर्पटीयं नवज्वरारण्यकृशानुमेघः ॥ १४ ॥
विलिप्य पूर्वं रसनां च तालुदेशं च सिन्धूद्भवजीरकार्द्रैः[7]।
वह्नोन्मितां[8] चार्द्रकतोयमिश्रामेनां नियोज्य[9] स्थगयेत्पटेन[10] ॥१५॥
घर्मोद्गमो यावदतःपरं च तक्रौदनं पथ्यमिह प्रयोज्यम्।
कुर्याद्दिनानां त्रितयं यदीत्थं[11] ज्वरस्य शङ्काऽपि तदा भवेत्किम्[12] ॥१६॥

* क. ख. पर्पटीरसः। ङ. पर्पटीरसो नवज्वरे।

१ ङ. °छश्वित्र°। २ ङ. °स्रस्य वृ°। ३ क. भग्ने। ४ ङ. तु। ५ क. शूलोत्तरः। ङ. भुक्तोत्तरस्या°। ६ घ. °द्दीपक°। ७ क. °तामार्कवतो°। ८ ङ. °मेतां नि°। ९ ङ. नियोज्यं। च. नियोज्या। १० ङ. °येत्पुटे°। ११ क. यदित्थं। १२ ज. °वेत्का।

**अथ त्रैलोक्यडम्बररसः**[*]—सूतार्कगन्धचपलाजयपालतिक्ता-[1]
पथ्यात्रिवृच्च विषतिन्दुकजान्समांशान्[2] ।
संभाव्य वज्रि[3]पयसा मधुना त्रिवल्ल-
स्त्रैलोक्यडम्बररसोऽभिनवज्वरघ्नः ॥ १७ ॥

**अथ मेघनादरसः**—पादांशकंसाररविःसमांश-
गन्धो विपक्वः[4] स्वकषायपिष्टः ।
रसः[5] क्रमान्माषमितश्च्छलादि-
ज्वरेषु नाम्ना किल मेघनादः ॥ १८ ॥

**अथ [†]ज्वरगजहरिरसः**—दरदजलदयुक्तं शुद्धसूतं च[6] गन्धं
प्रहरमथसुपिष्टं वल्लयुग्मं च दद्यात् ।
ज्वरगजहरिसंज्ञं शृङ्गवेरोदकेन
प्रथमजनितदाहि[7]क्षीरभक्तेन भोज्यः[8] ॥ १९ ॥

**अथ [‡]दीपिकारसः**—संतप्तसीसभाग[9]ं च पारदं गन्धकं कणाम्[10] ।
समभागं पृथक्तत्र मेलयेच्च यथाविधि[11] ॥ २० ॥
जम्बीरस्य रसे[12] सर्वं मर्दयेच्च दिन[13]त्रयम् ।
मेघनादकुमार्योश्च रसे चापि दिनत्रयम् ॥ २१ ॥
दिनद्वयमजामूत्रे गवां मूत्रे दिनत्रयम् ।
भावयेच्च यथायोग्यं तस्मिन्नेतानि दापयेत् ॥ २२ ॥
सैन्धवं चित्रकं भागं सौवर्चलवणं तथा ।
तेन संमेलनं कृत्वा भावयेच्च पुनः क्रमात्[14] ॥
अनेन विधिना सम्यक्सिद्धो भवति तद्रसः ॥ २३ ॥
शर्कराघृतसंयुक्तं दद्याद्वल्लत्रयं रसम् ।
गोधूमस्यौदनं पथ्यं माषसूपं च वास्तुकम् ॥ २४ ॥
धात्रीफलसमायुक्तं सर्वज्वरविनाशनम् ।
दीपिकारस इत्येष[15] तन्त्रज्ञैः परिकीर्तितः ॥ २५ ॥

**अथ शीतभञ्जी रसः**—पारदं रसकं तालं तुत्थं गन्धकटङ्कणम्[16] ।
सर्वमेतत्समं शुद्धं कारवल्ल्या द्रवैर्दिनम् ॥ २६ ॥

---

* ङ. °रसः । नवज्वरे ।　† क. ज्वरगजकेसरी । ङ. रसगजासिंहः ।　‡ ङ. सर्वज्वरे ।

---

१ ख. °तिक्तप° । २ ङ. °मांशम् । ३ ङ. वज्रप° । ४ ट. °क्वः सक° । ५ क. रसक° । ६ ङ. सुगन्धं ७ ट. °दाहे क्षी° । ८ ट. भोज्यं । ९ ङ. °भागे च ° । १० क. कणा । ११ क. °विधिः १२ ङ. रसैः । १३ ख. °नद्वय° । १४ ञ. पनः । १५ ङ. °घस्तन्त्रज्ञैः । १६ क. °ङ्कणौ ।

मर्दयेत्तेन कल्केन ताम्रपात्रोदरं लिपेत् ।
अङ्गुलार्धार्धमानेन तं पचेत्सिकताह्वये ॥ २७ ॥
यन्त्रे यावत्स्फुटन्त्येवं व्रीहयस्तस्य पृष्ठतः ।
ततः सुशीतलं ग्राह्यं ताम्रपात्रोदराद्भिषक् ॥ २८ ॥
शीतभञ्जी रसो नाम चूर्णयेन्मरिचैः समम् ।
माषैकं पर्णखण्डेन भक्षयेन्नाशयेज्ज्वरम् ॥ २९ ॥
त्रिदिनैर्विषमं तीव्रमेकद्वित्रिचतुर्थकम् ॥ ३० ॥

**अथ मृतजीवनरसः**—कूष्माण्डचूर्णतिलजैः प्रविशुद्धतालं
गाढं विमर्द्य सुषवीसलिलेन तुल्यम् ।
सूतेन हिङ्गुलभुवा सिकताख्ययन्त्रे
गोलं विधाय परिवृत्तकपालमध्ये ॥ ३१ ॥
पत्रेण तं दिनपतेरपिधाय रुद्ध्वा
संधिं तयोर्गुडसुधाखटिकाशिवाभिः ।
वह्नौ पचेन्मृदुनि चात्रशिरस्थशालि-
वैवर्ण्यमात्रमवधिं प्रविधाय धीमान् ॥ ३२ ॥
वल्लं ततः सुरसमिश्रममुष्य दद्या-
त्सर्पिःसिताकणपयो मधु चानुपेयम् ।
जेतुं ज्वरान्प्रविषमानिह वान्तिशान्त्यै
मौलौ सुशीतलजलस्य ददीत धाराम् ॥ ३३ ॥
अथाऽऽमयान्तं रसराजमौलिं भूषामणिं तं मृतजीवनाख्यम् ।
सुधारसे[11]नेव रसेन येन संजीवनं[12] स्यात्सहसाऽऽतुराणाम् ॥ ३४ ॥

**अथ शीतभञ्जी रसः**—सूततालशिलास्तुल्या मर्दयेत्[13]कर्कटीरसे ।
ताम्रपात्रे विनिक्षिप्य तत्कल्कं कज्जलीकृतम् ॥ ३५ ॥
विपचेद्वालुकायन्त्रे यथोक्तविधिना ततः ।
दद्यान्मरिचचूर्णेन माषमात्रं भिषग्वरः ॥ ३६ ॥
प्रपिबेदुष्णतोयस्य चुलुकं[14] शीतके[15]ज्वरे ।
शीतभञ्जी ततः[16] सोऽयं शीतज्वर[17]निवारणः ॥ ३७ ॥

---

१ ट. °ङ्गुल्यर्धा°। २ ख. समैः । ३ क. °लजप्र°। ङ. °लजः प्र°। ४ घ. पिधाय । ५ क. पात्रेण । च. तन्त्रेण । ञ. पात्रेण तद्दिन°। ६ क. °रभिधा°। ७ ङ. °नि पात्र°। ८ ङ. °मबधि प्र°। ९ ज. °कणाप°। १० क. अथास्तनामा रसराजमौलिभू°। ११ क. °सेनैव । १२ ङ. °वनस्या°। १३ ग. °येन्मर्क°। १४ ग. चूलकं । १५ क. °तके ज्व°। १६ ङ. रसः । १७ ङ. °रविदार°।

**अथ *वृद्धज्वराङ्कुशः**—[1]रसहिङ्गुलजेपालैर्वृद्धया दन्त्यम्बुमर्दितैः ।

दिनार्धेन ज्वरं हन्याद्[2]गुञ्जैकं सितया सह ॥ ३८ ॥

**अथ महाज्वराङ्कुशः**—[3]शुद्धं सूतं विषं गन्धं धूर्तबीजं त्रिभिः समम् ।

चतुर्भिश्च समं व्योषं चूर्णीकृत्य निधापयेत् ॥ ३९ ॥

दन्तभाण्डेऽथवा शार्ङ्गे काष्ठे नैव कदाचन ।

वातश्लेष्मज्वरे देयं द्वंद्वजे वा त्रिदोषजे ॥ ४० ॥

रसेन शृङ्गवेरस्य जम्बीरस्याथवा पुनः ।

गुञ्जाद्वयं च जीर्णेऽस्मिन्दधिभक्तं प्रयोजयेत् ॥ ४१ ॥

एकद्वित्रिदिनैर्हन्याज्ज्वरान्दोषक्रमेण तु ।

महाज्वराङ्कुशो नाम रसोऽयं शंभुनोदितः ॥ ४२ ॥

**अथ मृत्युंजयः**—तालं ताम्ररजो रसश्च गगनं गन्धश्च [4]नेपालकं

दीनारप्रमितं तदर्धमुदितं [5]टङ्कं शिला माक्षिकम् ।

दीनारद्वितयं विषस्य शिखिनः पिष्ट्वा रसैः पाचितो

यश्चिन्तामणिवज्ज्वरौघविजयी नाम्ना तु मृत्युंजयः ॥४३॥

**अथ †सर्वज्वरारिः**—तालं ताम्रमयोरजश्च चपलातुत्थाभ्रकं कान्तकं

नागं स्याच्च समांशकं सुमृदितं मूलं च पौनर्नवम् ।

[6]भृङ्गीकासहरीपुनर्नवमहामन्दारपत्रोद्भवैः

कल्कं वालुकयन्त्रपाचितमिदं सर्वज्वरस्यान्तकृत् ॥ ४४ ॥

**अथ ‡चन्द्रसूर्यो नाम रसः**—तुत्थेन तुल्यः शिवजश्च गन्धो

जम्बीरनीरेण विमर्दनीयः ।

दिनत्रयं मेलय तेन तुल्यं

व्योषं ततः सिध्यति चन्द्रसूर्यः ॥ ४५ ॥

[10]वल्लो विजेतुं विषमावलम्बि दलेन देयो भुजगाख्यवल्ल्याः ।

दुग्धं हितं स्यादिह शृङ्गवेररसेन [12]शैत्येषु [13]स सेवनीयः ॥ ४६ ॥

तक्रं सगर्भाज्वरशूलयोस्तु द्राक्षाम्बुना पथ्यमनन्तरोक्तम् ।

रोधंवरायाः सलिलेन शूलं जम्बीरनीरेण वराजलेन ॥ ४७ ॥

---

* ङ. हिङ्गुलेश्वरः । † ङ. सर्वज्वरान्तकः । ‡ घ. चन्द्रसूर्योदयो नाम रसः ।

---

१ क. रसहिङ्गुलनेपा° । घ. रसहिङ्गुलनेपा° । ङ. रसो हिङ्गुलनेपालैर्वृद्धा दन्त्याम्बु° । ज. रसगन्धकनेपा° । २ ङ. द्रुञ्जैका सि° । ज. °द्गुञ्जिका सि° । ३ च. शुद्धसू° । ४ क. जेपालकं । ५ क. टङ्कः । ६ ङ. °गं चाक्षस° । ७ च. शृङ्गी° । ८ ङ. °ह्नाकेदार° । ९ ट. °जस्य ग° । १० घ. वल्लौ । ज. यल्लो । ११ घ. °लम्बी द° । ट. °लम्बियं द° । १२ घ. शैत्येषु स सेधनीयः । १३ ट. °त्ये त्वुपसे° ।

अपस्मृतावत्र नियोजनीयमभ्यञ्जनं निम्बपयोभवाभ्याम् ।
घृतौदनं स्यादिह भोजनाय जम्बीरनीरेण निहन्ति गुल्मम्॥४८॥
हिङ्ग्वम्लिकानिम्बुरसेन [1]देयं प्लीहोदरे स्यादिह तक्रभक्तः।
स्तम्भार्थमस्मिन्ससितं पयः स्याद्गुडो नियोज्यो वमनप्रशान्त्यै॥४९
अशीतिर्यस्य वर्षाणि वसुवर्षाणि यस्य वा ।
विषं तस्य न दातव्यं दत्तं चेद्दोषदायकम् ॥५०॥ इति क्षेपकः।

**अथ उमाप्रसादनो *रसः**—मेघपारदवैगन्धविषव्योषपटूनि च ।
जीरकद्वयमेतानि समभागानि कारयेत् ॥ ५१ ॥
सिन्दुवाररसेनापि [4]लशुनस्य रसेन च ।
अपामार्गरसेनापि [5]सप्तरात्रं विमर्दयेत् ॥ ५२ ॥
तत्पक्कं वालुकायन्त्रे गुञ्जामात्रं [6]प्रयोजयेत् ।
सनागवल्लीमरिचं ततः शीताम्बु पाययेत् ॥ ५३ ॥
उमाप्रसादनो नाम रसः शीतज्वरापहः ।
चातुर्थिकं त्रिरात्रं वा नाशयेत्किमुतापरान् ॥ ५४ ॥

**अथ †ज्वराङ्कुशरसः**—टङ्कणं रसगन्धौ च समभागान्प्रकल्पयेत् ।
नेपालं द्विगुणं दत्वा मर्दयेत्खल्वमध्यतः ॥ ५५ ॥
श्लक्ष्णतां याति तद्यावत्तावत्तन्मर्दयेच्छनैः ।
सैन्धवं मरिचं शङ्खं विश्वाक्षारं समाक्षिकम् ॥ ५६ ॥
तुल्यमेतत्त्रयं कृत्वा निम्बुतोयेन मर्दयेत् ।
चणप्रमाणवटकान्भक्षयेच्च दिनत्रयम् ॥ ५७ ॥
ऐकाहिकं द्व्याहिकं च त्र्याहिकं च चतुर्थकम् ।
सर्वज्वरविनाशाय ज्वराङ्कुश इति स्मृतः ॥ ५८ ॥

## अथ सर्वाङ्गसुन्दरचिन्तामणिरसः।

अभ्रकं गन्धकं सूतं [10]तोलैकैकं पृथक्पृथक् ।
गृहीत्वा विषतोलार्धं तोलार्धं ति[11]त्तिरीफलम् ॥ ५९ ॥
एतत्सर्वं समं कृत्वा मर्दयेत्खल्वमध्यतः ।
श्लक्ष्णतां याति तद्यावत्तावत्संमर्दयेच्छनैः ॥ ६० ॥

---

* ङ. रसः शीतज्वरे । † ङ. ज्वराङ्कुशः सर्वज्वरे ।

---

१ अ. देहं । २ घ. °स्मिन्माथितं । ३ अ. °षकारक° । ४ ङ. रसोनस्य । ५ क. सप्तवारं । ६ ङ. प्रदापयेत् । ७ अ. °गात्प्रक° । ८ अ. खण्डं । ९ क. तुल्यमे° । १० ग. °लैकं च पृ° । ११ ङ. तितिरी° । क. °त्तिडी फ° । क.° । घ. °त्तिणीफ° ।

विस्तारे परिणाहे च गर्तां कृत्वा षडङ्गुलाम् ।
फणिवल्लीदलान्यन्तर्गर्तायां प्रक्षिपेन्नरः ॥ ६१ ॥
पर्णेषु सूतकल्कं तं गर्तायां स्थापयेद्दृढम् ।
कल्कादुपरि तत्पर्णैर्गर्तावक्त्रं प्रपूरयेत् ॥ ६२ ॥
गर्तायां तु ततो देयं पुटमारण्यकोत्पलैः ।
स्वाङ्गशीतलतां ज्ञात्वा समाकर्षेत्ततःपरम् ॥ ६३ ॥
सूतलिप्तदलैः सार्धं कल्कं खल्वे विमर्दयेत् ।
तोलार्धममृतं क्षिप्त्वा तोलार्धं तित्तिरीफलम् ॥ ६४ ॥
स्थापयेत्खल्वितं कल्कं योजयेद्गुञ्जमात्रया ।
शृङ्गवेराम्भसा युक्तं तीक्ष्णचित्रकसैन्धवैः ॥ ६५ ॥
संनिपाते तथा वाते त्रिदोषे विषमज्वरे ।
अग्निमान्द्ये ग्रहण्यां च तथा देयोऽतिसारिणि ॥ ६६ ॥
भोजनं दधिभक्तं च रसेऽस्मिन्संप्रयोजयेत् ।
व्याध्यादिकं यथा कुर्यादुदकं ढालयेत्ततः ॥ ६७ ॥
एष योगवरः श्रीमान्प्राणिनां प्राणदायकः ।
चिन्तामणिरिति ख्यातो रसः सर्वाङ्गसुन्दरः ॥ ६८ ॥

**अथ लोकनाथगुटिका**—सूतेन्द्रं परिमर्द्य पञ्चपटुभिः क्षारैस्त्रिभिस्तं ततः
पिण्डे हिङ्गुमहौषधासुरिमये संस्वेद्य धान्योदके ।
निर्गुण्ड्यम्बुहुताशमन्थतिलपर्ण्युन्मत्तभृङ्गार्द्रकं
कामातागिरिकर्णिकाप्लुवदलापञ्चाङ्गुलोत्थैर्जलैः ॥ ६९ ॥
सूतेन्द्रेण समैर्विमर्द्य सहजैः पित्तैस्ततो भावये-
द्दंष्ट्रिच्छागलुलायमत्स्यशिखिनां सा संनिपाताञ्जयेत् ।
विख्याता भुवि लोकनाथगुटिका मारीचमात्रा हिता
स्यादस्याः संहितं दधीक्षुशकलं वीर्यं भवेच्छीतलैः ॥ ७० ॥

**अथ सूचिकाभरणो रसः**—वज्रवैक्रान्तयोर्भस्म प्रत्येकं निष्कसंमितम् ।
शृङ्गीविषं द्विनिष्कं च त्रिनिष्कं चूलिकापटु ॥ ७१ ॥

---

१ क.ठ. °लान्यत्र ग° । २क.ड. °पेदधः । ३ क. °त्तिडीफ° । ४ क. °रिणे ।५ज. व्याध्याधिकं यदा कुर्यादुदकं दालयेत्ततः । क. व्याध्याधिक्यं । ग. व्याध्याधिकं । ङ. व्यथाधिक्यं यदा कु° । अ. तापाधिक्यं तथा । ६ क. °गुलिका । ७ ग. °काम्लकद° । अ. °काम्लवदनातपश्चा° । ट. °काल्पकद° । ८ ङ. °पदगुच्छा° । ९ ङ° °गुलिका । १० ङ. सासितं । ११ ङ. °क्षुसक° । १२ ट. °संयुतम् ।

पञ्चनि[1]ष्कोऽग्निजारश्च सर्वमेकत्र मेलयेत् ।
तावद्भस्मरसं यावन्मर्दयेद्दिवसत्रयम् ॥ ७२ ॥
शा[2]र्ङ्गेष्टादिकवर्गस्य क्षारनीरेण भावयेत् ।
त्रयोविंशतिवाराणि विमर्द्य च विशोष्य च ॥ ७३ ॥
ततो विमर्द्य दिवसं क्षिपेद्दन्तकरन्डके ।
मृतसंजीवनाख्योऽयं सूचिकाभरणो रसः ॥ ७४ ॥
संनिपातेन तीव्रेण मुमूर्षोर्भूगतस्य च ।
तालुनि प्र[3]च्छयित्वाऽथ रसमेनं विनिक्षिपेत् ॥ ७५ ॥
सूच्याऽतिसूक्ष्मया तो[4]याभिन्नयाऽतिप्रयत्नतः ।
ततस्तैलेन तं लिप्त्वा निवाते संनिवेशयेत् ॥ ७६ ॥
ततोऽर्धप्रहरादूर्ध्वं मुक्तमूत्रपुरीषकम् ।
लब्धसंज्ञं प्रे[5]तापाढ्यं दोलयन्तं शिरो मुहुः ॥ ७७ ॥
आयुष्मन्तं विजानीयादन्यथा चान्यथा खलु ।
ततः शीताम्बुसंपूर्णे कटाहे तं निवेशयेत् ॥ ७८ ॥
तत्र चो[6]त्क्वथितं तोयमपनीयापरं क्षिपेत् ।
याचमानममुं पश्चात्पाययेत्ससितं पयः ॥ ७९ ॥
दधि वा सितयोपेतं ना[7]रिकेलजलं तथा ।
रम्भाफलानि दद्याच्च म्रियते सोऽन्यथा खलु ॥ ८० ॥
लब्धसंज्ञं प्र[8]भाषन्तं याच[9]मानं फलादिकम् ।
तस्मादाकृष्य तैलाक्तं तैलं [10]पिष्ट्वाऽपनीय च ॥ ८१ ॥
ले[11]पयेद्गन्धकर्पूरैरापादतलमस्त[12]कम् ।
इत्यादिशिशि[13]रैर्द्रव्यैः सप्तरात्रमुपाचरेत् ॥ ८२ ॥
कर्णाक्षिनासिकावक्त्रे क्षिपेत्पोताश्रयं मुहुः ।
अष्टमेऽहनि संप्राप्ते दर्दुरीमूलजं रसम् ॥ ८३ ॥
ससितं पाययेद्वेगमवतारयितुं रसम् ।
र[14]सेऽवतारिते पश्चाद्यथेष्टं भोजनं द[15]धि ॥ ८४ ॥
श्वासोच्छ्वासयुतं चान्यैर्मुक्तजीवनलक्षणैः ।
कटाहे जलसंपूर्णे निक्षिपेद्बोधलब्धये ॥ ८५ ॥

१ क. °निष्काऽग्नि° । २ घ.शार्ङ्गेष्टा° । ३ क.च.ठ.ड. वृश्चयित्वाऽथ ४ क.तोयाभि° । च. तोयं भि° । ५ ङ. प्रताढ्यं च । ६ ङ.चोत्क्वथिते । ज. चेत्क्वथितं । ७ क. नालिकेरज° । ८ क. प्रभाष्यन्तं । ९ क. °मानफ° । १० क.पिष्ट्याऽप° । ११ ञ. °येद्दुग्धक° । १२ क. °स्तकैः । ङ. °स्तके । १३ क. °शिरद्रव्यैः । १४ ञ. °से च तारि° । १५ घ. भजेत् । ङ. ददेत् ।

लब्धबोधं तमाकृष्य पूर्ववत्समुपाचरेत् ।
जीवित्वा यावदायुष्यं म्रियते तदनन्तरम् ॥ ८६ ॥
संनिपाते महाघोरे मज्जन्तं मृत्युसागरे ।
उद्धरेत्तस्य धर्मस्य ब्रह्माऽप्यन्तं न विन्दति ॥ ८७ ॥
संनिपातमहामृत्युभयनिर्मुक्तमानवः ।
अपि सर्वस्वदानेन प्राणाचार्यं प्रपूजयेत् ॥ ८८ ॥
अन्यथा नरके[1] तावद्यावत्कल्पविकल्पना[2] ।
इत्याज्ञा शांकरी ज्ञेया शंभुना[3] परिकीर्तिता ॥ ८९ ॥
[4]प्रकाशा नैव कर्तव्या रसोत्तरण[5]मूलिका ।
शास्त्रं विना प्रयच्छन्ते[6] मन्दा वित्ताभिकाङ्क्षया ॥ ९० ॥
गुरुप्रसादमासाद्य संनिपाते प्रयुज्यताम् ।
शार्ङ्गेष्टा च तथा व्याघ्री करीरस्तिलपर्णिका ॥ ९१ ॥
इन्द्रवारुणिका मुस्ता हरिद्राऽङ्कोलमूलिका ।
अपामार्गः कणा [7]स्वर्णं कटुतुम्बी च [8]तिन्तिणी ॥
शार्ङ्गेष्टादिकवर्गोऽयं संनिपातहरः परम् ॥ ९२ ॥

**अथ *सूचीमुखो रसः**—सूतं गन्धकतालकं [9]मणिशिलां ताप्यं लवं तुत्थकं
जेपालं विषटङ्कणं मधुफलं कृत्वा समांशं दृढम् ।
कृत्वा कज्जलिकां विषोल्बणफणेः पित्तैश्च संभावये-
त्क्षिप्त्वा सीसककूपिके रसवरं सूचीमुखं नामतः[10] ॥ ९३ ॥
ब्रह्मद्वारविकीर्णलोहित[11]लवं गुञ्जैकमात्रं ददे-
द्दत्वा संपुटबद्धतन्द्रिकधनुर्वाते सशाखाहिमे[12] ।
कासं श्वासमरोचकं प्रलपनं कम्पं च हिक्कातुरं
मूकत्वं बधिरत्वमुन्मदमपस्मारं जयेत्तत्क्षणात् ॥ ९४ ॥

**अथ संनिपातगजाङ्कुशः**—रसगन्धकताम्राभ्रं लाङ्गलीवह्निरामठम् ।
वन्ध्यापटोलनिर्गुण्डीसुगन्धानिम्बपल्लवाः ॥ ९५ ॥
पाठाक्षारत्रयंक्ष्वेलबोलधत्तूरतन्दुलैः ।
शृङ्गीमधुकसारं च जम्बीराम्लेन मर्दयेत् ॥ ९६ ॥

---

* ङ. संनिपाते सूचीमुखरसः ।

---

१ ङ. °के याति यावत्क° । २ अ. °विभावना । ३ ध. नन्दिना । ४ च. प्रकाशो । ५ अ. °सोत्तार° । ६ च. ठ. प्रयुज्यन्ते । घ. प्रयुञ्जन्ते । ङ. प्रयोज्यन्ते । ७ ङ. स्वर्णः । ८ ङ. तिन्तिणी । ९ अ. क. ठ. ङ. मणिशिला । मनाशिलां । १० ङ. °मुखो ना° । ११ क. °तलवे गु° । घ. °तरवे गु° । १२ अ. °क्ष्वेडबो° ।

कुर्या[1]द्धि निष्कमानेन वटिका[2] सा नियच्छति।
[3]सस्वेददाहाभि[4]न्याससंनिपातगजाङ्कुशः॥ ९७॥

**अथ चातुर्थि[6]कहरो रसः**—*ससारा †वैष्णवीसेना ‡अचला $कादिकं ¶कणा।
*रागरु[7]द्रोपमोपेता ‡प्रौढा मस्तकशालिनी॥ ९८॥
त्रिभागं तालकं [5]विन्द्यादेकभागं तु पारदम्।
तदर्धं गन्धकं चैव तदर्धं तु मनःशिला॥ ९९॥
कारवल्लीदलरसैर्मर्दयेत्प्रहरत्रयम्।
पाचितो वालुकायन्त्रे चातुर्थिकनिवारणः॥ १००॥

**अथ चातुर्थिकगजाङ्कुशः**—स्याद्रसेन समायुक्तो गन्धकः सुमनोहरः।
हियावल्लित्रिगुणितो निर्गुण्डीरसमर्दितः॥ १०१॥
सप्तवाराणि तद्योज्यमार्द्रकस्वरसेन तु।
संततादिज्वरं हन्याच्चातुर्थिकगजाङ्कुशः॥ १०२॥

**अथ मृत्युंजयरसः**—ताप्यताल[8]कनेपालवत्सनाभमनःशिला।
ताम्रगन्धकसूतं च मुसलीरसमर्दितः॥ १०३॥
मृत्युंजय इति ख्यातः कुक्कुटीपुटपाचितः॥ १०४॥
वल्लद्वयं प्रयुञ्जीत यथेष्टं दधिभोजनम्।
नवज्वरं संनिपातं हन्यादेष महारसः॥ १०५॥

**अथ पञ्चवक्त्ररसः**—[10]शुद्धं सूतं विषं गन्धं मरिचं टङ्कणं [11]कणाम्।
मर्दयेद्धूर्तजद्रावैर्दिनमेकं तु शोषयेत्॥ १०६॥
पञ्चवक्त्रो रसो नाम द्विगुञ्जः संनिपातजित्।
अर्कमूलकषायं च सत्र्यूषमनुपाययेत्॥ १०७॥
दध्योदनं हितं तत्र जलयोगं च कारयेत्।
रसगन्धकतुल्यांशं धत्तूरफलजैर्द्रवैः॥ १०८॥

**अथ उन्मत्तरसः**—मर्दयेद्दिनमेकं तु तत्तुल्यं त्रिकटु क्षिपेत्।
उन्मत्ताख्यो रसो नाम्ना नस्ये स्यात्संनिपातजित्॥ १०९॥

---

* ससारा पारदोपेता। †वैष्णवीसेना हरितालः। ‡अचला मनःशिला। $कादिकं कारवल्लीरसः। ¶कणा पिप्पली। *रागस्ताम्रपात्रं। †रुद्रोपमाभिर्वालुकाभिः। ‡प्रौढा मस्तकशालिनी। शालिस्फुटनमात्र इत्यर्थः।

---

१ क. °र्याद्धनिकमा°। २ क. °का संनि। ३ ङ. संस्वेद्य दा°। ४ ङ. °न्यासं सं°। ५ क. त्रियादे°। ६ ख. °कहरो रसः। ७ घ. °वलित्रि°। ८ ग. घ. °कजेपा°। ९ ङ. °टीरसपा°। १० क. शुद्धसू°। ११ क. च. कणा।

**अथ संनिपाताञ्जनरसः**[1]—निस्त्वग्[2]जेपालजं बीजं दशनिष्कं प्रचूर्णयेत् ।
मरिचं[3] पिप्पलीसूतं प्रतिनिष्कं विमिश्रयेत् ॥ ११० ॥
भाव्यं जम्बीरजैर्द्रावैः सप्ताहं तत्प्रयत्नतः ।
संनिपातं निहन्त्याशु अञ्जने[4] यः शिवः स्मृतः ॥ १११ ॥
मदनफलं विडलवणं सर्षपाः प्रतिनिष्कद्वयम् ।
चूर्णयित्वा त्रिफलाक्काथेन[5] सटङ्कणं पिबेत् ॥ ११२ ॥
कुष्ठज्वरकामलाजीर्णकण्ठरोगनुत् ।
नस्ये च गिरिकर्ण्युत्थबीजैकं शीतवारिणा ॥ ११३ ॥

**अथ प्रतापलङ्केश्वरः**[6]—प्रत्येकं रसगन्धयोर्द्विपलयोः कृत्वा मषीं शुद्धयो-
रस्यां म्लेच्छलुलायलोचनमनोधात्रीप्रकुञ्चत्रयम् ।
पथ्याया बदरत्रिकं त्रिकटु पट्[7]षाणं वचाधर्मिणी
वेल्लाम्भोधरपत्र[8]कद्विरदकिञ्जल्काश्वगन्धाद्वयम् ॥११४॥
पिष्ट्वैतत्समधूकसारमखिलं कर्षोन्मितं न्यस्यत-
स्मोन्मर्चार्धकरञ्जकामृतयुतं सागस्ति[9]कत्र्यूषणैः ।
भूधात्रीविजयासरित्पतिफलं ज्वालामुखीमार्कवैः
प्रत्येकं विदधीत निश्चलमतिः सप्त क्रमाद्भावनाः ॥ ११५ ॥
पित्तैरथो पञ्चविधाय पञ्चभिः करञ्जमात्रामृतधूपनं ततः ।
दत्वाऽऽर्द्रकस्य स्वरसेन तन्दुलाकृतिं विदध्याद्गुटिकां भिषग्वरः ॥११६॥
देयैका संनिपाते प्रतिहतविषये मोहनेत्रप्रसुप्त्योः
स्याद्गुल्मे साजमोदा पवनविकृतिषु त्र्यूषणेन ग्रहण्याम् ।
दातव्या जीरकेण द्विपतुरगनृणां प्राणसंरक्षणाय
कारुण्याम्भोधिरेतद्रसकसमरसं वैद्यनाथो[10]ऽभ्येधत्त[11] ॥ ११७ ॥

**अथ प्राणेश्वरः**—गन्धकाभ्रसमः सूतो वाराहीरसमर्दितः ।
पाचितो वालुकायन्त्रे त्रिफलाव्योषचित्रकैः ॥ ११८ ॥
त्रिक्षारं पञ्चलवणं हिङ्गुगुग्गुलु[12]दीप्यकैः ।
सजीरकैः सेन्द्रयवैः पृथग्रससमैर्युतः ॥ ११९ ॥
माषमात्रो[13]ऽनुपानेन द्विपलस्योष्णवारिणैः[14] ।
अग्निन्यासानलभ्रंशग्रहणीपाण्डुगुल्मिनाम् ॥ १२० ॥

---

१ क. ठ. चैतनाञ्जनो रसः । ट. शिवनामा रसः । २ ख. °स्त्वङ्नेपा° । ३ ञ. मरीचपि° । ४ ङ. °ञ्जनोऽयं शि° । ५ ख. °न मासमेकं ततः पि° । ६ ङ. वैद्यनाथरसः । ७ घ. °ट् शार्णं । ८ च. °त्रकं द्वि° । ९ च. °स्तिकं त्र्यू° । १० ज. °थोऽभिधायी । ११ ङ. °भ्यदत्त । १२ ख. °लुदिप्य° । १३ ट. °मात्रानु° । च. °मात्रानुमाने° । १४ क. °रिणा ।

कुर्यात्प्राणपरित्राणमतः प्राणेश्वरः स्मृतः ।
व्याधिवृद्धौ प्रयोगोऽस्य द्वौ वारौ वैद्यसंमतः ॥ १२१ ॥

अथ मृतसंजीवनः—रसायोव्योषकङ्कुष्ठशिलातालाभ्रहिङ्गुलान् ।
कुम्भ्यग्निभृङ्गमारीषतन्दुलीयकमाक्षिकान् ॥ १२२ ॥
हस्तिशुण्डीयुतांस्तुल्यांस्तदर्धशिवगन्धकान् ।
त्र्यहमार्द्राम्बुना पिष्ट्वा कूपिस्थं वालुकाग्निना ॥ १२३ ॥
जयाजम्बीरनिर्गुण्डीचाङ्गेरीवारिनिक्षिपेत् ।
पक्त्वा चतुर्दशाहानि पिष्ट्वा द्रोक्तं विशोषयेत् ॥ १२४ ॥
मृतसंजीवनाख्योऽयं रसो वल्लमितोऽशितः ।
प्राग्जयेदौषधं संनिपातादीन्सकलान्गदान् ॥ १२५ ॥

अथ मृतसंजीवनः—रसभागो भवेदेको गन्धको द्विगुणो मतः ।
विषतालककङ्कुष्ठशिलाहिङ्गुललोहकम् ॥ १२६ ॥
वह्नित्रिकटुभृङ्गाह्वहेममाक्षिकमभ्रकम् ।
हस्तिशुण्डी विषं कुम्भी तन्दुलीयकताम्रकौ ॥ १२७ ॥
एषां प्रत्येकमेकैकं भागमादाय चूर्णयेत् ।
आर्द्रकस्य द्रवेणैव मर्दयेच्च दिनत्रयम् ॥ १२८ ॥
जम्बीरस्य रसो ग्राह्यः पलत्रयपरीक्षितः ।
त्रिफलायाश्च निर्गुण्ड्याः प्रत्येकं च पलत्रयम् ॥ १२९ ॥
रसस्य पलमात्रं तु चाङ्गेर्याः परिकीर्तितम् ।
काचकूप्यां विनिक्षिप्य यन्त्रे क्षिप्त्वा प्रयत्नवान् ॥ १३० ॥
उद्धृत्याऽऽर्द्रकनिर्यासैर्मर्दयित्वा विशोषयेत् ।
मृतसंजीवनो नाम रसोऽयं विदितो भुवि ॥
गुञ्जाद्वयं ददीतास्य संनिपातापनुत्तये ॥ १३१ ॥

अथ संनिपातकुठारः—वङ्गं नागं च सूतं च नेपालं गन्धकं तथा ।
शुल्वं विषं समांशेन रसेनाऽऽर्द्रेण मर्दयेत् ॥ १३२ ॥
पुनर्मर्दयेत निर्गुण्ड्योश्चाङ्गेर्या रसमर्दितः ॥
एकवल्लप्रयोगेण रसोऽयं संनिपातनुत् ॥ १३३ ॥

अथ नवज्वरारिः—गन्धकं च रसं शुद्धं प्रत्येकं कर्षसंमितम् ।
एकत्र कज्जलीकृत्वा ततः कुर्वीत गोलकम् ॥ १३४ ॥

---

१ घ. °दर्धं शि° । २ क. कूपीस्थं । ङ. कूपस्थं । ३ क. °ण्डीशार्ङ्गेरी° । ४ क. °ष्ट्वाऽऽर्द्रोक्तं । ५ च. द्राक्तां । ज. जातं । ६ च. निशोधयेत् । ७ अ. द्राग्ज° । ८ क. शार्ङ्गेयाः । ९ ङ. स्वेदयेत्सप्तकद्वयम् । १० क. °र्मर्दितनि° । ११ क. °ण्ड्याः शार्ङ्गेया र° । १२ घ. °र्दितम् । १३ क. °ज्जलीं कृ° ।

नवभाण्डे विनिक्षिप्य ताम्रपात्रेण गोपयेत् ।
दृढं निरुध्य तत्पात्रमग्नावारोपयेत्ततः ॥ १३५ ॥
व्रीहिस्फुटनमात्रेण स्वाङ्गशीतं समुद्धरेत् ।
नवज्वरे प्रयुञ्जीत रसं पर्पटिकाह्वयम् ॥ १३६ ॥
आर्द्रकस्य रसेनैव त्रिवल्लं त्रिदिनं भिषक् ।
ज्वरितं छादयेद्गाढं यावत्स्वेदः समुद्भवेत् ॥ १३७ ॥
तक्रभक्तं भवेत्पथ्यं ज्वरमुक्तस्य देहिनः ॥ १३८ ॥
नवज्वरारिरित्येष रसः परमदुर्लभः ।
वातज्वरे विशेषेण रसः साधारणोऽप्ययम् ॥ १३९ ॥

**अथ जलमञ्जरीरसः**—टङ्कणं रसगन्धौ च मरिचानि समांशकम् ।
सर्वं जम्बीरनीरेण दिनानि त्रीणि मर्दयेत् ॥ १४० ॥
संशोष्य शर्करायुक्तं मत्स्यपित्तेन भावयेत् ।
भावितं तद्रसं सिद्धमार्द्रकस्वरसैर्द्व्यहम् ॥ १४१ ॥
वेल्लत्रयं प्रयुञ्जीत पानार्थं वारि शीतलम् ।
तक्रभक्तं भवेत्पथ्यं वृन्ताकफलसंयुतम् ॥
सर्वान्नवज्वरान्हन्ति रसोऽयं जलमञ्जरी ॥ १४२ ॥
[ पित्तज्वरे ज्वरारिरप्यनुभूतः ।

**अथ कान्तरसः**—कान्तलोहस्य पत्राणि कण्टवेध्यानि कारयेत् ।
ततः संपेष्य तं कल्कं मर्दयेत्त्रिदिनं पुनः ॥ १४३ ॥
रसतुल्येन मत्स्यस्य पित्तेन परिभावयेत् ॥ १४४ ॥
सिद्धः कान्तरसो ह्येष प्रयोज्योऽभिनवज्वरे ।
शृङ्गवेरानुपानेन मात्रया भिषगुत्तमैः ॥ १४५ ॥

**अथ चन्द्रोदयः**—रसगन्धौ तथा वङ्गमभ्रकं समभागतः ।
मेलयित्वाऽथ वङ्गेन समं सूतं विमर्दयेत् ॥ १४६ ॥
तत्रैकीकृत्य गन्धाभ्रे पेष्य जम्बीरवारिणा ।
सामान्यं पुटमादद्यात्सप्तधा साधितं रसम् ॥ १४७ ॥
कुमार्या चित्रकेणापि भावयित्वाऽथ सप्तधा ।
गुडेन जीरकेणापि ज्वरे जीर्णे प्रयोजयेत् ॥ १४८ ॥
कासे श्वासे कुमार्या च त्रिफलाक्काथयोगतः ।
उन्मादं च धनुर्वातममृताक्काथयोगतः ।
इत्येवं रोगतापघ्नो रसश्चन्द्रोदयाह्वयः ॥ १४९ ॥

---

१ च. निरुन्ध्य । २ क. वल्लं वारत्रयं देयं पा° । ३ ङ. °नार्थे वा° । ४ च. °रादिर° । ५ क. °त्तमः । ६ क. °न्धाभ्रैः पेष्यं ज° । ७ ङ. साध्यतं ८ क. °र्याश्च त्रि° ।

अथ जीर्णज्वरारिः[1]—नागं वङ्गं रसं ताम्रं गन्धकं टङ्कणं तथा ।
सूतं विषं च [2]नेपालं हरितालं समं तथा ॥ १५० ॥
वटक्षीरेण मर्द्याथ सर्वं कुर्यात्तु गोलकम् ।
तं गोलकं भाण्डमध्ये[3] पाचयेद्दीपवह्निना ॥ १५१ ॥
[4]तं गोलं शीतलं कृत्वा भृङ्गराजेन मर्दयेत् ।
आर्द्रकस्य रसेनापि मर्दयेच्च पुनः पुनः ॥ १५२ ॥
चणप्रमाणवटकान्रसेनाऽऽर्द्रस्य दापयेत् ।
गुञ्जाद्वयप्रमाणेन[5] ज्वरं जीर्णं हरत्यसौ ॥ १५३ ॥

अथ नवज्वरमुरारिः—हरश्च गन्धकं[6] चैव कुनटी[7] च समं समं ।
मर्द्यं कर्कोटिकायाश्च रसेन विनियोजयेत् ॥ १५४ ॥
नवज्वरमुरारिः स्याद्वल्लं[8] शर्करया सह ।
तन्दुलीयरसेनानु[9]पानं शर्करयाऽपि वा ॥ १५५ ॥
गुञ्जाद्वयप्रमाणेन ज्वरान्हन्ति नवान्हठात् ॥ १५६ ॥१४१८॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये ज्वरचिकित्सितं नाम द्वादशोऽध्यायः ॥ १२ ॥

---

अथ त्रयोदशोऽध्यायः ।

[ अथ रक्तपित्तादिचिकित्सनम् । ]

अथ चन्द्रकलारसः—कट्वम्लतीक्ष्णलवणोष्णविदाहिरूक्षैः
पित्तं प्रदुष्टमशनैरतिसेवितैस्तैः ।
संदूष्य रक्तममुनोभय[10]मार्गवर्ति
निर्यात्यसृक्स्थलयकृत्प्लिहतोऽति[11]मात्रम् ॥ १ ॥
[12]पटोलमायसं चूर्णं सूतेन्द्रं[13] समचारितम् ।
[14]लोहारिमृगसंसृष्टं रक्तपित्तहरं परम् ॥ २ ॥
वृषादलानां स्वरसस्य कर्षं रसेन्द्रगुञ्जामधुशर्करायुतम् ।
लिहन्प्रभाते मनुजो निहन्याद्दुःखाकरं दारुणरक्तपित्तम् ॥ ३ ॥

---

१ क. °ज्वरविद्रावणः । २ ङ. जेपालं । ३ क. गोलं भाण्डमध्ये तु । ४ क. ततः संशीतलं । ५ क. °प्रयोगेण । ६ क. °न्धकश्चैव । ७ ङ. °नट्याश्च स° । ८ ग. °द्वल्लश° । ९ ङ. °रसं चानु° । १० घ. °यभागव° । ङ. °यमार्गतस्तंनि° । ११ ङ. °तिघोरम् । १२ ङ. पलैकमा° । १३ ङ. °तेन्द्रस° । १४ ङ. °रिवर्गसंघृष्टं ।

पारदं हिङ्गुलुकं च ऊर्ध्वयन्त्रेण लेपयेत् ।
कुक्कुटाण्डरसं भागं टङ्कणक्षारमेव च ॥ ४ ॥
गन्धकस्य तथा भागं घृतेन परिमर्दयेत् ।
सिद्धं रसं समादाय जीरतोयेन दापयेत् ॥ ५ ॥
दिनानि त्रीणि माषं च ग्रहणीरक्तदोषजित् ।
ज्वरदाहविनाशं च रक्तपित्तविनाशनम् ॥ ६ ॥
प्रत्येकं तोलमानेन सूतकं ताम्रभस्मकम् ।
दिनानि त्रीणि गुटिकां कृत्वा चाम्रौ विनिक्षिपेत् ॥ ७ ॥
ततः शुष्कं समादाय पुनरेव च मर्दयेत् ।
समस्तैः समगन्धैश्च कृत्वा कज्जलिकां च तैः ॥ ८ ॥
मुस्तादाडिमदूर्वाभिः केतकीस्तनवारिभिः ।
सहदेव्याः कुमार्याश्च पर्पटस्यापि वारिणा ॥ ९ ॥
रामशीतलिकातोयैः शतावर्या रसेन च ।
भावयित्वा प्रयत्नेन दिवसे दिवसे पृथक् ॥ १० ॥
तिक्तं गुडूचिकासत्त्वं पर्पटोशीरमागधीः ।
शृङ्गाटं सारिवा चैषां समानं सूक्ष्मचूर्णकम् ॥ ११ ॥
द्राक्षादिककषायेण सप्तधा परिभावयेत् ।
ततः पोताश्रयं क्षिप्त्वा वस्यः कार्याश्चणोपमाः ॥ १२ ॥
अयं चन्द्रकला नाम रसेन्द्रः परिकीर्तितः ।
सर्वपित्तगदध्वंसी वातपित्तगदापहः ॥ १३ ॥
अन्तर्बाह्यमहादाहविध्वंसनमहाक्षमः ।
ग्रीष्मकाले शरत्काले विशेषेण प्रशस्यते ॥ १४ ॥
कुरुते नाग्निमान्द्यं च महातापज्वरं हरेत् ।
भ्रमं मूर्छां हरत्याशु स्त्रीणां रक्तं महाश्रमम् ॥ १५ ॥
ऊर्ध्वाधोरक्तपित्तं च रक्तवान्तिं विशेषतः ।
मूत्रकृच्छ्राणि सर्वाणि नाशयेन्नात्र संशयः ॥ १६ ॥
[ इति रक्तपित्तचिकित्सा । इति चन्द्रकलारसः । ]
सपटोलकहिङ्गुलः सक्षौद्रो रक्तपित्तनुत् ।
नवनीतं सिता लाजा द्राक्षया सह भक्षयेत् ॥ १७ ॥

१ ढ. °हुलीकं । २ ग. ऊर्ध्वय° । ३ क. ठ. ढ. मेलयेत् । ४ ज. कुर्कुटाण्डरसंभागं । ५ ग. °पनुत् । ६ क. °त्तनिवारणम् । ७ घ. °त्येकतो° । ८ क. गुलिकां । ९ च. °र्वां च के° । १० ढ. श्रीगन्धं । ११ क. नत्वा धान्याश्च° । १२ क. श्रमम्° । भ्रमम्° । १३ घ. रक्तमहाश्रमम् । ढ. रक्तमहाश्रमकम् । १४ ज. °नीतासि° ।

मस्तके च घृतं दद्याद्रक्तपित्तहरं परम् ।
द्राक्षाम्रसायुतं ख्यातं शर्कराभावितं पिबेत् ॥ १८ ॥
वासारसं सिताक्षौद्रैर्लाजान्वा शर्करासमान् ।
भक्षयन्रक्तपित्तार्तस्तृष्णादाहज्वरं जयेत् ।
धात्रीचूर्णं सितातुल्यं भक्षयेद्रक्तपित्तनुत् ॥ १९ ॥

**अथ कासचिकित्सा**—दोषाः शोषमनोभितापकुपिताः कुर्वन्ति कासं ततः
पित्तं पूतिकफं प्रपीतनयनः पूयोपमं ष्ठीवति ।
शीतोष्णेच्छुरकारणेन बहुभुक्स्निग्धप्रसन्नाननः
पार्श्वार्त्यल्पबलक्षयाकृतिरपि प्रादुर्भवत्यन्यथा ॥ २० ॥

**अथ रत्नकरण्डकरसः**—सार्कतीक्ष्णाभ्रकोऽगस्त्यकासमर्दवरारसैः ।
मर्दितो वेतसाम्लेन पिण्डितः कासनाशनः ॥ २१ ॥
तारेपिष्टशिलां क्षिप्त्वा हरितालचतुर्गुणाम् ।
वासागोक्षुरसाराभ्यां मर्दितः प्रहरद्वयम् ॥ २२ ॥
प्रस्विन्नो वालुकायन्त्रे गुञ्जाद्वितयसंमितः ।
कासं त्रिकटुनिर्गुण्डीमूलचूर्णयुतो हरेत् ॥ २३ ॥
भूनागाभ्रकयोः सत्त्वं कान्तहेमाभ्ररूपकम् ।
मुक्ताफलानि रत्नानि ताप्यं वैक्रान्तमेव च ॥ २४ ॥
भस्मीकृतमिदं सर्वं पृथङ्माषमितं मतम् ।
निष्कमात्रामितं शुद्धं राजावर्तरजस्तथा ॥ २५ ॥
एतत्सर्वं समं योज्यं मर्दयित्वाऽम्लवेतसैः ।
रुद्ध्वा मूषोदरे कोष्ठ्यां धमेदाकाशदर्शनम् ॥ २६ ॥
शतवारं धमेदेवं मर्दयित्वाऽम्लवेतसैः ।
ततः संचूर्णिते चास्मिन्मुक्ताभस्म द्विशाणकम् ॥ २७ ॥
मरिचं पञ्चशाणेयं क्षिप्त्वा संमर्द्य यत्नतः ।
रम्ये करण्डके क्षिप्त्वा स्थापयेत्तदनन्तरम् ॥ २८ ॥

---

१ क. ख्यातः । २ ङ. °राम्लावि° । ३ घ. °रसासि° । ४ ग. °जा वा शर्करासमाः । ५ ग. °क्षयेद्रक्त° । ६ क. हरेत् । ७ ङ. पीतं । ८ क. °क्लिन्नघः प्र° । ९ ङ. नतः पा° । १० घ. यश्चानल्प° । ११ क. °बलः क्ष° । १२ ख. °भ्रकाग° । १३ ञ. पिडितः । १४ ख. तारपि° ग. तारे पिष्टे शि° । १५ ग. °संयुतः । १६ क. °मार्करौप्यक° । १७ ट. °रूप्यक° । १८ क. °मात्रं मि° । ङ. °मात्रमि° । १९ च. शतं वा° । २० च. °ते वाऽस्मि° । २१ क. ठ. मरीचं । २२ ङ. °श्वशाणे° ।

सोऽयं रत्नकरण्डको रसवरो मध्वाज्यसंक्रामणो
हन्याच्छ्वासगदं ज्वरं ग्रहणिकां कासं च हिध्मामयम् ।
शूलं शोषमहोदरं बहुविधं कुष्ठं च हन्याद्रदा-
न्बल्यो वृष्यैकरः प्रदीपनकरः स्वस्थोचितो वेगवान् ॥ २९ ॥

**अथ स्वयमग्निरसः**—शुद्धसूतस्य भागैकं भागैकं शुद्धगन्धकम् ।
भागत्रयं मृतं ताम्रं मरिचं पञ्चभागिकम् ॥ ३० ॥
मृताभ्रस्य चतुर्भागं भागमेकं विषं क्षिपेत् ।
भूताङ्कुशस्य भागैकं सर्वं चाम्लेन मर्दयेत् ॥ ३१ ॥
यामं भूताङ्कुशो नाम माषैकं वातकासजित् ।
अनुपानं लिहेत्क्षौद्रैर्बिभीतकफलत्वचः ॥ ३२ ॥
स्वयमग्निरसो नाम भक्ष्यो निष्कद्वयं द्वयम् ।
पित्तकासारुचिश्वासक्षयकासांश्च नाशयेत् ॥ ३३ ॥

**अथ बोलबद्धरसः**—रसभस्म विषं तुल्यं गन्धकं द्विगुणं मतम् ।
बोलतालकबाह्लीककर्कोटीमाक्षिकं निशा ॥ ३४ ॥
कण्टकारीयवक्षारलाङ्गलीक्षारसैन्धवम् ।
मधूकसारं संचूर्ण्य सप्ताहं चाऽऽर्द्रकद्रवैः ॥ ३५ ॥
गुटिकां बदराकारां श्लेष्मकासापनुत्तये ।
भक्षयेद्बोलबद्धोऽयं रसः सश्वासपाण्डुजित् ॥ ३६ ॥

**अथाग्निरसः**—रसगन्धकपिप्पल्यो हरीतक्यक्षवासकम् ।
षडुत्तरगुणं चूर्णं बब्बूलक्वाथभावितम् ॥ ३७ ॥
एकविंशतिवाराणि शोषयित्वा विचूर्णयेत् ।
भक्षयेन्मधुना हन्ति कासमग्निरसो ह्ययम् ॥ ३८ ॥

***अथाग्निरसः**—भृङ्गराजस्य पत्रस्य[12] चूर्णेन मधुना सह ।
गोलकं धारयेद्वक्त्रे कासविष्टम्भशान्तये ॥ ३९ ॥
अर्कैरण्डस्य पत्राणां रसं पीत्वा च कासजित् ।
दन्तीमूलस्य धूमं वा निर्गुण्ड्या वा [13]पिबेज्जयेत् ॥ ४० ॥

---

* घ. स्वयमग्निरसः ।

---

१ ङ. स । २ क. ठ. ङ. °ष्यतमः । ३ क. लेपयेत् । ४ ज. °त्क्षौद्रं बिभी° । ५ घ. °त्वचम् । ङ. °त्वचा । ६ ङ. °रसश्चायं.भक्षेन्निष्क° । ७ ङ. °श्वासं क्षयं पाण्डुं च ना° । ८ घ. °लीकं कर्कोटी° । ९ च. °लीक्षीर° । १० घ. °चूर्ण्य स° । ११ ङ. °वारेण शो° । १२ ङ. पत्रं तु चूर्णितं म° । १३ घ. पिबञ्जये° ।

त्रिकटु त्रिफला चैला जातीफललवङ्गकम्।
एतेषां समभागानां समपूर्वरसो भवेत्॥ ४१॥
संचूर्ण्याऽऽलोडयेत्क्षौद्रे भक्ष्यो निष्कद्वयं द्वयम्।
स्वयमग्निरसो नाम्ना क्षयकासनिकृन्तनः॥ ४२॥
इन्द्रवारुणिकामूलं भृङ्गीकृष्णातिलैः सह।
भक्षयेत्क्षयकासार्तो निष्कमात्रं प्रशान्तये॥ ४३॥
इन्द्रवारुणिकामूलं देवदारु कटुत्रयम्।
शर्करासहितं खादेदूर्ध्वश्वासप्रशान्तये॥ ४४॥

**अथ श्वासचिकित्सा**—श्लेष्मोपरुद्धगमनः पवनोऽतिदुष्टः
संदूषयन्ननु जलान्नवहाश्च नाडीः।
आमाशयोद्भवमिमं विदधात्युरःस्थं
श्वासं च वक्रगमनो हि शरीरभाजाम्॥ ४५॥

**अथ सूर्यावर्तरसः**—सूतार्धं गन्धकं मर्द्यं यामैकं कन्यकाद्रवैः।
द्वयोः समं ताम्रपत्रं पूर्वकल्केन लेपयेत्॥ ४६॥
दिनैकं हण्डिकायन्त्रे पक्वमादाय चूर्णयेत्।
सूर्यावर्तरसो ह्येष द्विगुञ्जः श्वासजिद्भवेत्॥ ४७॥

**अथ नीलकण्ठः**—गन्धकं मरिचं साज्यं पिबेच्छ्वासकफापहम्।
शिला हिङ्गु विडङ्गं च मरिचं कुष्ठसैन्धवम्॥ ४८॥
मध्वाज्याभ्यां लिहेत्कर्षं श्वासकासकफापहम्॥ ४९॥
सूतः षोडश तत्समो दिनकरस्तस्यार्धभागो बलिः
सिन्धुस्तस्य समैः सुसूक्ष्ममृदितः षट्पिप्पलीचूर्णितः।
जम्बीरस्वरसेन मर्दितमिदं तप्तं सुपक्वं भवे-
त्कासश्वासकगुल्मशूलजठरं पाण्डुं लिहन्नाशयेत्॥ ५०॥
साधारणं तु वटकं वक्ष्यामि शृणु तत्त्वतः।
पारदं गन्धकं चैव पलमेकं पृथक्पृथक्॥ ५१॥
पलत्रयं त्रिकटुकं वङ्गमेकपलं क्षिपेत्।
सर्वमेकत्र संयोज्य दिनानि त्रीणि मर्दयेत्॥ ५२॥

---

१ अ. °षां नवभा°। २ च. ड. ठ. समं पू°। ३ अ. °द्वयद्व°। ४ ट. °लं श्रृङ्गी°। ५ च. °त्रं च शा°। ६ क. °मिदं वि°। ७ ग. °रस्थः श्वा°। ८ च. वक्रग°। ९ ङ. मर्द्य। १० क. हण्डियन्त्रेण। ११ क. °च्छ्वासे क°। १२ क. °मः स सू°। १३ घ. °प्पलीश्चूर्णिताः। १४ ट. °चूर्णितः। १५ घ. °ससगु°। १६ क. °ण्डुं क्लिह°।

मूत्रेण[1] च तथा त्रीणि दिनानि परिमर्दयेत् ।
अक्षप्रमाण[2]वटकं छायाशुष्कं तु कारयेत् ॥ ५३ ॥
नित्यमेकं तु वटकं दिनानि त्रिंशदेव च ।
श्वासकासज्वरहरमग्निमान्द्यारुचिप्रणुत् ॥ ५४ ॥
रसभागो भवेदेको गन्धको द्विगुणो मतः ।
त्रिभागा पिप्पली ग्राह्या चतुर्भागा हरीतकी ॥ ५५ ॥
बिभीतः पञ्चभागस्तु वासा षड्गुणिता भवेत् ।
भार्ङ्गी[3] सप्तगुणा ग्राह्या सर्वं चूर्णं प्रकल्पयेत् ॥ ५६ ॥
बब्बुलकाथमादाय भावयेदेकविंशतिः ।
बिभीतकप्रमाणेन मधुना गुटिकां चरेत्[4] ॥
एकैकां भक्षयेत्प्रातः श्वासकासनिवृत्तये ॥ ५७ ॥
सूतं शुल्बं सुलोहं बलिममृतयुतं त्रित्रिकं रेणुकाब्दं
गण्डीरं केसराग्निं[5] द्विगुणगुडयुतं मर्दयित्वा समस्तम् ।
कुर्यात्कोलास्थिमात्रान्सुरुचिरवटकान्भक्षयेत्प्राग्दिनादौ[6]
पथ्याशी सर्वरोगान्हरति च नितरां नीलकण्ठाभिधानः ॥५८॥

## अथ श्वासकासकरिकेसरीरसः ।

तारताम्ररसपिष्टिका[7]शिलागन्धतालसमभागिकं रसैः ।
आटरूषसुरसार्द्रसंभवैर्मर्दय प्रकुरु[8] गोलकं ततः ॥ ५९ ॥
मृत्स्नया च परिवेष्ट्य[9] गोलकं यामयुग्ममथ भूधरे पचेत् ।
गोलकेन[10][11] कुरु[12] तत्समं ततश्चाऽऽटरूषकटुकैश्च[13] भावयेत् ॥ ६० ॥
श्वासकासकरिकेसरीरसो वल्लमस्य परिसेवयेद्बुधः ॥ ६१ ॥

**अथ सूर्यरसः**—रसगन्धकताम्राभ्रं कणाशुण्ठ्यूषणं समम् ।
भूतमेकं विषं चैकं सूर्यः[14] कासादिनाशनः ॥ ६२ ॥

**अथ पर्पटीरसः**[15]—रसगन्धकधान्याभ्रतालताप्योपलं[16] क्रमात् ।
भार्गवृद्धं[17] वचाकुष्ठहरिद्राक्षारचित्रकैः ॥ ६३ ॥
सपाटालाङ्गलीव्योषसैन्धवाक्षविषैः समम् ।
भावितं भृङ्गनीरेण हिक्कावैस्वर्यकासनुत् ॥ ६४ ॥

---

१ घ. ङ. गोमूत्रेण त°। २ घ. °माणं व°। ३ घ. भार्गी। ४ ग. किरेत् । ५ च. °राग्निद्वि°। ६ घ. °येत्सान्दिना°। ७ ट. °ष्टिकां शि°। ८ क. °प्रकर°। ९ ट. °र्दयेत्प्रकु°। क. °र्दयन्प्रकु°। १० ङ. °वेष्य गो°। ११ अ. गन्धकेन । १२ ज. कुहरेसमं । १३ अ. °कैर्विमा°। १४ घ. स्वर्यः । १५ ख. महापर्पटीरसः । १६ ज. °तालं ताप्यं पलक°। १७ च. °वृद्धव°।

पक्वताम्रे रसः पिष्टो बलिना हिध्मिनां हितः ।
चूर्णं पाठेन्द्रवारुण्योर्भाण्डे दत्वाऽथ कूनटीम् ॥ ६५ ॥
तत्पृष्ठे शुद्धसूतं तु कुनव्यंशं प्रदापयेत् ।
सूतार्धं कुनटीचूर्णं तस्यार्धं पूर्वमूलिकाः ॥ ६६ ॥
चूर्णं दत्वा पचेच्चुल्ल्यां यामाष्टं मृदुवह्निना ।
शिलापूतो रसो नाम हन्ति हिक्कां त्रिगुञ्जकः ॥ ६७ ॥
क्वाथं रास्नाबृहत्यग्निबलादुग्धैश्च पाययेत् ।
हिक्किनं पाययेद्धूमं पत्रैः शिखिनिशोद्भवैः ॥ ६८ ॥
रसं द्विगुणगन्धेन मर्दयित्वा सभृङ्गकम् ।
लोहपात्रे घृताभ्यक्ते द्रावितं बदराग्निना ॥ ६९ ॥
ऊर्ध्वाधो गोमयं दत्वा कदल्याः कोमले दले ।
स्निग्धे पटे ह्ययोदर्व्या[11] पर्पटाकारतां नयेत् ॥ ७० ॥
लोहपात्रे विनिक्षिप्त्वा[12] लोहपर्पटिका भवेत् ।
ताम्रपात्रे[13] विनिक्षिप्त्वा[14] ताम्रपर्पटिका भवेत्[15] ॥ ७१ ॥
विषपादं च युञ्जीत तत्साध्येष्वामयेषु च ।
सुरसाया जयन्त्याश्च कन्यकाटकरूषयोः ॥ ७२ ॥
त्रिफलाया मुनेर्भाङ्ग्यां मुण्ड्यास्त्रिकटुचित्रयोः ।
भृङ्गराजस्य वह्नेश्च प्रत्यहं द्रवभावितम् ॥ ७३ ॥
आर्द्रकस्य रसेनापि[16] सप्तधा भावयेत्पुनः ।
अङ्गारैः स्वेदयेदीषत्पर्पटीरसमुत्तमम् ॥ ७४ ॥
गुञ्जाष्टकं ददीतास्य ताम्बूलीपत्रसंयुतम् ।
पिप्पलीदशकैः क्वाथं निर्गुण्ड्याश्चानुपाययेत् ॥ ७५ ॥
त्रिकण्टकस्य मूलानि[17] शुण्ठीं संक्षुद्य निक्षिपेत् ।
अजाक्षीरे सनीरार्धे[18] यावत्क्षीरं विपाचयेत् ॥ ७६ ॥
तत्क्षीरं पाययेद्रात्रौ सकणं भोजनेऽपि च ।
कूष्माण्डं वर्जयेच्चिञ्चां वृन्ताकं कर्कटीमपि ॥ ७७ ॥

१ ङ. कुनटीम् । २ क. ठ. सूताभ्रं । ३ क. ङ. °लिकाम् ज. °लिकी । ४ घ. °दुनाग्निना । ५ ख. °लायुतो । ज. °लाधातो । ५ च. क्वाथ्यं । ७ ङ. °लामुद्रैश्च । ८ च. °येद्दुग्धं प° । ९ क. रसात्त्रिगु° । घ. रसं त्रिगु° । १० ज. स्निग्धया लोहदर्व्या च । ११ ङ. वाऽयोदर्व्या । १२ क. °क्षिप्ता लो° । १३ च. °पादं वि° । १४ ज. °क्षिप्ता ता° । १५ ङ. मता । १६ ङ. द्रवेणापि १७ घ. °नि निर्गुण्डीं चैव नि° । १८ च. °रार्धे या° ।

आरनालं च तैलं च संसर्गं च विवर्जयेत् ।
मासत्रयं च सेवेत कासश्वासनिवृत्तये ॥ ७८ ॥
स हिङ्गुजीरकव्योषैः शमयेद्ग्रहणीं रसः ।
दशमूलाम्भसा वातज्वरं त्रिकटुना कफम् ॥ ७९ ॥
ज्वरं मधुकसारेण पञ्चकोलेन सर्वजम् ।
यक्ष्माणं मधुपिप्पल्या गोमूत्रेण गुदाङ्कुरान् ॥ ८० ॥
शूलमैरण्डतैलेन पाण्डुशोफं सगुग्गुलुः ।
कुष्ठानि भृङ्गभल्लातबाकूचीपञ्चनिम्बकैः ॥ ८१ ॥
धत्तूरबीजसंयोगान्मेहोन्मादविनाशनी ।
अपस्मारं निहन्त्याशु व्योषनिम्बुदलैः सह ॥ ८२ ॥
स्तनंधयशिशूनां तु नितरां पर्पटी हिता ।
पथ्याक्षचूर्णादिवशोद्ध्वाधोश्चान्यान्सुदुस्तरान् ॥ ८३ ॥
सजातीफलशीतोदं योजयेत्पर्पटीरसम् ।
पित्ताजीर्णे शिरश्चास्य शीततोयेन सेचयेत् ॥ ८४ ॥
नस्यं निष्ठीवनं धूमं तीक्ष्णं वमनरेचनम् ।
अन्नं रूक्षाल्पतीक्ष्णोष्णं कटुतिक्तकषायकम् ॥
चिरकालस्थितं मद्यं योजयेत्कफरोगिणे ॥ ८५ ॥

**अथ मन्थानभैरवः**—मृतसूतं मृतं ताम्रं हिङ्गु पुष्करमूलकम् ।
सैन्धवं गन्धकं तालं कटुकं चूर्णयेत्समान् ॥ ८६ ॥
देवदालीपुनर्नव्योर्निर्गुण्डीमेघनादयोः ।
तिक्तकोशातकीद्रावैर्दिनैकं मर्दयेद्दृढम् ॥ ८७ ॥
माषमात्रं लिहेत्क्षौद्रै रसं मन्थानभैरवम् ।
कफरोगप्रशान्त्यर्थं निम्बक्वाथं पिबेदनु ॥ ८८ ॥
कर्षैकं गन्धकं शुद्धं घृतैश्चोष्णोदकैः पिबेत् ।
कफं हन्त्यथवा क्षौद्रैः पञ्चवक्त्ररसः खलु ॥ ८९ ॥

---

१ ङ. संगमं । २ ङ. °लमेरण्डबीजन । ३ क. °शोथं स° । ४ ज. °चीनिम्बपञ्चकैः । ५ ख. °निम्बुकैः । ६ ग. °गा महोन्माद° । ङ. °गा मोहो° । अ. °गा मदोन्माद° । ७ क. °निम्बद° । ८ ङ. पथ्योपचू° । ९ क. °शादूर्ध्वाश्चा° । १० ज. °न्सुदुःसहान् । ११ ज. °लसीतो° । १२ ज. सेवयेत् । १३ ङ. °गिणाम् । १४ अ. मृतं सू° । १५ ग. त्क्षौद्रे र° । १६ ग. रसो मन्थानभैरवः । १७ अ. त्रिपं ।

विश्वादि[1]त्रिकनि[2]र्गतद्रवनिशा[3]कीरप्रियोत्थं दलं
नीलग्रीवगलालयं सुरपतेस्ता[4]र्तीयनेत्राभि[5]धम् ।
विद्ध[6]त्पुञ्ज[7]वतीक्रमिप्रतिभटं निर्गुण्डिकावारिणा
तुल्यां[8]शाश्चणकप्रमाणव[9]टिकाः सश्वासकासा[10]पहाः ॥२०॥१५०८

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रक्तपि-
त्तकासश्वासहिध्मावैस्वर्यचिकित्सितं नाम त्रयोदशोऽध्यायः ॥ १३ ॥

---

अथ चतुर्दशोऽध्यायः ।

[ अथ राजयक्ष्मादिचिकित्सनम् । ]

**अथ राजयक्ष्मचिकित्सा**—अग्निमान्द्यं ज्वरः शैत्यं वान्तिः शोणितपूययोः ।
सत्त्वहानिश्च दौर्बल्यं रोगराजस्य लक्षणम् ॥ १ ॥

**अथ कनकसुन्दरः**—रसस्य तुल्यभागेन हेमभस्म प्रकल्पयेत् ।
तालकं गन्धकं तुत्थं माक्षिकं रसकं शिलाम् ॥ २ ॥
रससा[11]म्येन युञ्जीत तुत्थं भस्मीकृतं न्यसेत् ।
वह्नौ भस्मीकृतं चैव मयूरक[12]स्तुत्थकम् ॥ ३ ॥
किंचिट्टङ्कणकं दत्वा मार्जारस्य विशा युतम् ।
प्रथमं पुटयेद्दध्ना द्विती[13]यं मधुना सह ॥ ४ ॥
तालकं शोधये[14]च्चात्र कूष्माण्डक्षारपाचनात् ।
तैले पचेत्ततः सम्यक्चूर्णं वा परिशोधयेत् ॥ ५ ॥
गन्धकं शोधयेद्दुग्धे रसकं नरवारिणा ।
माक्षिकं सिन्धुसंयुक्तं बीजपूररसे प[15]चेत् ॥ ६ ॥
जयन्ती[16]द्रवसंपिष्टां शिलां तत्रैव पाचयेत् ।
एकीकृत्य ततः सर्वमर्कक्षीरेण मर्दयेत् ॥ ७ ॥
जयन्तीभृङ्गराजा[17]भ्यां वासापाठाकृशानुभिः ।
अगस्तिलाङ्गलीभ्यां च प्रत्येकं दिवसं शनैः ॥ ८ ॥
ततस्तु गोलकं बद्ध्वा पचेत्पूर्ववदा[18]हृतः ।
चूर्णयित्वा ततः सम्यक्भावयेदार्द्रकाम्बुना ॥ ९ ॥

---

१ ङ. °दित्रयनि°। २ ग. °निर्गतं द्र°। ङ. °निर्गतेन्द्रव°। ३ च. °शाकार°। ४ क. °स्ताभीयनेत्रा-भिधा । ५ ख. °भिधः । ६ छ. °द्रःपूजव° । ७ क. °अयती । ख. °अयति कृ°। ८ ङ. °ल्यां-शांश्च°। ९ ज. °वटका स°। १० ज. °सान्हरेत् । ११ क. °म्यं प्रयु°। ग. °साम्ये प्रयु°। १२ क. °कसतु°। घ. °कस्य तु°। १३ ङ. द्वितीय । १४ ङ. °येदग्रे कू°। १५ क. न्यसेत् । १६ च. °तीद्राव°। १७ ङ. °जाह्नवा°। १८ क. °दाहतः ।

सप्तधा व्योषनिर्यासै रसः कनकसुन्दरः ।
गुञ्जाद्वयं त्रयं वाऽस्य राजयक्ष्मापनुत्तये ॥ १० ॥
मधुना पिप्पलीभिश्च मरिचैर्वा घृतान्वितैः ।
लेहयेद्रोगिणं वैद्यो वयोबलविशेषवित् ॥ ११ ॥
जैयपालरजोभिर्वा शुण्ठ्या गव्यघृताक्तया ।
ददीत शूलिने प्राज्ञो गुल्मिने च विशेषतः ॥ १२ ॥
कादिवर्ज्यं चरेत्पथ्यं हृद्यं बल्यं च पूर्ववत् ।
संनिपाते ददीतैनमार्द्रकद्रवसंयुतम् ॥ १३ ॥
गुडूचीत्रिफलाक्वाथैः संस्कृतो गुग्गुलुर्वरः ॥ १४ ॥

**अथ राजमृगाङ्कः**—रसभस्म त्रयो भागा भागैकं हेमभस्मकम् ।
मृतताम्रस्य भागैकं शिलागन्धकतालकम् ॥ १५ ॥
प्रतिभागद्वयं शुद्धमेकीकृत्य विचूर्णयेत् ।
वराटान्पूरयेत्तेन अजाक्षीरेण टङ्कणम् ॥ १६ ॥
पिष्ट्वा तेन मुखं रुद्ध्वा मृद्भाण्डे तान्निरोधयेत् ।
शुष्कं गजपुटे पच्याच्चूर्णयेत्स्वाङ्गशीतलम् ॥ १७ ॥
रसो राजमृगाङ्कोऽयं चतुर्गुञ्जः क्षयापहः ।
दशपिप्पलिकाक्षौद्रैर्मरिचैकोनविंशतिः ॥
सघृतैर्दापयित्वाऽथ रोगराजप्रशान्तये ॥ १८ ॥

**अथ शङ्खेश्वरः**—शङ्खस्य बलयान्निष्कं चतुर्निष्कं वराटकम् ।
निष्कार्धं नीलतुत्थस्य सर्वतुल्यं तु गन्धकम् ॥ १९ ॥
गन्धतुल्यं मृतं नागं नागतुल्यं मृतं रसम् ।
टङ्कणं मृततुल्यं स्यान्मर्द्यं पाच्यं मृगाङ्कवत् ॥ २० ॥
राजयक्ष्महरः सोऽयं नाम्ना शङ्खेश्वरो मतः ॥ २१ ॥

**अथ मृगाङ्कपोटली**—शङ्खनाभिं गवां क्षीरैः पेषयेन्निष्कषोडश ।
तेन मूषा प्रकर्तव्या तन्मध्ये भस्मसूतकम् ॥ २२ ॥
निष्कार्धं गन्धकात्रीणि चूर्णीकृत्य विनिक्षिपेत् ।
रुद्ध्वा तद्वेष्टयेद्वस्त्रे मृत्तिकां लेपयेद्बहिः ॥ २३ ॥
शोष्यं गजपुटे पच्यान्मूषया सह चूर्णयेत् ।
गुञ्जैकमनुपानेन क्षयं हन्ति मृगाङ्कवत् ॥ २४ ॥

---

१ घ. °गिणां वै°। २ क. ठ. °षतः । ३ घ. जेपालस्य र°। ४ ग. °ण्डे तान्नि°। ५ घ. °पयेद्वाऽथ। ६ च. °नाभिग°। क. °नाभिर्गवां । ७ क. °डशः । ८ क. °द्वस्त्रैर्मृत्ति°।

**अथ मृगाङ्कपोटली**—मातुलुङ्गस्य मूलानि लाजचूर्णं ससैन्धवम् ।
पिप्पलीमधुना युक्तं खादेद्वान्तिप्रशान्तये ॥ २५ ॥
रजनीशङ्खपूगं च निष्कैकं वान्तिनाशनम् ।
निष्कार्धं टङ्कणं वाऽथ काचमाचीद्रवैः पिबेत् ॥ २६ ॥
सुगन्धां वा पिबेत्खादेत्सर्ववान्तिप्रशान्तये ।
अलक्तकरसं क्षौद्रे रक्तवान्तिहरं पिबेत् ॥ २७ ॥
द्विनिष्कं भस्म सूतस्य निष्कैकं स्वर्णभस्मकम् ।
शुद्धगन्धकनिष्कौ द्वौ चूर्णित्वा चित्रकद्रवैः ॥ २८ ॥
द्वियामान्ते विशोष्याथ तेन पूर्या वराटिकाः ।
वराटान्मृन्मये भाण्डे रुद्ध्वा गजपुटे पचेत् ॥ २९ ॥
स्वाङ्गशीतं विचूर्ण्याथ पोटलीं हेमगर्भिताम् ।
मृगाङ्कवच्चतुर्गुञ्जं भक्षितं राजयक्ष्मनुत् ॥
स्वयमग्निरसं खादेत्रिनिष्कं राजयक्ष्मनुत् ॥ ३० ॥

**अथ पञ्चामृतरसः**—भस्म सूताभ्रलोहानां शिलाजतु विषं समम् ।
गुडूचीत्रिफलाक्वाथैः संस्कृतं गुग्गुलं तथा ॥ ३१ ॥
मृतं नेपालताम्रं च सूतस्थाने नियोजयेत् ।
एकीकृत्य द्विगुञ्जं तद्भक्षयेद्राजयक्ष्मनुत् ॥ ३२ ॥
पञ्चामृतरसो नाम ह्यनुपानं च पूर्ववत् ।
हरेत्क्षीराजगन्धाभ्यां जयन्ती वा क्षयापहा ॥ ३३ ॥

**अथ लोकनाथरसः**—तुल्यं पारदगन्धकं त्रिकटुकं ताभ्यां रजः कम्बुजं
[12]तैस्तुल्यं च भवेत्कपर्दभसितं स्यात्पारदाट्टङ्कणम् ।
पादांशं सकलैः समानमरिचं लिह्यात्क्रमात्साज्यकं
यावन्निष्कमितं भवेत्प्रतिदिनं मासात्क्षयः शाम्यति ॥ ३४ ॥
रसस्य भस्मना हेम पादांशेन प्रकल्पयेत् ।
गन्धकं द्विगुणं दत्वा मर्दयेच्चित्रकाम्बुना ॥ ३५ ॥
चराचरास्ये संपूर्य टङ्कणेन निरुध्य च ।
भाण्डे चूर्णप्रलिप्तेऽथ क्षिप्त्वा रुन्धीत मृत्स्नया ॥ ३६ ॥

---

१ क. °लीरसः । २ क. °तुलिङ्ग° । ३ ङ. °स्य बीजं वा लाजाचूर्णसमन्वितम् । ४ क. लाजाचू° । ५ ङ. °धुसंयु° । ६ घ. चाथ । ७ च. त्सर्वं वा° । ८ घ. द्वौ मर्दयेच्चित्र° । ९ ञ. °गर्भगाम् । १० घ. °क्ष्मजित् । ११ घ. गुग्गुलुं । १२ क. ठ. ङ. तत्तुल्यं ।

शोषयित्वा पुटे[1]द्गर्तेऽरत्निमात्रेऽपराह्णके।
स्वाङ्गशीतलमुद्धृत्य चूर्णयित्वाऽथ विन्यसेत्॥ ३७॥
एष लोकेश्वरो नाम पुष्टिवीर्यविवर्धनः।
गुञ्जाचतुष्टयं चा[2]ऽऽज्यं मरिचैश्च समन्वितम्॥ ३८॥
खादे[3]त्परमया भक्त्या लोकेशे सर्वदर्शिनि।
अङ्गकार्श्येऽग्निमान्द्ये च कासहिक्के रसो ह्ययम्॥ ३९॥
मरिचैर्घृतसंयुक्तैः प्रदातव्यो दिनत्रयम्।
लवणं वर्जयेत्तत्र साज्यं सदधि भोजनम्॥ ४०॥
एकविंशद्दिनं यावन्मरिचं सघृतं पिबेत्।
पथ्यं मृगाङ्कवद्देयं शयीतोत्तानपादतः॥ ४१॥
वमने संप्रवृत्ते तु गुडूचीद्रवमाहरेत्।
मधुना पाययेत्सार्धं दग्धवृन्ताकमाशयेत्॥ ४२॥
स्नानं शीतलतोयेन मूर्ध्नि धारां विनिक्षिपेत्।
जा[4]ते श्लेष्मविकारे तु कदलीफलमाहरेत्॥ ४३॥
भृष्ट्वा तन्मरिचैः सार्धं भोजयेत् श्लेष्मनुत्तये।
आर्द्रकं मधुमिश्रं वा गुडार्द्रकमथापि वा॥ ४४॥
भृष्ट्वा कुस्तुम्बरी[5] माषान्निस्तुषांश्चूर्णयेत्ततः।
शर्कराघृतमिश्रं तद्दद्यादरुचिशान्तये॥ ४५॥
भृष्ट्वा कुस्तुम्बरीं सम्यग्घृते[6] शर्करया पिबेत्।
एलां मरिचसंयुक्तां यावद्भ्रान्तिः[7] प्रशाम्यति॥ ४६॥
अजमोदं[8] विडङ्गं च पिष्ट्वा तक्रेण पाययेत्।
कृमिकोपप्रशान्त्यर्थं क्वाथं वातघ्नमुस्तयोः॥ ४७॥
संस्कृत्य दुग्धिकां वह्नौ विरेके च प्रयोजयेत्।
ईषद्भृष्टा जयाचूर्णं मधुना खादयेन्निशि॥ ४८॥
अङ्गतोदे घृतेनाङ्गं मर्दयित्वोष्ण[9]वारिणा।
स्नापयेद्रोगिणं वैद्यो लोकनाथं[10] च संस्मरेत्[11]॥ ४९॥

**अथ वैद्यनाथरसः**—शङ्खस्य वलयं निष्कं चतुर्निष्कं[12] वराटिकाः।
कर्षांशं नीलकटकं[13] तुत्थं गन्धा[14]श्मटङ्कणम्॥ ५०॥

---

१ ट. °टे गर्ते। २ च. चाज्यम°। ३ ङ. खादयेत्परया। ४ च. जातश्ले°। ५ च. °रीमाषान्निस्तुषां चूर्ण°। ६ च. °ग्घृतशर्करया पचेत्। ७ च. °द्भ्रान्तिप्रशान्तये। ८ क. °मोदां वि°। ९ ङ. °दयेत्कोष्ण°। १० ग. °थं रसं स्मरन्। ११ क. ठ. ड. °स्मरन्। १२ च. °र्निष्कां वराटिकाम्। १३ ख. नीलतुत्थं च तालगन्धकटङ्कणम्। १४ ग. °न्धालट°।

तुत्थं[1] नागं रसं चार्धं निष्कांशं पूर्ववत्पुटेत् ।
वराटचूर्णं मण्डूककल्पिता[2]लेपने पचेत् ॥ ५१ ॥
अस्यार्धमाषं मरिचार्धमाषं ताम्बूलवल्लीरसभावितं च ।
तत्पत्रलिप्तं मधुनाऽवलिह्याद्धार्यं[3] नवीनेन[4] घृतेन वाऽपि ॥ ५२ ॥
नाडीमार्गे निर्गते चाल्पमल्पं पथ्यं भोज्यं लोकनाथोपदिष्टम् ।
यामे यामे चैवमामण्डलान्ता[5]त्सिद्धं सद्यः शोषजिद्वैद्यनाथः ॥ ५३ ॥

**अथ लोकनाथः**—अर्धार्ध[6]निष्कौ रसतुत्थनागौ[7] पृथक्पृथग्गन्धकटङ्कं[8]कर्षम् ।
शङ्खस्य कर्षं मृतताम्रतो द्वौ वराटिकानां नवसंपुटस्थान्[9] ॥ ५४ ॥
पक्त्वा पचेदर्कदलद्रवैर्द्राग्[10]भूयोऽर्धभागेन करीषकाणाम्[11] ।
अस्यार्धपादं मरिचार्धभागं गन्धाश्मनिष्कं च घृतेन लिह्यात् ॥ ५५ ॥
अश्नीयात्पूर्ववत्पथ्यं वासराण्येकविंशतिः ।
लोकनाथो रसो नाम्ना रोगराजनिकृन्तनः ॥ ५६ ॥

**अथ प्राणनाथः**—अयोरजो विंशतिनिष्कमानं विभावितं[12] भृङ्गरसाढकेन ।
धत्तूरभार्ङ्गी[13]त्रिफलारसार्ध[14]तुल्यांशताप्यं विपचेत्[15]पुटेषु ॥ ५७ ॥
सूतं[16] च निष्कं समभागतुत्थं गन्धोपलौ[17] द्वौ चतुरो वराटान् ।
पक्त्वा पुटाग्नौ समलोहचूर्णान्पचेत्तथा पूर्वैरसेन[18] मिश्रान् ॥ ५८ ॥
चूर्णेऽस्मिन्मरिचाः[19] सप्त तुत्थटङ्कणयोर्दश ।
संसृजेत्[20]तत्पृथङ्निष्कान्प्राणनाथाह्वयोदितः ॥ ५९ ॥
अर्धपादो रसाद्भक्ष्यः केवलाद्राजयक्ष्मिभिः ।
शोषोदरार्शोग्रहणीज्वरगुल्माद्युपद्रुतैः ॥ ६० ॥

**अथ वज्ररसः**—कर्षं खर्परसत्त्वस्य षण्माषे[21] हेम्नि विद्रुते ।
षण्निष्कसूतं गन्धाश्मन्यष्टनिष्के प्रवेशितम् ॥ ६१ ॥
प्रवालमुक्ताफलयोश्चूर्णे हेमसमांशयोः ।
क्रमाद्द्वित्रिचतुर्निष्कं मृतायः सीसभास्करम् ॥ ६२ ॥
शाङ्गेर्य[22]म्लेन यामांस्त्रीन्मर्दितं चूर्णितं पृथक् ।
द्वौ निष्कौ नीलकटकं[23] व्योमायस्कान्तितालकात् ॥ ६३ ॥

---

१ ग.ङ. तुत्थभागं र°। २ ङ. °कल्पनाले°। ३ ग. °ह्याच्चर्य। घ. °ह्याद्धैयंगवीनेन घृ°। ४ क.ठ.नवनीतेन। ५ घ. °ण्डलान्ते सेव्यं स°। ६ च. अर्ध्यर्ध°। ७ घ. °त्थभागौ। ८ ङ. निष्कं। ९ क. °स्थात्। १० ख. °वार्दयन्भू°। ११ ट. °रीशिफानाम्। १२ ङ. विभर्जितं। १३ घ. °भार्गीत्रि°। १४ ग. °सार्द्रतु°। घ. °सार्धं तु°। १५ क. °चेद्रसेषु। ज. °चेत्पुटं च। १६ घ. ङ. सूतस्य नि°। १७ क. °पला द्वौ। ज. °पले द्वौ। १८ घ. °रसैर्विमि°। १९ घ. °रिचात्सप्त। क. °रिचान्सप्त। २० ज. °जेत पृथ°। २१ घ. षण्मासा। २२ घ. चाङ्गेर्य°। २३ ग. °लवटकव्यो°।

अङ्कोल्लकङ्कुणीबीजतुत्थेभ्यश्चतुरः पृथक्।
अष्टौ च टङ्कणक्षाराद्वराटानां च विंशतिः ॥ ६४ ॥
महाजम्बीरनीरस्य प्रस्थद्वंद्वेन पेषयेत्।
एतदष्टशरावस्थं शुद्धं खार्यास्तुषस्य च ॥ ६५ ॥
करीषभारे च पचेदथमाषद्वयं ततः।
एतावद्गन्धकात्पादं मरिचाद्भावितादपि ॥ ६६ ॥
मधुनाऽऽलोडितं लिह्यात्ताम्बूलीपत्रलेपितम्।
गतेऽस्य घटिकामात्रे प्रतियामं च पथ्यभुक् ॥ ६७ ॥
नो चेदुद्दीपितो वह्निः क्षणाद्धातून्पचत्यतः।
दिनमेकं निषेव्यैनं त्याज्यान्यामण्डलात्त्यजेत् ॥ ६८ ॥
ततःपरं यथेष्टाशी द्वादशाब्दं सुखी भवेत्।
एकमेकं दिनं भुक्त्वा वर्षे वर्षे महारसम् ॥ ६९ ॥
वर्षादौ च त्यजेत्त्याज्यं द्वादशाब्दां जरां जयेत्।
एष वज्ररसो नाम क्षयपर्वतभेदनः ॥ ७० ॥

**अथ महावीरः**—निष्कौ द्वौ तुत्थभागस्य रसादेकं सुसंस्कृतात्।
निष्कं विषस्य द्वौ तीक्ष्णात्कर्षांशं गन्धमौक्तिकात् ॥ ७१ ॥
अग्निपर्णीहरिलताभृङ्गार्द्रसुरसारसैः।
मर्दितं लाङ्गलीकन्दप्रलिप्ते संपुटे पचेत् ॥ ७२ ॥
अर्धपादं च पोटल्यां काकिन्यौ द्वे विषस्य च।
लिहेन्मरिचचूर्णं च मधुना पोटलीसमम् ॥ ७३ ॥
क्षयग्रहण्यतीसारवह्निदौर्बल्यकासिनाम्।
पाण्डुगुल्मवतां श्रेष्ठो महावीरो हितो रसः ॥ ७४ ॥
अतिस्थूलस्य पूयासृक्कफानुद्वमतः क्षये।
न योजयेत्क्षीररसान्विरुद्धोपक्रमत्वतः ॥ ७५ ॥

**अथ पञ्चामृतपर्पटी**—सुवर्णं रजतं ताम्रं सत्त्वाभ्रं कान्तलोहकम्।
क्रमवृद्धमिदं सर्वं शाणेयौ नागवङ्गकौ ॥ ७६ ॥
द्रावयित्वैकतः सर्वं रेतयित्वा ततश्चरेत्।
पृथक्पलमितं गन्धं शिलालं विनिधाय च ॥ ७७ ॥

---

१ क. °ङ्कोलक°। २ ट. °न्पचेद्यतः। ३ घ. °व्यैवं त्या°। ४ घ. °मण्डलं त्यजे°। ५ घ. °दौ तत्त्यजे°। ६ ग. °शाब्दाजरां घ. °शाब्दं ज°। ७ च. पोटल्या। ८ घ. चेष्टो। ९ क. °रो रसो हितः। १० ज. संयो। ११ च. °ये क्षीर°। १२ क. °रुद्धक्रमतत्वतः।

सर्वं खल्वे विनिक्षिप्य मर्दयेदम्लवर्गतः ।
ताप्यं नीलाञ्जनं तालं शिलागन्धं च चूर्णितम् ॥ ७८ ॥
दत्वा दत्वा पुटेत्तावद्यावद्विंशतिवारकम् ।
लोहाद्विगुणसूतेन ततो द्विगुणगन्धतः ॥ ७९ ॥
विधाय कज्जलीं श्लक्ष्णां क्षिप्त्वा तां लोहपात्रके ।
द्रावयेद्बदराङ्गारैर्मृदुभिश्चाथ निक्षिपेत् ॥ ८० ॥
हेमादिपञ्चलोहानां भस्म चाथ विलोडयेत् ।
अथ तत्कदलीपत्रे गोमयस्थे विनिक्षिपेत् ॥ ८१ ॥
पत्रेणानेन संछाद्य चिपिटीं कुरु यत्नतः ।
तस्योपरि क्षिपेत्सद्यो गोमयं स्तोकमेव च ॥ ८२ ॥
स्वतः शीतं समाहृत्य पुनश्चूर्णं विधाय च ।
निक्षिपेदूर्ध्वदण्डायां पालिकायां ततःपरम् ॥ ८३ ॥
पूर्ववद्बदराङ्गारैर्मृदुभिर्द्रावयेच्छनैः ।
तुल्यालकशिलागन्धं पलार्धं विषभावितम् ॥ ८४ ॥
पूर्ववद्वटिकातुल्यं तस्मादल्पं मुहुर्मुहुः ।
जारयेत्पलिकामध्ये यथा दह्येन्न पर्पटी ॥ ८५ ॥
पलिकेति विनिर्दिष्टा स्नेहक्षेपणयन्त्रिका ।
जीर्णे तालादिके चूर्णे पटचूर्णं विधीयताम् ॥ ८६ ॥
पूतीकरञ्जषट्कोलव्याघ्रीसौभाञ्जनाङ्घ्रिभिः ।
एतैः पञ्चपलैः क्वाथं षोडशांशावशेषितम् ॥ ८७ ॥
तेन क्वाथेन संस्वेद्य शोषयेत्सप्तधा हि ताम् ।
विषतिन्दुफलोद्भूतै रसैर्निर्गुण्डिकारसैः ॥ ८८ ॥
विभाव्य पलिकामध्ये क्षिप्त्वा बदरवह्निना ।
ईषत्प्रस्वेदनं कृत्वा स्थापयेदतियत्नतः ॥ ८९ ॥
उक्ता भैरवनाथेन स्यात्पञ्चामृतपर्पटी ।
व्योषाज्यसहिता लीढा गुञ्जाबीजेन संमिता ॥ ९० ॥
सर्वलक्षणसंपूर्णं विनिहन्ति क्षयामयम् ।
श्वासं कासं विषूचीं च प्रमेहमुदरामयम् ॥ ९१ ॥

---

१ क. लिप्त्वा । २ क. °णान्येन । ३ ग. चिपिटी । ४ क. पटचूर्णी । ५ ग. °पूर्णा वि°।

अरोचकं च दुःसाध्यं प्रसेकं छर्दिहृद्द्रवम् ।
अधिकं गुदरोगं च शूलकुष्ठान्यशेषतः ॥ ९२ ॥
वातज्वरं च विड्बन्धं ग्रहणीं कफजान्मदान् ।
एकद्वंद्वत्रिदोषोत्थान्रोगानन्यान्महागदान् ॥ ९३ ॥
अग्निमान्द्यं विशेषेण रसोऽयं परमो मतः ।
एवं समूह्य दातव्यो रसोऽयं भिषगुत्तमैः ॥ ९४ ॥
तत्तद्रोगहरैर्योगैस्तत्तद्रोगानुपानतः ।
क्षयादिसर्वरोगघ्नी स्यात्पञ्चामृतपर्पटी ॥ ९५ ॥
तैलसर्षपबिल्वाम्लकारवेल्लकुसुम्भकम् ।
त्यजेत्पारापतं मांसं वृन्ताकं कुक्कुटं तथा ॥ ९६ ॥

अथ राजावर्तरसः—युक्तं गन्धकपिष्ट्याऽयस्तालकं गन्धमाक्षिकम् ।
युक्त्या तद्रसमतां नीतं तृष्णाछर्दिनिवारणम् ॥ ९७ ॥
राजावर्तो रसः शुल्बं मधुकं घृतपाचितम् ।
मध्वाज्यशर्करायुक्तं हन्ति सर्वान्मदात्ययान् ॥ ९८ ॥
राजावर्तरसः शुल्बं सूतगर्भे नियोजितम् ।
यष्टीमधुरसैर्घृष्टं घृतमध्ये विपाचितम् ॥ ९९ ॥
मध्वाज्यशर्करायुक्तं हन्तिसर्वान्मदात्ययान् ॥ १०० ॥ १६०८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये
राजयक्ष्मारुचिप्रसेकवान्तिहृद्रोगतृष्णामदात्यय-
प्रकरणं नाम चतुर्दशोऽध्यायः ॥ १४ ॥

---

## अथ पञ्चदशोऽध्यायः ।

### [ अथार्शसां चिकित्सनम् ]

अथार्शश्चिकित्सा—गुदस्य बहिरन्तर्वा जायन्ते चर्मकीलकाः ।
सर्वरोगकराः पुंसामर्शांसीति हि विश्रुताः ॥ १ ॥
रुधिरस्राविणस्तेषां पित्तजाः परिकीर्तिताः ।
वातजा निःसहोत्थाना उदावर्तं प्रकुर्वते ॥ २ ॥

---

१ ग. °हृद्रदम् । २ ग. °क्त्या सद्र° । ३ घ. °रकम् । ४ घ. °वर्तो र° । ५ घ. °रसे घृ° । ६ क. °आस्तु निरुत्था° ।

अथार्शःकुठारः—श्वयथुं श्लेष्मजाः कुर्युः सर्वं कुर्युस्त्रिदोषजाः।
शुद्धसूतं पलैकं तु द्विपलं शुद्धगन्धकम् ॥ ३ ॥
मृतं ताम्रं मृतं लोहं प्रत्येकं तु पलत्रयम्।
त्र्यूषणं लाङ्गली दन्ती पीलुकं चित्रकं तथा ॥ ४ ॥
प्रत्येकं द्विपलं योज्यं यवक्षारं च टङ्कणम्।
उभौ पञ्चपलौ योज्यौ सैन्धवं पलपञ्चकम् ॥ ५ ॥
द्वात्रिंशत्पलगोमूत्रं स्नुहीक्षीरं च तत्समम्।
मृद्वग्निना पचेत्स्थाल्यां सर्वं यावत्सुपिण्डितम् ॥ ६ ॥
माषद्वयं सदा खादेद्रसो ह्यर्शःकुठारकः।
तक्रेण दाडिमाम्भोभिः पक्वकन्देन वाऽथ तत् ॥ ७ ॥

अथ सर्वलोकाश्रयोरसः—वचाहिङ्गुविडङ्गानि सैन्धवं जीरनागरम्।
मरिचं पिप्पलीकुष्ठं पथ्यावह्न्यजमोदकम् ॥ ८ ॥
क्रमोत्तरगुणं चूर्णं सर्वेषां द्विगुणं गुडम्।
कर्षं चोष्णजलेनानुपिबेद्वातार्शसां जयेत् ॥ ९ ॥
मृतसूताभ्रहेमार्कतीक्ष्णमुण्डं सगन्धकम्।
मण्डूरं माक्षिकं तुल्यं मर्द्यं कन्याद्रवैर्दिनम् ॥ १० ॥
अन्धमूषागतं पाच्यं त्रिदिनं तुषवह्निना।
चूर्णितं सितया माषं खादेत्पित्तार्शसां जयेत् ॥ ११ ॥
मृतं लोहं चेन्द्रयवं शुण्ठीभल्लातचित्रकम्।
बिल्वमज्जाविडङ्गानि पथ्या तुल्यं विचूर्णयेत् ॥ १२ ॥
सर्वतुल्यं गुडं योज्यं कर्षं भुक्त्वाऽर्शसां जयेत्।
श्लेष्मार्शसः प्रशान्त्यर्थं देयमानन्दभैरवम् ॥ १३ ॥
मृतताम्रेण संतुल्यं देयं गुञ्जात्रयं हि तत्।
शुद्धं सूतं पलं गन्धं गन्धार्धं तालताप्यकम् ॥ १४ ॥
अमृतं रसकं चैव तालकार्धविभागिकम्।
एतेषां कज्जलीं कुर्याद्दृढं संमर्द्य वासरम् ॥ १५ ॥
त्रिदिनं मर्दयेच्चाथ दत्वा निम्बुजलं खलु।
वटीकृत्य विशोष्याथ काचकूप्यां निधापयेत् ॥ १६ ॥

---

१ घ. °सूतप°। २ घ. कर्षमुष्णजलैश्चानुपि°। ३ घ. °तीक्ष्णं मु°। ४ ख. आन्ध्रमू°। ग. अन्ध्रमू°। ५ घ. ठ. ड. मृतलो°। ६ ग. °कार्धं वि°। ७ ग. वटीं कृ°।

निष्कतुल्यार्कपत्रेण पिधायाऽऽस्यं प्रयत्नतः ।
सार्धाङ्गुलमितोत्सेधं मृत्स्नया तां विलिप्य च ॥ १७ ॥
ततो भाण्डतृतीयांशे सिकतापरिपूरिते ।
निधाय सिकतामूर्ध्नि सिकताभिः प्रपूरयेत् ॥ १८ ॥
रुद्ध्वाऽऽस्यं तदधो वह्निं ज्वालयेत्सार्धवासरम् ।
स्वाङ्गशीतलितं काचपुटादाकृष्य तं रसम् ॥ १९ ॥
पटचूर्णं विधायाथ ताम्रमभ्रं पलद्वयम् ।
पलार्धममृतं चैव मरिचं च चतुष्पलम् ॥
एकीकृत्य क्षिपेत्सर्वं नारिकेलकरण्डके ॥ २० ॥
साज्यो गुञ्जाद्विमानो हरति रसवरः सर्वलोकाश्रयोऽयं
वातश्लेष्मोत्थरोगान्गुदजनितगदं शोषपाण्ड्वामयं च ।
यक्ष्माणं वातशूलं ज्वरमपि निखिलं वह्निमान्द्यं च गुल्मं
तत्तद्रोगप्रयोगैः सकलगदचयं दीपनं तत्क्षणेन ॥ २१ ॥

**अथ मूलकुठारः**—अर्शोघ्नं सूरणं वक्ष्ये पुत्रक शृणु भद्रक ।
पिप्पली पिप्पलीमूलं वनसूरणचित्रकम् ॥ २२ ॥
मरिचं कण्टकारी च रक्तपुष्पी समांशकम् ।
पलमेकं पृथक्सर्वं श्लक्ष्णं दृषदि पेषयेत् ॥ २३ ॥
गजाजपशुमूत्रेषु शुभे भाण्डे विनिक्षिपेत् ।
मृद्वग्निना पचेत्सर्वं चूर्णशेषं यथा भवेत् ॥ २४ ॥
लोणत्रयं च तत्रैव पलमेकं तु निक्षिपेत् ।
अक्षप्रमाणवटकान्कुर्यादेवं पृथक्पृथक् ॥ २५ ॥
त्रिंशद्दिनानि मतिमानर्शोघ्नं दीपनं परम् ।
घृततक्रसमायुक्तं भोजनं संप्रदापयेत् ॥ २६ ॥
गन्धकं तारताम्रं च कृत्वा चैकत्र पिष्टिकाम् ।
तत्समं चाभ्रकं तीक्ष्णं गन्धकं पञ्चमांशकम् ॥ २७ ॥
विषं च षोडशांशेन द्वौ भागौ सूतकस्य च ।
एकीकृत्य प्रयत्नेन जम्बीरद्रवमर्दितम् ॥ २८ ॥
भाजने मृन्मये स्थाप्य वराक्वाथेन भावयेत् ।
दशमूलशतावर्योः क्वाथे पाच्यः क्रमेण हि ॥ २९ ॥

१ ग. निष्कं तु॰। २ ग. ॰यास्यप्र॰। ३ ग. ठ. ड. ॰त्सेधां मृ॰। ४ ग. विलिप्य। ५ क. ॰चकुप्याः कृष्य च तं। घ. ॰चकुप्या आकृ॰। ६ क. नालिकेरक॰। ७ घ. शोफपा॰। ८ ग. ॰तक्रं स॰। ९ ग. ॰शतः। १० ट. ॰वर्या क्वा॰।

अथोत्तार्य प्रयत्नेन वटिकां कारयेद्बुधः ।
गुञ्जात्रयप्रमाणेन गुदव्याधिं च शूलनुत् ॥ ३० ॥
वरनागं तथा व्योमसत्त्वं शुल्बं च तीक्ष्णकम् ।
सर्वमेकत्र विद्राव्य क्षिप्त्वाऽर्कं चाल्पमल्पकम् ॥ ३१ ॥
चालयेदनिशं यावत्तालकं त्रिगुणं खलु ।
ततस्तेन विमर्द्याथ पिष्टीं कुर्याद्रसेन हि ॥ ३२ ॥
ततो भल्लातकीवृक्षमूलस्थाने खनेच्च ताम् ।
मासादाकृष्य तां पिष्टिं गव्यदुग्धे विनिक्षिपेत् ॥ ३३ ॥
ततो भल्लातकीतैलं हृतं पातालयन्त्रतः ।
आयसे भाजने स्निग्धे पिष्टिकां विनिवेश्य च ॥ ३४ ॥
प्रस्थमात्रं हि तत्तैलं जारयेदतियत्नतः ।
तत्तैलभावितैर्गन्धैः पुटित्वा भस्मतां व्रजेत् ॥ ३५ ॥
ततः कार्तिकमासोत्थकोरण्टदलजै रसैः ।
रसं संमर्द्य संमर्द्य घर्मे संस्थाप्य मारयेत् ॥ ३६ ॥
तद्भस्म मेलयेत्पूर्वभस्मना समभागिकम् ।
वनसूरणनिर्गुण्डी महाराष्ट्रीभकण्टिका ॥ ३७ ॥
वज्रवल्ली शिखी चैषां रसैः पिष्ट्वा विशोषयेत् ।
त्रिवारं मार्कवद्रावैर्द्रावयित्वा विशोषयेत् ॥ ३८ ॥
चूर्णीकृत्वा प्रयत्नेन क्षिपेत्कापि करण्डके ॥ ३९ ॥
सोऽयं मूलकुठारको रसवरो दीप्याग्निवेल्लोत्तमा-
संयुक्तः सघृतश्च वल्लतुलितः संसेवितो नाशयेत् ।
अर्शांस्याननानासिकाक्षिगुदजान्यत्युग्रपीडानि च
प्लीहानं ग्रहणीं च गुल्मयकृती मान्द्यं च कुष्ठामयान् ॥ ४० ॥

**अथ महोदयप्रत्ययसारः**—रसग्रस्तसमुद्गीर्णगन्धकस्य पलत्रयम् ।
मृतसूताभ्रताम्रायः कर्षं कर्षं पृथक्पृथक् ॥ ४१ ॥
पलं हिङ्गुलचूर्णस्य माक्षिकस्य पलत्रयम् ।
पलं कम्पिल्लकस्यापि विषस्यार्धपलं तथा ॥ ४२ ॥

१ घ. ङ. °लजित्। २ च. चारये°। ३ ग. °कीवृक्षमूलान्तस्थां ख°। क. °कीमूलं वृक्षस्था°। च. °कीमूलं वृक्षान्तस्थां ख°। ४ घ. °कां तां निवे°। ५ क. °तैलं भा°। ६ क. °मासे च को°। ७ घ. °का-णिका। ८ क. °वैर्भावयि°। ९ घ. °त्वाऽथ यत्नेन क्षिपेदन्तःक°। १० ग. °पेद्न्तक°। ११ ग. °स्त्रि-वल्लो°। १२ घ. °ल्लोपमा।

सप्ताहं मर्दयेत्सर्वं दत्वा चूर्णोदकं मुहुः ।
ततस्तद्गोलकं कृत्वा सप्ताहं चाऽऽतपे क्षिपेत् ॥ ४३ ॥
गुडचूर्णं शिलाचूर्णं लिम्पेदङ्गुलिकाघनम् ।
त्रिपलं गन्धकं दत्वा क्रौञ्च्यामथ च गोलकम् ॥ ४४ ॥
गोलकस्योपरिष्टाच्च क्षिपेत्तालपलत्रयम् ।
संरुध्यातिप्रयत्नेन दद्याद्गजपुटं खलु ॥ ४५ ॥
स्वाङ्गशीतलमाहृत्य गोलकं लेपनैः सह ।
विचूर्ण्य सप्तवारं हि विषतिन्दुफलोद्भवैः ॥ ४६ ॥
द्रवैस्तथाऽऽतपे शुष्कं क्षिपेद्रम्ये करण्डके ।
त्रिंशदंशेन वैक्रान्तभस्म तस्मिन्विनिक्षिपेत् ॥ ४७ ॥
अयं हि नन्दीश्वरसंप्रदिष्टो रसो विशिष्टः खलु रोगहन्ता ।
निःशेषरोगेष्वहतप्रतापो महोदयप्रत्ययसारनामा ॥ ४८ ॥
हन्यात्सर्वगुदामयान्क्षयगदं कुष्ठं च मन्दाग्नितां
शूलाध्मानगदं कफं श्वसनतामुन्मादकापस्मृती ।
सर्वा वातरुजो महाज्वरगदान्नानाप्रकारांस्तथा
वातश्लेष्मभवं महामयचयं दुष्टग्रहण्यामयम् ॥ ४९ ॥

**अथ कनकसुन्दरः**—स्याद्रसं धौतमाक्षीकं कान्ताभ्रं नागहाटकम् ।
पृथ्वीभेटेन संतुल्यं सर्वतुल्यं च गन्धकम् ॥ ५० ॥
दत्वा विद्याधरे यन्त्रे पुटेदारण्यकोत्पलैः ।
स्वाङ्गशीतलमुद्धृत्य त्र्यूषणेन विमिश्रयेत् ॥ ५१ ॥
अर्शोव्याधौ कटीशूले चक्षुःशूले च दारुणे ।
संनिपाते क्षये श्वासे कासे मन्दानले ज्वरे ॥ ५२ ॥
कर्णशूले शिरःशूले दन्तशूले प्रयोजयेत् ।
पीनसे प्लीह्नि हृच्छूले ग्रन्थिवाते च दारुणे ॥ ५३ ॥
एकाङ्गे वा धनुर्वाते कम्पवाते च मूर्छिते ।
ज्वरांश्च विषमान्सर्वान्हन्ति रोगाननेकधा ॥ ५४ ॥
सेवितः पथ्ययोगेन रसः कनकसुन्दरः ।
गुञ्जामात्रं ददीतास्य यथायुक्तानुपानतः ॥ ५५ ॥

---

१ घ. लिपेद । २ घ. °रयान्तरे शु° । ३ घ. °प्रभावो म° । ४ ग. °भटरसं तु° । ५ ग. तच्छूले । ६ ग. °युक्त्यानु° ।

घृतेन संयुतो[1] वाते मधुना पैत्तिके ज्वरे ।
पिप्पल्या श्लैष्मिके देयं पित्तोद्भूते च चन्दनम् ॥ ५६ ॥
तैक्रेण[2] श्लेष्मवातोत्थे वातपित्ते घृतान्वितम् ।
श्लेष्मपित्ते चाऽऽर्द्रकेण निर्गुण्ड्या सांनिपातिके[3] ॥ ५७ ॥
फलत्रयेण शूलेषु विषमेषु ज्वरेष्वथ[4] ।
आर्द्रकेणाथवा दद्याद्वह्निमान्द्ये विशेषतः ॥ ५८ ॥
अभिष्यन्दे[5] शिरःशूले गायत्रीबोलसंयुतम् ।
पक्षिमांससमायुक्तं कफवाते च मूर्छिते[6] ॥ ५९ ॥
एकाङ्गे च धनुर्वाते क्षीरयुक्तं च पीनसे ।
पाण्डुरोगे क्षये कासे मरिचाज्यैश्च कामले ॥ ६० ॥
अजमोदा[7]विडङ्गैश्च नाभिशूलेऽग्निमान्द्यजित् ।
रूक्षज्वरेऽरुचौ देयः कदलीफलसंयुतः ॥
बोलेनार्धकटीशूले भाषितं नागबोधिना ॥ ६१ ॥

**अथ तीक्ष्णमुखः**—नागं पारदगन्धकं त्रिलवणं वार्यर्कजं[8] मेलये-
देकैकं च पलं पलं त्रयमतः पञ्च क्रमान्मर्दयेत् ।
सर्वं तद्दिवसत्रयं तदनु तद्दत्वा पुटं भावनाः
कुर्यात्सत्रिफ[9]लाग्निवेतसरसैः[10] पञ्चाधिका विंशतिः ॥ ६२ ॥
पश्चैतत्क्रमशस्ततो गुडभवैर्दत्तोऽस्य वल्लो जलै-
र्हन्त्यर्शांस्यखिलानि सूरणघृतैस्तस्यान्नमस्मिन्हितम् ।
अर्केशः परिवर्ज्यतामिति मुनिः श्रीवासुदेवोऽवद-
त्कूष्माण्डीफलमाषपायसमतिव्यायाममर्कातपम् ॥ ६३ ॥
रसेन्द्रहेमार्कवडालगोलसुरायसं लोहमलाभ्रगन्धाः ।
ताप्यं च कन्यारसमर्दितोऽयं पक्वः पुटेत्तीक्ष्णमुखोऽर्शसां स्यात् ॥६४॥

**अथार्शःकुठारः**—श्रेष्ठादन्त्यग्नियु[11]ग्मत्रिकटुकहलिनीपीलु[12]कुम्भं विपक्वं
प्रस्थे मूत्रस्य सस्नुक्पयसि रसपलं द्वे पले गन्धकस्य ।
लोहस्य त्रीणि ताम्रात्कुडवमथ रजःक्षारयोश्चापि पञ्च
क्षिप्त्वा स्थाल्यां पचेत्तु [13]ज्वलति दहनतश्चूर्णमर्शःकुठारः॥६५॥

**अथ त्रैलोक्यतिलकः**—[14]शुद्धकृष्णाभ्रकं सत्त्वं शोधितं काचटङ्कणम् ।
रेतयित्वा रजः कृत्वा भर्जयित्वा घृतेन तत् ॥ ६६ ॥

---

१ च. संयुते । २ च. तैलेन । ३ च. संनिपातके । ४ क. ठ. °ष्वपि । ५ च. °ष्यन्दाशि° । ६ ज. मूर्छताम् । ७ घ. साजमो° । ८ क. चार्धाजकं । ९ च. °पलत्र° । १०ज. ड. °फलाम्लवे° । ११ च. °युग्मं त्रि° । १२ ज. °लुपर्णीविपक्के प्र° । १३ ग. ज्वरयुतिद° । १४ ग. ड. वज्रक° ।

अष्टांशैंसस्यकोपेतं पुटेद्वारत्रयं ततः ।
त्रिवारं त्रपवर्तेन लुङ्गस्वरसयोगिना ॥ ६७ ॥
चतुर्वारं च वर्षाभूवासामत्स्याक्षिकारसैः ।
गुग्गुलुत्रिफलाकाथैस्त्रिंशद्वाराणि यत्नतः ॥ ६८ ॥
तुल्यांशरसगन्धोत्थकज्जल्याऽष्टांशभागया ।
पुटेत्पंञ्चाशतं वारान्मर्दयेच्च पुटे पुटे ॥ ६९ ॥
शोधितं रेतितं कान्तं सँत्त्वं च घृतमर्दितम् ।
पुटेदष्टांशदरदैः संयुतं लकुचाम्बुना ॥ ७० ॥
दशवारं तथा सम्यक्तारं शुद्धं मनोह्वया ।
तथा विंशतिवाराणि बलिना मीनदृग्रसैः ॥ ७१ ॥
दशवाराणि ताप्येन कृष्णगोघृतयोगिना ।
उभयं समभागं तत्पुटेन्निर्गुण्डिकारसैः ॥ ७२ ॥
रसगन्धोत्थकज्जल्या दशवारं पुटेत्पुनः ।
तस्मिन्नष्टांशभागेन क्षिपेद्वैक्रान्तभस्मकम् ॥ ७३ ॥
राजावर्तकलांशेन समभागेन पर्पटी ।
तत्सर्वं परिमर्द्याथ भावयित्वाऽऽर्द्रकाम्बुना ॥ ७४ ॥
गुडूच्याः स्वरसेनापि भूकदम्बरसेन वा ।
भृङ्गराजरसेनापि चित्रमूलरसेन च ॥ ७५ ॥
व्योषशाकिनीकन्दैर्भूयोऽप्यार्द्रद्रवेण च ।
पटचूँर्णमतः कृत्वा क्षिपेच्छुद्धकरण्डके ॥ ७६ ॥
त्रैलोक्यतिलकः सोऽयं ख्यातः सर्वरसोत्तमः ।
सर्वव्याधिहरः श्रीमाञ्शंभुना परिकीर्तितः ॥ ७७ ॥
उदावर्तं च विड्बन्धं व्यथां च जठरोद्भवाम् ।
लोहलं मन्दबुद्धित्वं शूँलित्वमपि वन्ध्यताम् ॥ ७८ ॥
सूतिरोगानशेषांश्च शूलं नानाविधं तथा ।
परिणामाख्यशूलं च तथा भिन्द्यात्समुत्कटम् ॥ ७९ ॥
रक्तगुल्मं च नारीणां रजःशूलं च दुःसहम् ।
अनुपानं च पथ्यं च तत्तद्रोगानुरूपतः ॥ ८० ॥

---

१ क. ठ. ड. अष्टादशस्य तोये तु पु°। घ. अष्टादशोतुकोपेतं। २ ङ. °शशस्य°। ३ च. °त्पञ्चश°। ४ क. ठ. तीक्ष्णं च घृतभर्जितम्। ५ ग. कृष्णागो°। ६ घ. °वर्तं क°। ७ घ. °चूर्णं ततः। ८ ग. शूलत्व°।

**अथार्शःकुठारावलेहः**—कुसुम्भमृदुपत्राणि काञ्जिकेनैव पाचयेत् ।
शाकवद्भक्षयेन्नित्यमर्शोरोगप्रशान्तये ॥ ८१ ॥
देवदाल्याश्च बीजानि सैन्धवेन सुचूर्णितम् ।
आरनालेन लेपोऽयं मूलरोगनिकृन्तनः ॥ ८२ ॥
काञ्चनीकुसुमं चूर्ण्यं शङ्खचूर्णं मनःशिलाम् ।
गजपिप्पलिकातोयैर्लेपो ह्यर्शःकुठारकः ॥ ८३ ॥
देवदाल्याः कषायेण ह्यर्शोघ्नं शौचमाचरेत् ।
गुदनिःसरणं चाथ शान्तिमायाति नान्यथा ॥ ८४ ॥
आरनालेन संपिष्टा सबीजा कटुतुम्बिका ।
सगुडा हन्ति लेपेन दुर्नामानि समूलतः ॥ ८५ ॥
पीलुतैलेन संलिप्ता वर्तिका गुदमध्यगा ।
घातयत्यर्शसां शीघ्रं संकलां वेदनां क्वचित् ॥ ८६ ॥
अर्कक्षीरं स्नुहीकाण्डं कटुकालाबुपत्रकम् ।
करञ्जं छागमूत्रेण लेपः स्नाव्यर्शसां हितः ।
शिग्रुमूलार्कजैः पत्रैर्लेपनं हितमर्शसाम् ॥ ८७ ॥ १६२५ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चयेऽर्शोधिकारो नाम पञ्चदशोऽध्यायः ॥ १५ ॥

---

## अथ षोडशोऽध्यायः ।

### [ अथोदावर्तादिचिकित्सनम् । ]

**अथोदावर्तचिकित्सा**—रूक्षैः कोद्रवजीर्णमुद्गचणकैः क्रुद्धोऽनिलोऽधो वहन्रुद्ध्वा वर्त्म मलं विशोष्य कुरुते विण्मूत्रसङ्गं ततः ।
हृत्पृष्ठोदरबस्तिमस्तकरुजः सश्वासकासं ज्वरं
गच्छन्नूर्ध्वमसौ हि नूनमनिशं कोपादुदावर्तयेत् ॥ १ ॥

**अथोदावर्तहरं घृतम्**—कङ्कुष्ठहिङ्गुसिन्धूत्थत्रिवृद्दन्तीवचाभयाः ।
चित्रकस्य तु मूलं च चूर्णीकृत्य पचेद्घृतम् ॥ २ ॥

---

१ ख. निष्कार्धं भक्ष° । २ क. चूर्ण्यं । ग. चूर्णं । ३ क. ठ. शस्त्रचूर्णं । क. ड. लोहचूर्णं । ४ ख. °शिला । ५ ख. °लेंपो ह्य° । ६ घ. चापि शान्ति प्राप्नोति । ७ क. समूत्रतः ८ ग. सा लिप्त्वा । ९ घ. पात° । १० घ. न वली वे° । ञ. न वलीवेदना । ११ ग. °रञ्जच्छा° । १२ ख. °लोध्वोंहरन्रु । १३ घ. वर्तम° । ङ. वर्त्यम° । १४ ट. °मकुशः को° । १५ ङ. °र्तकृत् । १६ घ. कल्कीकृत्य । १७ ज. घृतं पचेत् ।

चतुर्गुणे गवां क्षीरे युक्तं स्नुक्क्षीरमात्रया ।
उदावर्तोदरानाहान्हन्ति पानेन सर्वथा ॥ ३ ॥

**अथातिसारचिकित्सा**—अत्यम्बुपानतिलपिष्टविरूढरूक्ष-
शुष्कामिषाध्यशनबद्धमलग्रहाद्यैः ।
क्रुद्धोऽनिलोऽतिसरणाय च कल्पितोऽग्निं
हत्वा मलं शिथिलयन्नपि तोयधातून् ॥ ४ ॥

**अथ दर्दुररसः**—सुश्लक्ष्णतीक्ष्णचूर्णं तु रसेन्द्रसमभागिकम् ।
काञ्चनाररसैर्घृष्ट्वा सर्वातीसारनाशनम् ॥ ५ ॥
पिष्टः समेन तीक्ष्णेन काञ्चनाराम्बुमर्दितः ।
पुटपाकोऽतिसारघ्नः सूतोऽयं दर्दुराह्वयः ॥ ६ ॥

**अथाऽऽनन्दभैरवः**—हिङ्गुलं वत्सनाभं च मरिचं टङ्कणं कणा ।
मर्दयेत्समभागं च रसो ह्यानन्दभैरवः ॥ ७ ॥
गुञ्जैकां वाऽर्धगुञ्जां वा बलं ज्ञात्वा प्रदापयेत् ।
मधुना लेहयेच्चानु कुटजस्य फलं त्वचम् ॥ ८ ॥
चूर्णितं कर्षमात्रं तु त्रिदोषोत्थातिसारजित् ।
दध्यन्नं दापयेत्पथ्यं गवाज्यं तक्रमेव वा ॥ ९ ॥
पिपासायां जलं सीतं विजया च हिता निशा ॥ १० ॥

**अथ सुधारसः**—पृथक्पलिकगन्धाश्मसूतसंजातकज्जलीम् ।
प्रद्राव्य निक्षिपेद्व्योम पलिकं गतचन्द्रिकम् ॥ ११ ॥
काष्ठेनाऽऽलोड्य तत्सर्वं क्षिपेत्कुटजपत्रके ।
पुनः संचूर्ण्य यत्नेन भावयेत्तदनन्तरम् ॥ १२ ॥
बालतिन्दुफलद्रावैः क्षीरैरौदुम्बरैस्तथा ।
अरलुत्वग्रसैश्चापि दुग्धिनीस्वरसैस्तथा ॥ १३ ॥
पुटपाकस्य बालस्य दाडिमस्य रसैः शुभैः ।
कृष्णकाम्बोजिकामूलरसैः कुटजवल्कलैः ॥ १४ ॥
तुल्यांशविश्वगान्धारीचूर्णं द्विपलिकं क्षिपेत् ।
मुस्तावत्सकदीप्याग्निमोचसारं सजीरकम् ॥ १५ ॥

---

१ ङ. °गुणं ग° । क. ठ. °गुणं गवां क्षीरैर्युक्तं स्नुक्पलमा° । २ ङ. °वैदा । ३ क. ठ. °शुष्कैर्विषा° । ४ ङ. ड. कल्पतेऽग्निं । ५ ङ. °धातुम् । ६ ङ. °मचारितम् । ७ ङ. °घृष्टं स° । ८ घ. °टपक्वोऽति° । ९ क. °भागेन र° । १० घ. ङ. वा द्विगु° । ११ च. पलं । ङ. फलत्व° । १२ ख. निशि । १३ घ. क्षीरकोदु° । १४ ङ. पुटपक्वस्य । १५ घ. °ल्यांशं वि° । १६ घ. °श्वगन्धा° । १७ घ. मुस्तव° ।

वत्सनाभं च कर्षांशं प्रत्येकं तत्र निक्षिपेत्।
विचूर्ण्य भावयेद्भूयः शुण्ठीकाथेन सप्तधा ॥ १६ ॥
इत्थं सिद्धो रसः पिष्टः करण्डे विनिवेशयेत्।
सुधासार इति ख्यातः सुधासारसमद्युतिः ॥ १७ ॥
दीपनः पाचनो ग्राही हृद्यो रुचिकरस्तथा।
दोषत्रयातिसारं च दुर्जयं भेषजान्तरैः ॥ १८ ॥
आमां चैवाऽऽमरक्तं च ज्वरातीसारमेव च।
सातिसारां विषूचीं च प्रतिबध्नाति तत्क्षणात् ॥ १९ ॥

**अथ सुधासाररसः**—मान्यमानव्यतिक्रान्तिरिव पुष्पफलोदयम्।
पिष्टविश्वाब्दकल्केन विधाय खलु चक्रिकाम् ॥ २० ॥
निक्षिपेत्स्वेदनीयन्त्रे पक्त्वाऽर्धघटिकावधि।
आकृष्य तज्जलैरेवं संप्रमर्द्य हरेद्रसम् ॥ २१ ॥
सुधासाररसं तत्र क्षिप्त्वा धान्यकसंमितम्।
पूर्वोदितेषु रोगेषु प्रददीत भिषग्वरः ॥ २२ ॥
गोतक्रेणाजदध्ना वा पथ्यं देयं हितं मितम्।
बालरम्भाफलं गुर्वीफलं बिल्वफलं तथा ॥
आम्रपेशी च मधुकं वृन्ताकं च प्रशस्यते ॥ २३ ॥
सर्वातिसारं ग्रहणीं च हिक्कां मन्दाग्निमानाहमरोचकं च।
निहन्ति सद्यो विहितामपाके द्वित्रिप्रयोगेण रसोत्तमोऽयम् ॥ २४ ॥
साम्बुस्थालीमुखाबद्धे वस्त्रे पाक्यं निधाय च।
पिधाय पच्यते यत्र स्वेदनीयन्त्रमुच्यते ॥२५॥ इदमेव कुन्दयन्त्रम्।

**अथ लोकेश्वरः**—द्वौ भागौ गन्धकस्याष्टौ शङ्खचूर्णस्य योजयेत्।
एकमेव रसस्यांशमर्कक्षीरेण मर्दयेत् ॥ २६ ॥
चित्रकस्य द्रवेणैव शोषयित्वा पुनः पुनः।
एकीकृत्य रसेनाथ क्षारं दत्वा तदर्धकम् ॥ २७ ॥
अर्कक्षीरेण कुर्वीत गोलकानथ शोषयेत्।
निरुध्य चूर्णलिप्तेऽथ भाण्डे दद्यात्पुटं तथा ॥ २८ ॥

---

१ ग. ङ. °धारसस°। २ ङ. दुर्धरं। ३ च. आमं। ४ घ. मान्यामान्यव्य°। ५ ग. °क्रान्तीरि°। ६ ङ. पुण्यफ°। ७ च. पिधाय। ८ ग. °क्रिकम्। ९ ग. °दनाय°। १० घ. °मर्याह°। ११ ग. कुन्दय°। ङ. कम्बूय°। ज. कन्दुकाय°। ञ. तिन्दुकय°। १२ क. ततः।

लोकनाथरसो ह्येष ग्रहणीरोगकृन्तनः ॥ २९ ॥
गुञ्जाचतुष्टयं चास्य मरीचाज्यसमन्वितम् ।
ददीत दधिभक्तं च पथ्यं लोकेश्वरे तथा ॥ ३० ॥

**अथ लोकनाथः**—मृतपारदभागैकं चत्वारः शुद्धगन्धकात् ।
यामं च मर्दयेत्खल्वे तेन पूर्या वराटकाः ॥ ३१ ॥
टङ्कणं तु गवां क्षीरैः पिष्ट्वा तेन मुखं लिपेत् ।
वराटानां प्रयत्नेन रुद्ध्वा भाण्डे पुटे पचेत् ॥ ३२ ॥
स्वाङ्गशीतं समुद्धृत्य ततश्चूर्ण्या वराटकाः ।
लोकनाथरसो नाम्ना क्षौद्रैर्गुञ्जाचतुष्टयम् ॥ ३३ ॥
नागरातिविषामुस्तादेवदारुवचान्वितम् ।
कषायमनुपानं स्याद्वातातीसारनाशनः ॥ ३४ ॥

**अथ षण्निष्कतैलम्**—षण्निष्कं तिलतैलस्य निष्कं जम्बीरजं रसम् ।
लवणं पञ्चगुञ्जं च अङ्गुल्या मर्दयेद्दृढम् ॥
आमवातातिसारघ्नं लिहेत्पथ्यं च पूर्ववत् ॥ ३५ ॥

**अथ नागसुन्दरः**—नागभस्मरसव्योमगन्धैरर्धपलोन्मितैः ।
कुर्वीत कज्जलीं श्लक्ष्णां प्रक्षिपेत्तदनन्तरम् ॥ ३६ ॥
द्विपलोन्मितरालायां द्रुतायां परिमिश्रिताम् ॥ ३७ ॥
भृष्टैर्यक्षाक्षसिन्धूत्थवचाव्योषद्विजीरकैः ।
सपथ्याविजयादिव्यैस्तुल्यांशैरवचूर्णितैः ॥ ३८ ॥
मेलयेत्प्राक्तनं कल्कं भावयेत्तदनन्तरम् ।
महानिम्बत्वचासारैः काम्बोजीमूलजद्रवैः ॥ ३९ ॥
रसैर्नागबलायाश्च गुडूच्याश्च त्रिधा त्रिधा ।
ततश्च गुटिका कार्या बदरास्थिप्रमाणतः ॥ ४० ॥
हन्यादेव हि नागसुन्दररसो वल्लोन्मितः सेवितो ।
नानातीसरणामयं गुदपरिभ्रंशं तथा बिम्बिशम् ॥ ४१ ॥

**अथ ग्रहणीनिदानम्**—मलं संगृह्य संगृह्य कदाचिद्यदि रेचयेत् ।
अरुचिः श्वयथुर्मान्द्यं ग्रहणीरोगलक्षणम् ॥ ४२ ॥

**अथ ग्रहण्यां वज्रकपाटः**—मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणम् ।
वचा जया समं सर्वं जयन्तीभृङ्गजद्रवैः ॥ ४३ ॥

---

१ ग. ङ. °नाथो र°। २ घ. ङ. यथा। ३ घ. यामैकं म°। ४ घ. °राटिका। ५ घ. °श्चर्ण्य वराटिकाः। ६ घ. क्षौद्रे गु°। ७ ग. °शनम्। ८ क. दत्तायां। ९ च. °श्रिता। १० च. मृष्टैर्य°। ११ घ. °यादीप्यैस्तु°। १२ घ. °त्वचः सा°। १३ क. °चिदतिरे°। १४ घ. मृतं सू°। १५ क. °ङ्गजैर्द्रवैः°।

सजम्बीरैर्द्व्यहं मर्द्यं[1] शोषयेत्तं[2] च गोलकम् ।
मन्दवह्नौ शनैः स्वेद्यं यामार्धं लोहपात्रके ॥ ४४ ॥
रससाम्ये[3] प्रतिविषा देया[4] मोचरसस्तथा ।
भावयेद्विजयाद्रावैः शोष्यं पेष्यं[5] च सप्तधा ॥
रसो वज्रकपाटोऽयं निष्कार्धं मधुना लिहेत् ॥ ४५ ॥

**अथायमेवाग्निकुमारः**—वह्निशुण्ठी बिडं बिल्वं[6] लवणं पेषयेत्समम् ।
पिबेदुष्णाम्भसा चानु वातोत्थां ग्रहणीं जयेत् ॥ ४६ ॥
दग्धां कपर्दिकां पिष्ट्वा त्र्यूषणं टङ्कणं विषम् ।
गन्धकं शुद्धसूतं[7] च तुल्यं जम्बीरजैर्द्रवैः ॥ ४७ ॥
मर्दयेद्भक्षयेन्माषं मरिचाज्यं लिहेदनु ।
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम् ॥ ४८ ॥

**अथ कनकसुन्दरः**—दग्धशम्बूकसिन्धूत्थं[8] तुल्यं[9] क्षौद्रेण[10] लेहयेत् ।
निष्कैकैकं निहन्त्याशु ग्रहणीरोगमुत्कटम् ॥ ४९ ॥
हिङ्गुलं मरिचं गन्धं पिप्पली टङ्कणं विषम् ।
कनकस्य च बीजानि समांशं विजयाद्रवैः ॥ ५० ॥
मर्दयेद्याममात्रं तु चणमात्रं वटीकृतम् ।
भक्षयेद्ग्रहणीं हन्ति रसः कनकसुन्दरः ॥ ५१ ॥
अग्निमान्द्यं ज्वरं तीव्रमतिसारं च नाशयेत् ।
दध्यन्नं दापयेत्पथ्यं गव्याजं[11] तक्रमेव वा ॥ ५२ ॥

## अथ चण्डसंग्रहगदैककपाटः* ।

रसाभ्रगन्धाः क्रमवृद्धभागा जयारसेन त्रिदिनं विमर्द्याः ।
गद्याणकार्धं मधुना समेतं ददीत पथ्यं दधिभक्तकं[12] च ॥ ५३ ॥
सौवर्चलं जीरकै[13]धान्ययुग्मं जयायवानीकणनागरं च ।
कपित्थसारेण समं प्रगृह्य ददीत तक्रं निशि तीव्र पित्ते ॥ ५४ ॥
गद्याणमात्रं मधुखण्डयुक्तं तक्रेण[14] युक्तं त्वरुचिप्रशान्त्यै ।
वातप्रधाने च कफप्रधाने रात्रौ कषायं कुटजस्य दद्यात् ॥ ५५ ॥

---

* ङ. ग्रहणीकपाटः ।

---

१ क. मर्द्यं । २ ङ. °येत्तच्च गो° । ३ क. °साम्यप्र° । ङ. °साम्यं प्र° । ४ ङ. देयो मोचरसैस्त° । ५ घ. शोष्यपे° । ६ ग. बिल्वल° । ७ ग. °द्धतालं च । ८ घ. दग्धं श° । ९ घ. तुल्यक्षौ° । १० क. ठ. तक्रेण । ११ ग. ठ. गवाजं । १२ घ. °धितक्रभक्तम् । १३ क. °कयुग्मधान्यं ज° । १४ ङ. गुडेन ।

क्रशान्वजाजीद्वयमाक्षिकेण कटुत्रयेणापि युतं त्वनुष्णम् ।
शार्ङ्गेरिकाजीरकयुग्मधान्यं दुग्धेन्दुशाकाय ददीत दध्ना ॥ ५६ ॥
हिङ्गुलोत्थितमहेश्वरबीजं पातयन्नविधिना हरणीयम् ।
गन्धटङ्कणमृताभ्रकतुल्यं कोकिलाक्षमथ चाऽऽयसखल्वे ॥ ५७ ॥
मर्दनीयमभिधारणयुक्ते धूमहीनदहनोपरिसंस्थे ।
यावदेष जलशोषणदक्षो जीरकार्द्रकयुतेन स वल्लः ॥ ५८ ॥
संग्रहज्वरमतिस्रुतिगुल्मानर्शसां च विनिहन्ति समूहम् ।
वासुदेवकथितो रसराजश्चण्डसंग्रहगदैककपाटः ॥ ५९ ॥

**अथ लघुसिद्धाभ्रकः**—समांशं रसगन्धाभ्रदरदं च विशोधितम् ।
लोहखल्वे विनिक्षिप्य गवाज्येन समन्वितम् ॥ ६० ॥
मर्दकेनापि लोहेन मर्दयेद्दिवसद्वयम् ।
द्रोणीचुल्ल्यां न्यसेत्खल्वे साङ्गारायां प्रयत्नतः ॥ ६१ ॥
इति सिद्धो रसेन्द्रोऽयं लघुसिद्धाभ्रको मतः ।
वल्लतुल्यो रसो जीरवारिणा सहितः *प्रगे ॥ ६२ ॥
पीतो हरति वेगेन ग्रहणीमतिदुर्धराम् ।
अतिसारं महाघोरं सातिसारं ज्वरं तथा ॥ ६३ ॥
पाचनो दीपनो हृद्यो गात्रे लाघवकारकः ।
नागार्जुनेन कथितः सद्यः प्रत्ययकारकः ॥ ६४ ॥

**अथ सर्वारोग्यवटी**—रसं पलमितं तुल्यं शुद्धनागेन संयुतम् ।
द्रावयित्वाऽऽयसे पात्रे सतैले निक्षिपेत्क्षितौ ॥ ६५ ॥
ततो घृते विनिक्षिप्य गन्धके तद्विलोड्य च ।
पुनरायसपात्रे तत्क्षिप्त्वा मृद्वाग्न्य निक्षिपेत् ॥ ६६ ॥
तत्तुल्यं जारयेत्तालं पुनः संचूर्ण्य पूर्ववत् ।
तत्तुल्यां जारयेत्सम्यक्कुनटीं परिशोधिताम् ॥ ६७ ॥
तत्तुल्यं चूर्णितं तस्मिन्क्षिपेन्नागं निरुत्थकम् ।
तावदेव मृतं ताप्यं सर्वमन्यच्च तत्समम् ॥ ६८ ॥

* क. प्रभाते ।

१ ङ. °णातियुतं त्वनुकम् । २ घ. °ज्ञारि° । ३ घ. ठ. ङ. दुग्धेन्दु° । ङ. दुग्धं च शा° । ४ ङ. °हुलस्थित° । ५ च. °तुल्यकं को° । ङ. ६ °लाल्यमथवाऽऽय° । ७ ङ. जीरकस्य सलिलेन । ८ ङ. °प्रहे न्त्र° । ९ ङ. °मांशर° । १० ङ. °शोधित° । ११ घ. °सत्रय° । १२ ग. गात्रला° । १३ घ. द्रुते । १४ घ. °णिते त° । १५ ग. समं ।

तीक्ष्णायः खर्परं व्योम हिङ्गुलं च शिलाजतु ।
पृथक्कर्षांशमानेन षट्कोलं कटूफलं मिशी ॥ ६९ ॥
दीप्यकं च चतुर्जातं रेणुकोशीरवेल्लकम् ।
तुम्बरुं भार्ङ्गिकां रास्नां कङ्कोलं चोरपुष्करम् ॥ ७० ॥
रिङ्गणीं चिरतिक्तं च बीजान्युन्मत्तकस्य च ।
पलद्वयं च लाङ्गल्याः सर्वेषां द्वादशांशकम् ॥ ७१ ॥
वत्सनाभं सितं भूरि विनिक्षिप्य ततः परम् ।
त्रिफलानां दशाङ्घ्रीणां कषायेण ततः परम् ॥ ७२ ॥
जयन्त्यार्द्रकवासानां मार्कवस्य रसैस्तथा ।
भावयित्वा च कर्तव्या वटकाश्चणकोन्मिताः ॥ ७३ ॥
एकैका वटिका सेव्या कुर्यात्तीव्रतरां क्षुधाम् ।
विषूचीं सर्वतो हिक्कां सेव्यं स्वादु च शीतलम् ॥ ७४ ॥
सामां च ग्रहणीं सदाङ्गतुदनं शोषोत्कटं पाण्डुता-
मार्तिं वातकफत्रिदोषजनितां शूलं च गुल्मामयम् ।
हिक्काध्मानविषूचिकां च कसनं श्वासार्शसां विद्रधिं
सर्वारोग्यवटी क्षणाद्विजयते रोगांस्तथाऽन्यानपि ॥ ७५ ॥

**अथ ग्रहणीगजकेसरी**—रसगन्धकयोः कृत्वा कज्जलीं तुल्यभागयोः ।
द्रावयित्वाऽऽयसे पात्रे रसतुल्यं विनिक्षिपेत् ॥ ७६ ॥
चराचरभवं भस्म तत्र माक्षिकसंभवम् ।
गन्धपाषाणसहितं पात्रे लोहमये क्षिपेत् ॥ ७७ ॥
तत्काष्ठेन विलोड्याथ निक्षिपेत्कदलीदले ।
सर्वं समांशकं कृत्वा रसे चार्धांशिकं क्षिपेत् ॥ ७८ ॥
चराचरभवं भस्म गन्धपाषाणसाधितम् ।
तत्काष्ठेन विलोड्याथ निक्षिपेत्कदलीदले ॥ ७९ ॥
तत आच्छाद्य संचूर्ण्य निधायाऽऽयसभाजने ॥ ८० ॥
अक्षमात्रं क्षिपेद्भस्म तत्र माक्षिकसंभवम् ।
सम्यङ्निश्चन्द्रतां नीतं व्योमभस्म पलोन्मितम् ॥ ८१ ॥
विषं विषां च गन्धारीं मोचसारं सजीरकम् ।
सर्वं समांशकं कृत्वा रसे चार्धांशतः क्षिपेत् ॥ ८२ ॥

---

१ घ. °लाया द°। २ ङ. शर्चि च स। ३ घ. °र्शसान्विद्र°।

सर्वमेतन्मर्दयित्वा भावयेदतियत्नतः।
जयन्त्या च महाराष्ट्र्या गजाङ्किन्याऽश्वगन्धया॥ ८३॥
पञ्चकोलकषायैश्च कुर्याच्चूर्णं ततः परम्।
इति सिद्धो रसः सोऽयं ग्रहणीगजकेसरी॥ ८४॥
नामतो नन्दिना प्रोक्तः कर्मतश्च सुधानिधिः।
वल्लेन प्रमितश्चायं रसः शुण्ठ्या घृताक्तया॥ ८५॥
सेवितो ग्रहणीं हन्ति सत्सङ्ग इव विग्रहम्।
पथ्यमत्र प्रदातव्यं स्वल्पाज्यं दधितक्रयुक्॥ ८६॥
हितं मितं च विशदं लघु ग्राहि रुचिप्रदम्।
पाचनो दीपनोऽत्यर्थमामघ्नो रुचिकारकः॥ ८७॥
तत्तदौषधयोगेन सर्वातीसारनाशनः।
बध्नात्यपि मलं शीघ्रं नाऽऽध्मानं कुरुते नृणाम्॥ ८८॥

**अथ शीघ्रप्रभावः**—पारदं गन्धकं व्योम तीक्ष्णं तालं मनःशिला।
सौवीरमञ्जनं शुद्धं विमलं च समांशकम्॥ ८९॥
एभिः कज्जलिकां कृत्वा स्वल्पतैलेन भर्जयेत्।
ग्रन्थिकं जीरकं चित्रं दीप्यकं मुस्तकं विषम्॥ ९०॥
बालाम्रं बालबिल्वं च मोचसारं समांशकम्।
विचूर्ण्य पूर्ववत्कल्कं तदर्धेन विनिक्षिपेत्॥ ९१॥
पुनर्विमर्दयेद्यत्नादेकरूपं भवेद्यथा।
भावयेत्सप्त वाराणि पञ्चकोलकषायतः॥ ९२॥
अरलुत्वग्रसेनापि दश वाराणि भावयेत्।
अनेन क्रमयोगेन रसो निष्पद्यते ह्ययम्॥ ९३॥
जग्धो विश्वघनाम्बुना स हि रसः शीघ्रप्रभावाभिधो
निष्कार्धप्रमितो महाग्रहणिकारोगेऽतिसारामये।
आध्माने ग्रहणीभवे रुचिहते वाते च मन्दानले
मुक्ते चापि मले पुनश्चलमलाशङ्कासु हिक्कासु च॥ ९४॥

**वह्निज्वालावटी**—कपर्दतुल्यं रसगन्धकल्कं लोहं मृतं टङ्कणकं च तुल्यम्।
जयारसेनैकदिनं विमर्द्य चूर्णेन संपेष्य पुटेत भाण्डे॥
ददीत तां पोटलिकां च दोषत्रयप्रधानग्रहणीनिवृत्त्यै॥ ९५॥

---

१ घ. तत्सर्वं मर्दयित्वाऽथ°। २ ङ. गञ्जाकन्या°। ढ. गुञ्जाकन्याजग°। ३ घ. °धासमः। ४ ङ. °क्रभुक्। ५ ङ. बध्नन्नपि। ६ ङ. °शधा परि भा°। ७ ग. रुचिहरो। च. रुचिकरो। ८ घ. वाऽपि। ९ ख. °श्च समलाशङ्का च हि°। १० ग. °कल्पं लो°। ११ च. पुटेन।

नष्टपिष्टौ चतुर्माषमेकैकं रसगन्धयोः ।
अभ्रकं माषमानं च मातुलुङ्गाम्लमर्दितम् ॥ ९६ ॥
शोधितं सप्तधा चैव द्विमाषं त्र्यूषणं पृथक् ॥ ९७ ॥
त्रिशूली भृङ्ग शार्ङ्गेरी सातला तीक्ष्णपर्णिका ।
श्वेताऽपराजिता कन्या मत्स्याक्षी ग्रीष्मसुन्दरा ॥ ९८ ॥
करिणी कर्णमोटी च रुदन्तीचित्रकार्द्रकात् ।
धत्तूरकाकमाचीभ्यां मुसल्याश्च पृथग्रसैः ॥ ९९ ॥
मर्दितं द्विपलैः कुर्याद्वटिका माषसंमिता ।
ग्रहण्यां पर्णखण्डेन व्योषयुक्ता निषेविता ॥ १०० ॥
अरुचिं राजयक्ष्माणं मन्दाग्निं सूतिकागदान् ।
शमयेद्वटिका नाम्ना वह्निज्वालेति गीयते ॥ १०१ ॥

अथ वज्रधरः—रसगन्धकताम्राभ्रं क्षारांस्त्रीन्वरुणावृषम् ।
अपामार्गस्य च क्षारं लवणं द्विद्विमाषकम् ॥ १०२ ॥
शार्ङ्गेर्या हस्तिशुण्ड्याश्च रसैः पिष्टं पचेत्पुटे ।
भक्षयित्वा ततो गुञ्जां ग्रहण्यां काञ्जिकं पिबेत् ॥ १०३ ॥
पंक्तिशूले च कासे च मन्दाग्नावार्द्रकद्रवम् ।
आम्लपित्ते च धारोष्णं क्षीरं वज्रधरो ह्ययम् ॥ १०४ ॥

अथ ग्रहणीकपाटः—रसेन्द्रगन्धातिभयाविषाभ्रं क्षारद्वयं मोचरसो वचा च ।
जयाच जम्बीररसेन पिष्टं पिण्डीकृतं स्याद्ग्रहणीकपाटः ॥१०५॥
तस्याष्टमाषान्मधुना प्रभाते शम्बूकभस्माज्यमधूनि लिह्यात् ।
सक्षीरिणीजीरकमाणिमन्थतीक्ष्णानि चाऽऽदौ दधिभोजनं च ॥ १०६ ॥
मुस्तावत्सकपाठाग्निव्योषप्रतिविषाविषम् ।
धातकीमोचनिर्यासश्चूतास्थि ग्रहणीहरम् ॥ १०७ ॥

[ इति ग्रहणीप्रकरणम् ।

अथाजीर्णचिकित्सा—विरेको जठरे शूलो वमनं च मुहुर्मुहुः ।
हस्तपादादिसंकोचः सर्वाजीर्णस्य लक्षणम् ॥ १०८ ॥

अथाजीर्णकण्टकः—शुद्धसूतं विषं गन्धं सर्वं समविचूर्णितम् ।
मरिचं सर्वतुल्यांशं कण्टकार्याः फलद्रवैः ॥ १०९ ॥

---

१ ग. °पिष्टे च°। २ घ. ङ. °र्माषौ प्रत्येकं रसगन्धकौ । ३ घ. ङ. चाङ्गेरी°। ४ च. ठ. °र्द्रकान् । °र्द्रकम् । ५ घ. °काचमा°। ६ क. °स्त्रींश्चरणादृषत् । ग. °स्त्रीचरणादृषक् । घ. °स्त्रीन्वरणादृशान् । ७ घ. °ाङ्गेर्या । ८ घ. °शुण्ड्याश्च । ९ घ. पङ्क्तिशू°। १० घ. °तिविषाभयाभ्रं । ११ क. समं सर्वं वि°।

मर्दयेद्भावयेत्सर्वमेकविंशतिवारकम् ।
वटीं गुञ्जात्रयं खादेत्सर्वाजीर्णप्रशान्तये ॥ ११० ॥
अजीर्णकण्टकः सोऽयं रसो हन्ति विषूचिकाम् ।
वारिणा तिलपर्ण्युत्थमूलं पिष्ट्वा पिबेदनु ॥ १११ ॥

**विध्वंसनामारसः**—विमर्द्य गन्धोपलटङ्कणेन संभाव्य वारानथ सप्त जात्याः ।
तोयैः फलानामथ चैव सिद्धो विध्वंसनामा शमनो विषूच्याः॥११२॥
अमुष्य गुञ्जा नव दापनीया हन्तुं विषूचीं सितया समेताः ।
तक्रौदनं स्यादिह भोजनाय पथ्यं च शाकं किल वास्तुकस्य॥११३॥

**अथाग्निकुमारः**—रसगन्धटङ्कमसितं समांशकं
परिमर्द्य जातिफलसप्तभावितम् ।
सितयोपयुज्य नवरक्तिकोन्मितं
मथितान्नभुग्विजयते विषूचिकाम् ॥ ११४॥
हंसपादीरसैः सिद्धं रसगन्धकयोः पलम् ।
कोलं च विषचूर्णस्य वालुकायन्त्रपाचितम् ॥ ११५ ॥
शाणं विषस्यार्धपलं मरिचस्य विमिश्रयेत् ।
दीपनोऽग्निकुमारोऽयं ग्रहण्यां च विशेषतः ॥ ११६ ॥
स वातश्लेष्मजान्रोगान्क्षणादेवापकर्षति ।
संनिपातज्वरश्वासक्षयकासांश्च नाशयेत् ॥ ११७ ॥

**अथ वडवाग्निरसः**—टङ्कणं मरिचं तुत्थं पृथक्कर्षत्रयं भवेत् ।
सुन्दरं द्वादशं निष्कं त्रिंशन्निष्कमयोमलम् ॥ ११८ ॥
कान्तं पञ्चरसे घृष्टं पुटपक्कं वरारसे ।
मार्कवस्वरसे घृष्टं सप्तकृत्वस्त्वयोमलम् ॥ ११९ ॥
चूर्णान्येतानि संयोज्य स्थापयेच्छुद्धभाजने ।
शुद्धदेहो नरस्तस्य पानं यद्भोजनोत्तरम् ॥ १२० ॥
अद्यात्पथ्यं ततः स्वल्पं ततस्ताम्बूलभाग्भवेत् ।
उदराग्निर्नरस्यास्य वडवाग्निसमो भवेत् ॥
बहुनाऽत्र किमुक्तेन रसायनमयं नृणाम् ॥ १२१ ॥

**अथ वराटवराटीलक्षणम्**—पीतवर्णा गुरुः स्निग्धा पृष्ठतो ग्रन्थिला मला ।
चराचरेति सा प्रोक्ता वराटी नन्दिना खलु ॥ १२२ ॥

---

१ क. त्रिमृद्य । २ ग. तक्रौद° । ३ घ. पिष्टं । ४ क. उदराग्निः । ५ क. °दश नि° । ६ च. कान्त-पञ्चारसैर्घृष्टं । ७ घ. °रसैर्भृष्टं । ८ ग. दया° ।

सार्धनिष्कमिता श्रेष्ठा मध्यमा निष्कमानिका ।
पादोननिष्कमाना च कनिष्ठाऽत्र वराटिका ॥ १२३ ॥
निष्कलाश्च ततो न्यूनाः पुंवराटाश्च पित्तलाः ।
दत्वा दत्वा गुणान्भूयो विकारान्कुर्वते हि ते ॥ १२४ ॥

**अथ वैश्वानरपोटली**—शुद्धौ सूतबली चराचररजः कर्षांशतः कज्जली-[1]
कृत्वा गोपयसा विमर्द्य दिवसं रुद्ध्वा च मूषोदरे ।
सिद्धः कुम्भिपुटे[2] स्वतश्च शिशिरः पिष्टः करण्डे स्थितः
स्याद्वैश्वानरपोटलीति कथितस्तीव्राग्निदीप्तिप्रदः ॥ १२५ ॥
एकोनविंशता[3] चूर्णै[4]र्मरिचानां घृतान्वितैः ।
देयोऽयं वल्लमानेन वयोबलमपेक्ष्य[5] ताम् ॥ १२६ ॥
गिलेद्गलविशुद्ध्यर्थं दधिभक्त[6]मनुत्तमम् ।
कवल[7]त्रयमानेन दुर्गन्धोद्गारशान्तये ॥ १२७ ॥
मध्यंदिने ततो भोज्यं घृततक्रोपदंशयुक् ।
रात्रौ च पयसा सार्धं यद्वा रोगानुसारतः ॥ १२८ ॥
विदाहि विदलं भूरिलवणं तैलपाचितम् ।
बिल्वं च कारवेल्लं च वृन्ताकं काञ्जिकं त्यजेत् ॥ १२९ ॥
इयं हि पोटली प्रोक्ता [8]सिङ्घणेन महीभृता ।
मन्दाग्निप्रभवाशेषरोगसंघातघातिनी ॥ १३० ॥
सिङ्घणे[9]स्यापि निर्दिष्टा भैरवानन्दयोगिना ।
लोकनाथोक्तपोटल्या उपचारा[10] इह स्मृताः ॥ १३१ ॥
पोटल्यो दीपनाः स्निग्धा मन्दाग्नौ नितरां हिताः ॥ १३२ ॥

**अथ वडवामुखी गुटिका**-शुल्बायोघनभस्म वेल्लहलिनीव्योषाम्बुनिम्ब[11]च्छदैः
संयुक्तै[12]श्च हरिद्रया समैलवैः[13] सार्धं समभ्रा[14]मृतैः ।
भृङ्गाम्भोविषतिन्दु[15]कार्द्रकरसैः संपिष्य गुञ्जा[16]मिता
संशुष्का वडवामुखीति गुटिका नाम्नो[17]दिता तारया ॥ १३३ ॥

---

१ च. ङ. कज्जलीं । २ च. कुम्भपु° । ३ ग. °शतीचू° । अ. °शताचू° । ४ ज. चूर्णे म° । ५ क. °मवेक्षतां । क. °मपेक्ष्य तां । घ. °मपैक्ष्य तम् । अ. °मवेक्ष्य च । ६ ज. दध्याक्तं भक्तमुत्त° । ७ क. प्राद्यं °कवलमा° । ८ अ. सिंहिलेन । ९ घ. °णस्य विनि° । १० ग. °राय हि स्मृता । ११ क. °निम्बुच्छ° । १२ घ. युक्तश्च° । १३ अ. °मतुलैः सा° । १४ घ. सशुभ्रा° । १५ च. °न्दुकद्रव° । १६ अ. गुञ्जोपमा° । १७ अ. नाम्ना मता ।

क्षिप्रं क्षुत्परिबोधिनी खलु मता सर्वामयध्वंसिनी
श्लेष्मव्याधिविधूननी कसनहृच्छ्वासापहा शूलनुत् ।
क्षुद्रैषम्यहरा च गुल्मशमनी मूलार्तिमूलंकषा
शोफव्याधिहराऽत्र किं बहुगिरा सर्वामयोत्सादनी ॥ १३४ ॥

**अथ क्रव्यादनामा रसः**—द्विपलं गन्धकं शुद्धं द्रावयित्वा विनिक्षिपेत् ।
पारदं पलमानेन मृतशुल्बायसं[1] पुनः ॥ १३५ ॥
तोलमानेन संक्षिप्य पञ्चाङ्गुलदले क्षिपेत् ।
ततो विचूर्ण्य यत्नेन निक्षिप्याऽऽयसभाजने ॥ १३६ ॥
चुल्ल्यां निवेश्य यत्नेन ज्वालयेन्मृदुवह्निना ।
पात्रमात्रं हि जम्बीररसं[2] सम्यग्विजारयेत् ॥ १३७ ॥
संचूर्ण्य पञ्चकोलोत्थैः कषायैः साम्लवेतसैः ।
भावनाः खलु कर्तव्याः[3] पञ्चाशत्प्रमितास्ततः ॥ १३८ ॥
भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् ।
तदर्धं कृष्णलवणं सर्वतुल्यं मरीचकम् ॥ १३९ ॥
सप्तधा भावयेत्पश्चाच्चणकक्षारवारिणा ।
ततः संचूर्ण्य संशुष्कं कूपिकाजठरे क्षिपेत् ॥ १४० ॥
अत्यर्थं गुरुमांसानि गुरुभोज्यान्यनेकशः ।
भुक्त्वा[4] च कण्ठपर्यन्तं चतुर्वल्लमितं रसम् ॥ १४१ ॥
पट्वम्लतक्रसहितं पिबेत्तदनुपानतः ।
क्षिप्रं तज्जीर्यते भुक्तं जायते दीपनं पुनः ॥ १४२ ॥
रसः क्रव्यादनामाऽयं प्रोक्तो मन्थानभैरवे ।
सिङ्घणक्षोणिपालस्य भूरिमांसप्रियस्य च ।
दिष्टो ग्रामं समासाद्य भैरवानन्दयोगिना ॥ १४३ ॥

कुर्याद्दीपनमुद्धतं च पचनं दुष्टामसंशोषणं
तुन्दस्थौल्यनिबर्हणं गरहरं मूलार्तिशूलापहम् ।
गुल्मप्लीहविनाशनं ग्रहणिकाविध्वंसनं स्रंसनं
वातग्रन्थिमहोदरापहरणं क्रव्यादनामा रसः ॥ १४४ ॥

**अथ राजशेखरवटी**—भागो मृतरसस्यैको वत्सनाभांशकद्वयम् ।
रसतुल्यं शिवाचूर्णं गन्धकं त्र्यूषणं तथा ॥ १४५ ॥

---

१ घ. ठ. ढ. °यसी पु° । २ घ. °सं तत्र प्रजा° । ३ घ. दातव्याः । ४ घ. ठ. °क्त्वाचाऽऽक° ।

विचूर्ण्यातिप्रयत्नेन भावयेत्सप्तधा रसम् ।
ताम्बूलीपत्रतोयेन स्वर्णधत्तूरजद्रवैः ।
पिष्ट्वा चणमिताः कुर्याच्छायाशुष्कास्तु गोलिकाः ॥ १४६ ॥
उष्णाम्भोयुतराजशेखरवटी मन्दाग्निनिर्नाशिनी
नानाकारमहाज्वरार्तिशमनी नि शेषशूलापहा ।
पाण्डुव्याधिमहोदरार्तिशमनी शूलान्तकृत्पाचनी
शोफघ्नी पवनार्तिनाशनपटुः श्लेष्मामयध्वंसिनी ॥ १४७ ॥

**अथाग्निकुमारः**—शुद्धं सूतं विषं गन्धं त्रिक्षारं पटुपञ्चकम् ।
दशकं तुल्यतुल्यांशं भर्जिता विजया नवा ॥ १४८ ॥
दशानां तुल्यभागा सा तस्यार्धं शिग्रुमूलकम् ।
तत्सर्वं विजयाद्रावैः शिग्रुचित्रकभृङ्गजैः ॥ १४९ ॥
द्रावैर्दिनत्रयं मर्द्यं रुद्ध्वा भाण्डे पचेल्लघु ।
दीपाग्निना तु यामैकं शुष्कं यावत्समुद्धरेत् ॥ १५० ॥
सप्तधा चाऽऽर्द्रकद्रावैर्भावयेच्चूर्णयेद्भिषक् ।
दीपकोऽग्निकुमारोऽयं निष्कैकं मधुना लिहेत् ॥ १५१ ॥
प्रतिकर्षं गुडं शुण्ठी अनुपानं च दीपनम् ॥ १५२ ॥

**अथामृतवटी**—कुष्ठगन्धविषव्योषत्रिफलापारदैः समैः ।
भृङ्गाम्बुमर्दिता मुद्गमानाऽमृतवटी शुभा ।
अजीर्णश्लेष्मवातघ्नी दीपनी रुचिवर्धनी ॥ १५३ ॥

**अथ राक्षसनामा रसः**-ताम्रं पारदगन्धकौ त्रिकटुकं तीक्ष्णं च सौवर्चलं
खल्वे मर्द्य दृढं विधाय सिकताकुम्भेऽष्टयामं ततः ।
स्विन्नं तस्य च रक्तशाकिनिभवं क्षारं समं मेलये-
त्सर्वं भावितमातुलुङ्गजरसैर्नाम्ना रसो राक्षसः ॥ १५४ ॥
मन्दाग्नौ सततं ददीत मुनये प्रातः पुरा शंकरः
सौख्येऽस्मै च्यवनाय मन्दहुतभुग्वर्याय नष्टौजसे ।
तेनाऽऽदाय समस्तलोकगुरवे सूर्याय तस्मै नमो
मर्त्यानामपि चास्य दानसमये गुञ्जाष्टकं वर्धयेत् ॥ १५५ ॥

**जीवननामा रसः**-रसगन्धौ सिन्धुकणाटङ्कणमभयाग्निहियावलीकतकफलम् ।
क्रमशोत्तरं च विचूर्णितया बृहतीरससंयुतभावनया ॥ १५६ ॥

---

१ घ. °षशूला°। २ क. ठ. ड. °गानां त°। ३ घ. °तुस्यादग्निदी°। ४ क. निधाय। ५ क. ठ. °गन्धकसि°। ६ ङ. °त्तरभागचू°। घ. °त्तरभागसुसुचू°। ७ ङ. च सुचू°।

आर्द्रकहिङ्गुपुनर्नवपूतिच्छिन्नरसैः क्रमशस्तु भावनया ।
तस्य कलांशविषं च विमिश्रं तद्रसमानं मानवधिया ॥ १५७ ॥
सर्वमजीर्णं कफमारुतपाण्डुशोफहलीमककामलाशूलम् ।
नाशयते ह्युदराग्निकरोऽयं दीपनं च जीवननामरसेन्द्रः ॥१५८॥

**अथ वडवानलः**—शुल्बं तालकगन्धकौ जलनिधेः फेनाग्निगर्भाशियं
कान्तायोलवणानि हेमपवयो नीलाञ्जनं तुत्थकम् ।
भागो द्वादशको रसस्य तु दिनं वैज्ञ्यम्बुघृष्टं शनैः
सिद्धोऽयं वडवानलो गजपुटे रोगानशेषाञ्जयेत् ॥ १५९ ॥

**अथाग्निजननी वटी**—कणनागरगन्धकपारदसगरलं मरिचं समभागयुतम् ।
लकुचस्य रसैश्चणकप्रमिता गुटिका जनयत्यचिरादनलम् ॥१६०॥

**अथ सर्वरोगान्तका वटी***—शुद्धसूतं विषं गन्धमजमोदं फलत्रयम् ।
सर्जीक्षारं यवक्षारं वह्निसैन्धवजीरकम् ॥ १६१ ॥
सौवर्चलं विडङ्गानि सामुद्रं त्र्यूषणं समम् ।
विषमुष्टिः सर्वतुल्या जम्बीराम्लेनमार्दितम् ॥ १६२ ॥
मरिचाभां वटीं खादेद्वह्निमान्द्यप्रशान्तये ।
पथ्या शुण्ठी गुडं चानु पलार्धं भक्षयेत्सदा ॥ १६३ ॥
अग्निमान्द्ये वटी ख्याता सर्वरोगकुलान्तका ।

**अथाग्निकरम्**—मृतं ताम्रं कणातुल्यं चूर्णं क्षौद्रविमिश्रितम् ॥ १६४ ॥
निष्कार्धं भक्षयेन्नित्यं नष्टवन्हिप्रदीप्तये ।
आर्द्रकस्वरसं क्षौद्रे पलमात्रं भवेदनु ।
यथेष्टं घृतमांसाशी शक्तो भवति पावकः ॥ १६५ ॥ १८६० ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चय उदावर्तातिसारग्रहणीविषूचीवह्निमान्द्यचिकित्सितं नाम षोडशोऽध्यायः ॥ १६ ॥

---

अथ सप्तदशोऽध्यायः ।

[ अथ मूत्रकृच्छ्राश्मर्यादिचिकित्सनम् । ]

**अथाश्मरीचिकित्सा**—कटौ कुक्षिप्रदेशे च शूलं प्रथमतो भवेत् ।
पश्चाद्रोधो ज्वलन्मूत्रमश्मरीरोगलक्षणम् ॥ १ ॥

---

* ङ. अथाग्निमन्थवटी ।

---

१ ङ. °माषसमानवटी या । २ क. °पनजी° । ङ. °पनजीवननामरसोऽयम् । ३ च. वज्राम्बु° । ४ घ. °पादरसं ग° ५ घ. °मोदा फ° । ६ ङ. °ग्निमन्थव° । ७ च. °रसक्षौ° ।

**अथ पाषाणभेदी रसः**—रसं द्विगुणगन्धेन मर्दयित्वा प्रयत्नतः।
वसुः पुनर्नवा वासा श्वेता ग्राह्या प्रयत्नतः॥ २॥
तद्द्रवैर्भावयेदेनं प्रत्येकं तु दिनत्रयम्।
पक्वं मूषागतं शुष्कं स्वेदयेज्जलयन्त्रतः॥ ३॥
पाषाणभेदी नामायं नियुञ्जीतास्य वल्लयुक्।
गोपालकर्कटीदुग्धं भूम्यामलकमूलिका॥ ४॥
कुलत्थक्काथतोयेन पिष्ट्वा तदनुपाययेत्॥ ५॥

**अथ पाषाणभेदी रसः**—गोक्षुरस्य कषायं च सघृतं पाययेन्निशि।
पौण्ड्रफलमूलं च भूम्यामलकमूलिका॥ ६॥
वंशस्य पेटकार्याश्च मूलं पिष्ट्वा जलं पिबेत्।
शुक्त्यापिण्याकछिल्ली च चूर्णमुष्णेन वारिणा॥ ७॥
पिबन्विमुच्यते रोगान्मूत्रकृच्छ्रात्सुदारुणात्।
शतावरीरसे पिष्ट्वा तुल्यसूतार्कपिष्टिका॥ ८॥
पाचिता कटुतैलेन मूत्रकृच्छ्रे प्रशस्यते।
रसेन सितवर्षाभ्वा रसं द्विगुणगन्धकम्॥ ९॥
घृष्टं पचेच्च मूषायां द्वौ माषौ तस्य भक्षयेत्।
पातालकर्कटीमूलं कुलत्थोदैः पिबेदनु॥ १०॥
गोकण्टकसदाभद्रामूलक्काथं पिबेन्निशि।
अयं पाषाणभिन्नाम्ना रसः पाषाणभेदकः॥११॥ इति पाषाणभेदीरसः॥
गोक्षुरबीजसमुत्थं चूर्णमविक्षीरसमायुक्तम्।
रसवरमिश्रं पिबतश्चूर्णीभूत्वाऽश्मरी पतति॥ १२॥

**अथ त्रिविक्रमः**—मृतताम्रमजाक्षीरैः पाच्यं तुल्यं गते द्रवे।
तत्ताम्रं शुद्धसूतं च गन्धकं च समं समम्॥ १३॥
निर्गुण्ड्युत्थद्रवैर्मर्द्यं दिनं तद्गोलमन्धयेत्।
यामैकं वालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम्॥ १४॥
बीजपूरस्य मूलं तु सजलं चानुपाययेत्।
रसस्त्रिविक्रमो नाम्ना मासैकेनाश्मरीप्रणुत्॥ १५॥

---

१ घ. °टीबीजं भू°। २ च. पाण्डुरं फ°। ३ घ. शुक्कं पिण्डाकपिच्छाली। ङ. शुक्तपिण्डाकपृ-छल्ली। ज. शुक्कपिण्डाकपिच्छाली चू°। ४ घ. रसद्वि°। ५ ङ. मृष्टं पचेत। ६ क. °दनः। ७ क. °ससं-हुत्थं। ८ च. °रसधुस°। ९ क. °भूताऽश्म°। १० च. पचति। ११ च. मास्यैके चाश्म°।

**अथाऽऽनन्दभैरवः**—ति[1]लापामा[2]र्गकाण्डं च कारवेल्लया यवस्य च ।
पलाशकाष्ठसंयुक्तं सर्वं तुल्यं दहेत्पुटे ॥ १६ ॥
तन्निष्कैकमजामूत्रैर्वटीं चाऽऽनन्दभैरवीम् ।
पाययेदश्मरीं हन्ति सप्तरात्रान्न संशयः ॥१७॥ इत्यानन्दभैरवः ।
पाडु[3]रफलिकामूलं जलेनैवाश्मरीहरम् ।
मधुना च यवक्षारं लीढं स्यादश्मरीहरम् ॥ १८ ॥
**अथ लघुलोकेश्वरः**—मृतसूतस्य भागैकं चत्वारः शुद्धगन्धकात् ।
पिष्ट्वा व[4]राटकं तेन रसपादं च टङ्कणम् ॥ १९ ॥
क्षीरैः पिष्ट्वा मुखं रुद्ध्वा तासां[5] तांश्चान्धयेत्पुटेत् ।
स्वाङ्गशीतं विचूर्ण्याथ लघुलोकेश्वरो रसः ॥ २० ॥
चतुर्गुञ्जारस[6]श्चायं मरिचैकोनविं[7]शतिः ।
जा[8]तिमूलपलैकं तु अजाक्षीरेण [9]पेषयेत् ॥ २१ ॥
शर्कराभावितं चानुपीत्वा कृच्छ्रहरं ध्रुवम् ।
विदारीं गोक्षुरं यष्टिं कसेरु च समं पचेत् ॥ २२ ॥
तं कषायं पिबे[10]त्क्षौद्रं रसभस्मयुतं तथा ।
मूत्रकृच्छ्रहरं ख्यातं सप्ताहात्पित्तसंभवम् ॥ २३ ॥
तिलापामार्गकदलीपलाशयवकाण्डकान् ।
दग्ध्वा तद्भस्म तोयेन वस्त्रपूतं च कारयेत् ॥ २४ ॥
तं पचेत्तो[11]यशोषान्तं ततश्चूर्णं द्विगुञ्जकम् ।
दापयेदविमूत्रेण शर्कराकृच्छ्रहृद्भवेत् ॥ २५ ॥
हरिद्रागुडकर्षैकं चाऽऽरनालेन वा पिबेत् ।
वन्ध्याकर्कोटकीकन्दं भक्ष्यं क्षौद्रसितायुतम् ।
अश्मरीं हन्ति नो चित्रं रहस्यं हि शिवोदितम् ॥ २६ ॥
**अथ प्रमेहचिकित्सा**—शोषस्तापोऽङ्गकार्श्यं च बहुमूत्रत्वमेव च ।
अस्वास्थ्यं सर्वगात्रेषु मूत्रमेहस्य लक्षणम् ॥ २७ ॥
**अथ चन्द्रप्रभागुटिका**—रसस्य भस्मना तुल्यं वङ्गभस्म समाहरेत् ।
मधुना लेहयेत्प्राज्ञो वातमेहप्रशान्तये ॥ २८ ॥

---

१ च. शिला°। २ च. °लापमार्गकान्तं च । ३ क. पाण्डुरं फ°। ग. पाण्डुरीफ°। ४ घ. वराटिकां । ५ ग. °सां ताश्चा°। ६ ग. °सस्यायं । ७ क. °शंतिम् । ८ क. जातीफल°। घ. जातीमू°। ९ घ. पाययेत् । १० घ. °रक्षौद्रे र°। ११ च. °यशेषा° ।

मुद्गमूलकयूषेण पथ्यं देयं सतक्रकम् ।
तिलपिण्डीं च तक्रेण पक्त्वा दद्यान्न हिङ्गुकम् ॥ २९ ॥
घृतं बहु न दद्याच्च तिलतैलेन भोजयेत् ।
मार्कण्डीचूर्णमादाय सगुडं खादयेन्निशि ॥ ३० ॥
ताम्रेण तूर्यभागेन कुर्वीत रसपिष्टिकाम् ।
गोक्षुरस्य द्रवे चैव निक्षिपेत्सप्तकद्वयम् ॥ ३१ ॥
निम्बुमध्ये विनिक्षिप्य स्वेदयेत्काञ्जिकेऽहनि ।
निम्ब्वन्तरे विनिक्षिप्य वक्त्रे संधारयेन्निशि ॥ ३२ ॥
रक्तमेहेऽपि भस्मैव वङ्गस्य मधुना चरेत् ।
शुक्लमेहप्रशान्त्यर्थं हरिद्राचूर्णसंयुतम् ॥ ३३ ॥
मधुमेहापनुत्त्यर्थं समालार्जुनचूर्णकम् ।
वङ्गभस्मसमायुक्तं खादयेच्छर्करान्वितम् ॥ ३४ ॥
शाल्मलीं द्रुतिमादाय पाययेन्मधुना सह ।
बोलबद्धं रसं जग्ध्वा रक्तमेहाद्विमुच्यते ॥ ३५ ॥
बीजकस्य कषायं च पिबेदनु सबोलकम् ।
श्लेष्मातमूलजक्वाथं सघृतं निशि पाययेत् ॥ ३६ ॥
कूष्माण्डस्य रसं वेल्लखण्डयुक्तं तु पाययेत् ।
स्त्रियं वा रुधिरस्रावामामदुग्धेन पाययेत् ॥ ३७ ॥
तुवरीमूलमुद्घृष्टं सम्यक्शर्करयाऽन्वितम् ॥ ३८ ॥
बोलं जातिफलं मधूकयुगलं सारं तथा खादिरं
कर्पूरामलकीसटीबहुसुताघोण्टाम्लसारस्थिराः ।
कासीसं भवबीजदाडिमसहा सर्वं समं कल्पितं
प्रत्येकं दधिदुग्धलाङ्गलिरसैस्तुम्बस्य मुद्गस्य च ॥ ३९ ॥
रसेन भावितं तस्य गुटिका संप्रकल्पिता ।
जयेच्चन्द्रप्रभा नाम तीव्रान्मेहादिकान्गदान् ॥ ४० ॥

**अथ प्रमेहगजसिंहः**—चाण्डालीराक्षसीपुष्परसमध्वाज्यटङ्कणम् ।
रसं समांशोपरसं समं हेम्ना विमर्दितम् ॥ ४१ ॥

---

१ च. मुद्गामल°। २ घ. °पिण्डी च । ङ. °पिण्डं च ३ घ. °क्त्वार्धं हिङ्गुकं घृतम् । ४ ङ. °द्यादहि°। ५ झ. दध्यन्नं बहु द°। ६ ग. कुर्वन्ति । ७ घ. शुक्रमे°। ८ ङ. °र्थं मालार्जुनकचू°। ९ क. °ल्मलीद्रुति°। ग. °ल्मलीं द्रुति°। १० घ. श्लेष्मान्तमू°। ११ क. रसमम्लख°। घ. रसं मल्लख°। झ. रसं वल्ल°। १२ घ. च । १३ ङ. °टिकां च प्रकल्पितम् । १४ घ. °सीमूलर°। १५ च. °पुष्पार°।

समांशं पूतिलोहं वा मूषायां विपचेत्क्रमात्।
प्रमेहगजसिंहोऽयं रसः क्षौद्रैर्द्विमाषकम्॥ ४२॥

**अथ महाविद्यागुटिका**—मर्दितं किंशुकरसैः कान्तनागाभ्रपारदम्।
कषायैः स्विन्नेनाकुल्या वालुकायन्त्रपाचितम्॥ ४३॥
राजावर्तशिलाधातुताप्यमण्डूरमाक्षिकैः।
तुत्थवैक्रान्तकासीसैः समैः सर्वैरिमैः समम्॥ ४४॥
आधारी कृष्णमूला तु कपित्थश्रावणी हिमम्।
नारिकेलस्य मूलानां मुस्ताचन्दनसारयोः॥ ४५॥
काकजम्बूप्रसूनानां रसैः सह विमर्दयेत्।
गुटिकां भक्षयेत्तस्य माषद्वितयसंमिताम्॥ ४६॥
धात्रीरसं चानुपिबेन्नाकुलीचूर्णमात्रया।
रात्रौ धात्रीरसं देयं महाविद्या प्रमेहजित्॥ ४७॥

**मेहध्वान्तविवस्वान्**—वीर्यं पुरारेर्बलिमम्लसंज्ञं जम्बीरनीरेणविमर्द्य भस्म।
रसार्धभागेन ददीत शुल्वं सर्वं ततो गोपयसा विमर्द्य॥ ४८॥
खर्जूरमत्स्यण्डिकहंसपादीद्राक्षेण सत्त्वेन गुडूचिकायाः।
मांशीशिवाकर्कटरुच्यदन्तीबीजैस्तदीयैः सलिलैर्विभाव्य॥ ४९॥
ततो रसः सिध्यति वल्लमस्य शुक्रप्रमेहे सति शाल्मलीनाम्।
मूलाम्बुना वा कुसुमाम्बुना वा दद्यात्पयोभक्तकमत्र योज्यम्॥ ५०॥
क्षौद्रेण दुर्नाम्नि तथाऽश्मरीषु गवां पयोभिर्निखिलप्रमेहे।
रसाभ्रकौ तुल्यसमानभागौ जम्बीरनीरैस्त्रिदिनं विमर्द्य॥ ५१॥
कुर्वीत मूषां कुहरे निवेश्य वह्नौ ततस्तस्य पुटानि सप्त।
बीजाद्व्रमुं[10]ष्काक्षयुगैश्चतस्रः स्युर्भावनाद्वे ककुभात्त्रिवारम्॥ ५२॥
यष्टीसिताकेतकजीररम्भाखर्जूरिकाजातिदलैः प्रतिस्वम्।
एवं हि सिद्धस्य रसस्य वल्लो मधुप्रयुक्तः सहसा शिशूनाम्॥ ५३॥
संतापशोषौ बलहीनतां च तृ[11]षां च वासासलिलैः प्रमेहान्।
निवर्तयेद्द्रासरसप्लकेन दुग्धौदनं स्यादिह भोजनाय॥ ५४॥
नीरेण ब[12]ब्बूलनवप्रवाला[13]न्निषेव्य तैः शर्करया समन्वितैः।
सर्वप्रमेहान्विनिहन्ति दत्तो दिनत्रयं विंश[14]तिवत्सरस्य॥ ५५॥

---

१ झ. सक्षौद्रः सेवितो रसः। २ घ. °भ्रमाकु°। ३ घ. °मूलं च क°। ४ दार्वीरसं पेयं। ५ ग. °मभ्रसंज्ञकं ज°। च. °मल्लसं°। ६ क. मांसीशि°। ७ क. °भाव्यः। ८ घ. शुक्रप्र°। ९ घ. मूखाकु°। १० क. °मुस्ताक्ष°। ११ घ. तृष्णां। १२ क. बर्बूरन°। १३ घ. °ला निषे°। ङ. °ला निष्पिष्य तैः। १४ च. °तिवासर°।

अन्नं सर्सर्पिः ससितं [1]प्रयोज्यं दिनानि सप्तत्रिगुणानि चात्र ।
वरामधुभ्यां सहितस्य यस्य पञ्चाधिकावत्सरविंशतिः स्यात् ॥ ५६ ॥
हैयङ्गवीनेन गवां च पथ्यं त्रि सप्तसंख्यानि दिनानि कार्यम् ॥
प्रस्विन्नगोधूमरसेन हन्ति स त्रिंशदब्दस्य दिनत्रयेण ॥ ५७ ॥
अन्नं सर्सर्पिः सगुडं हि देयं मध्विक्षुखण्डैस्त्रिदिनं [2]विधातुम् ।
अङ्गानि सम्यग्विनिदाघसंघगतानि खानि स्फुटनं ददीत ॥ ५८ ॥
चिञ्चागुडाभ्यां युतमन्नमस्मिन्[3]द्राक्षादिनीरेण विमिश्रितः सन् ।
दिनत्रयं लङ्घनजं [4]विशेषं विनाशयेद्दोस्तनिकासिताभ्याम् ॥ ५९ ॥
पथ्यं देयमुमाशम्भौ वासुदेवेन निर्मिते ।
पातुं जगन्ति कृपया मेहध्वान्तविवस्वति ॥ ६० ॥

**अथ भीमपराक्रमः**—नागं कपालमध्ये क्षिप्त्वा चाग्निं विशोधयेत्क्रमशः ।
चिञ्चाकवचक्षारं स्वल्पं स्वल्पं विकीर्य [5]कुन्तलेन ॥ ६१ ॥
भागं पारदसीसं घृष्ट्वा घृष्ट्वा विचूर्णितं सम्यक् ।
तिलमानमादिमधुना तरवटबीजेन मिश्रितं क्रमशः ॥
मेहगणार्तिविनाशं [6]सपिटकं कुष्ठमनिलं च ॥ ६२ ॥
कान्ताभ्रमण्डूरहरीतकीनां विचूर्णितानां क्रमशः शरांशम् ।
रसेन भूतांशमथो [7]शरांशं द्वात्रिंशदष्टोत्तरमुत्तमायाः ॥ ६३ ॥
श्लक्ष्णं मृदित्वा गुलिकां विधाय तक्रेण पीतं तलपोटकस्य ।
बीजं च तेषां द्विगुणं [8]प्रकल्प्य मेहामयानाशु जयेत्प्रमेही ॥ ६४ ॥
कासीसं कृष्णनागं क्षितिधररुधिरं नीलमभ्रं सुकान्तं
हेमाङ्कं भूमिसारं सलिलरिपुदलं [9]मेहेतिष्यारिबीजम् ।
गोरेखा [10]चाँलिमेदः क्षितिरुहसहितं श्वेतगुञ्जाङ्घ्रिबीजं
कापित्थास्रग्विमिश्रं क्षितिफलसहितं रोहिणी चाक्षमिश्रम् ॥ ६५ ॥
सर्वं संपिष्य तोये [11]करिविजयभुवा मोदकानक्षमात्रा-
न्कुर्यात्तक्रेण देयं क्षपयति निखिलं मूत्ररोगं त्रिरात्रात् ।
सप्ताहात्[12]कल्पनाशं तृषमतिबहुलां हन्ति पक्षाद्विधत्ते
मासात्सर्वाङ्गवृद्धिं मुनिभिरभिहितो मेहिनां [13]गुह्ययोगः ॥ ६६ ॥
तुल्याभ्यां रसगन्धाभ्यां [14]कृत्वा कज्जलिकां त्र्यहम् ।
द्रावयित्वाऽऽयसे पात्रे मृदुना बदराग्निना ॥ ६७ ॥

---

१ क. प्रयोज्य । २ क. °धातुः । ३ घ. °क्षानदीनीरवि° । ४ च. विशेषं । ५ घ. कुतले° । ६ घ. सहपिटिकं । ७ घ. दशांशं । ८ घ. प्रकल्प्यं । ९ क. °हमध्यारि° । घ. °हपुष्पारि° । १० घ. चारिमे° । ११ घ. कलिवि° । १२ ष. °त्कल्कना° । १३ च. °ह्यरो° । १४ घ. कुर्यात् ।

निरुत्थमष्टमांशेन सीसभस्म विनिक्षिपेत्।
संमिश्रं कदलीपत्रे निक्षिप्य तदनन्तरम्॥ ६८॥
आकृष्य परिपिष्ट्वाऽथ सीसभस्मप्रमाणतः।
कान्ताभ्रसत्त्वयोर्भस्म राजावर्तकभस्म च॥ ६९॥
परिसिद्धं सगोमूत्रं शिलाधातुं निधाय च।
खल्वे निक्षिप्य तत्सर्वं यत्नेन परिमर्दयेत्॥ ७०॥
तुल्यगुञ्जाकुलीबीजचूर्णकल्कोत्थवारिणा।
कतकाङ्घ्रिकषायेण निम्बपत्ररसेन च॥ ७१॥
ततः [4]संशोष्य संचूर्ण्य क्षिप्त्वा लोहस्य भाजने।
त्रिफलानां कषायेण सप्तधा परिभावयेत्॥ ७२॥
आकुलीबीजबर्बूरनिर्यासौ भृष्टचूर्णितौ।
समौ रसमसौ कृत्वा रसेन सह मर्दयेत्॥ ७३॥
इति सिद्धरसः सोऽयं भवेद्भीमपराक्रमः।
नामतः सर्वमेहघ्नो दृष्टप्रत्ययकारकः॥ ७४॥
वल्लद्वयमितो ग्राह्यो जलैः पर्युषितैः सह।
पथ्यं मेहोचितं देयं वर्ज्यं सर्वं विवर्जयेत्॥ ७५॥

**अथ संजीवनः**—पलमात्रं रसं शुद्धं वरनागसमन्वितम्।
निक्षिप्य पातनायन्त्रे त्रिंशद्वाराणि पातयेत्॥ ७६॥
समाहरेद्रसं सम्यक्पातनायन्त्रके मृतम्।
मृते रसे क्षिपेत्तुल्यं भूपालावर्तभस्मकम्॥ ७७॥
निरुत्थं त्रपुभस्मापि निक्षिपेदष्टमांशतः।
ततो निम्बदलद्रावैस्त्रिंशद्वारं हि भावयेत्॥ ७८॥
ततः संशोष्य संचूर्ण्य क्षिपेद्दृढकरण्डके॥ ७९॥
संजीवनोऽयं खलु वल्लमानो निशाकुलीचूर्णयुतः सतक्रः।
निहन्ति सर्वानपि मेहरोगान्नृणां नितान्तं कुरुते क्षुधां च॥ ८०॥

**अथ मेहमर्दनः**—शुद्धसीसोद्भवं भस्म निर्व्यूढं व्योम्नि सप्तधा।
ततो विचूर्ण्य तन्मध्ये कान्तभस्म समं क्षिपेत्॥ ८१॥
गोमूत्रकशिलाधातुद्रवेण परिमर्दयेत्।
शोषयित्वा विचूर्ण्याथ क्षिपेन्नागकरण्डके॥ ८२॥
मेहमर्दननामाऽयं दिष्टो भालुकिना खलु।
गुञ्जाद्वयमितो देयो निम्बामलकसंयुतः॥ ८३॥

१ घ. °कमेव च। २ घ. °मूत्रे शिलाजतु नि°। ३ घ. ङ. केत°। ४ क. संपेष्य। ५ झ. °र्व्यूहं हेम्नि।

निहन्ति सकलान्मेहान्सर्वोपद्रवसंयुतान् ।
तत्तद्रोगहरैर्द्रव्यैः सर्वरोगनिबर्हणः ।
रोगानुरूपं दातव्यं पथ्यमत्र यथोचितम् ॥ ८४ ॥

**अथ रामबाणरसः**—त्रपुणा निहतं तारं स्वर्णं नागहतं तथा ।
मृतसूतं तयोस्तुल्यं मर्दयेद्दिवसत्रयम् ॥ ८५ ॥
आकुलीमूलजैः क्वाथैः शोषयित्वा मुहुर्मुहुः ।
ताप्यवैक्रान्तराड्डर्तभस्म सर्वसमं क्षिपेत् ॥ ८६ ॥
विमर्द्य बलिना सर्वं षोढा तुषपुटैः पचेत् ।
आकुलीबीजबब्बूरक्वथितैर्भावयेत्त्रिधा ॥ ८७ ॥
तं रसं परिचूर्ण्याथ स्थापयेत्कूपिकोदरे ।
गुडूचीसत्त्वसंयुक्तो वल्लतुल्यो रसस्त्वयम् ॥ ८८ ॥
निहन्ति सकलं मेहं मोहध्वान्तमिवेश्वरः ।
बाणवद्रामचन्द्रस्य सज्जनस्येव भाषितम् ॥ ८९ ॥
न याति जातु [4]मेहित्वं रामबाणो रसोत्तमः ॥ ९० ॥

**अथ राजमृगाङ्कः**—सुवर्णं रजतं कान्तं ताम्रं त्रपु ससीसकम् ।
भस्मीकृत्वा च तत्सर्वं क्रमवृद्ध्या कृतांशकम् ॥ ९१ ॥
व्योमसत्त्वभवं भस्म सर्वैस्तुल्यं प्रकल्पयेत् ।
कज्जलीं सूतराजस्य सर्वैरेतैः समांशिकाम् ॥ ९२ ॥
प्रद्राव्य लोहभस्माथ पूर्वभस्म विनिक्षिपेत् ।
काष्ठेनाऽऽलोड्य तत्सर्वं सद्रवं हि समाहरेत् ॥ ९३ ॥
ततो विचूर्ण्य तत्सर्वं सप्तवारं विभावयेत् ।
आकुलीबीजसंभूतक्वाथलेहेन यत्नतः ॥ ९४ ॥
रुद्धं तन्मल्लमूषायां सर्वं संस्वेदयेच्छनैः ।
इति सिद्धो रसेन्द्रोऽयं चूर्णितः पटगालितः ॥ ९५ ॥
कान्तपात्रस्थितै रात्रौ जलैस्त्रिफलसंयुतैः ।
वल्लत्रयमितः प्रातर्दातव्यो मेहरोगिणाम् ॥ ९६ ॥
मृगाँचारिर्मुनीन्द्रेण मेहव्यूहविनाशनः ।
निर्दिष्टोऽयं रसो राजमृगाङ्क इति कीर्तितः ॥ ९७ ॥

---

१ घ. ठ. तु संपुटैः । २ च. °रिपूर्याथ स्थगये° । ३ घ. मोहं ध्यात इवे° । ४ ङ. मोह्यत्वं । च. मेहत्वं । ५ घ. °थलोहे° । ६ अ. °ल्लद्रय° । ७ ङ. °गवारि° । ८ घ. °रिमृगेन्द्रे° । ९ च. इव ।

दीपनः पाचनो वृष्यो ग्रहणीपाण्डुनाशनः ।
तापघ्नो रुचिकृत्सर्वरोगघ्नो योगसंवृतः ॥ ९८ ॥

**अथ मेहहरः**—राजावर्तस्य रत्नस्य भस्म गन्धकसाधितम् ।
हतं च भस्मना तेन घनसत्त्वं च कान्तकम् ॥ ९९ ॥
निहतं तेन सूतं च तत्तन्मारणकैः सह ।
सत्त्वतुल्येन सूतेन तावता गन्धकेन च ॥ १०० ॥
कज्जल्या कृतया सार्धं पूर्वभस्म नियोजयेत् ।
त्रिदिनं मर्दयित्वा तु मूषायां विनिरुध्य च ॥ १०१ ॥
पश्चाढकमितैः शालितुषैश्च पुटमाचरेत् ।
स्वाङ्गशीतं समाहृत्य भावयेत्तदनन्तरम् ॥ १०२ ॥
आकुलीमूलबर्बूरबीजगुञ्जाजटोद्भवैः ।
कषायैरष्टवाराणि पटचूर्णं विधाय तत् ॥ १०३ ॥
विनिक्षिपेत्करण्डान्ते यत्नेन स्थापयेत्ततः ।
ततः स्नेहहरैर्द्रव्यैः संयुक्तो रसराडयम् ॥ १०४ ॥
निहन्ति सकलान्रोगान्दुरात्मोपकृतीरिव ।
अयं हि सर्वरोगघ्नो भेषजेषु प्रशस्यते ॥ १०५ ॥
धार्मिकेष्विव सर्वेषु दयावानिव मानवः ।
रसोऽयं नन्दिना दिष्टः प्रदिष्टो मेहहारिषु ॥ १०६ ॥

**अथोदयभास्करः**—पारदं भागमेकं तु गन्धकं टङ्कणं तथा ।
अभ्रकं लोहमेवं तु भागमेकं पृथक्पृथक् ॥ १०७ ॥
शिलाधातुस्तथा भागमम्लवेतसभागकम् ।
कट्फलं भागमेकं तु वङ्गेन सह योजयेत् ॥ १०८ ॥
रसं च पञ्चमूत्रेण दिनानि त्रीणि मर्दयेत् ।
सर्वमेकत्र संयोज्य जम्बीररससंयुतम् ॥ १०९ ॥
मर्दयेद्दिनचत्वारि खल्वके बुद्धिमान्भिषक् ।
मूषिकालेपनं कुर्यान्मांसीगोक्षुरसंयुतम् ॥ ११० ॥
मर्दयेच्च यथायोग्यं दिनानामेकविंशतिः ।
पुटमध्ये परिस्थाप्य कुक्कुटीमात्रके दहेत् ॥ १११ ॥

---

१ क. ठ. ड. संयुतः । २ क. °न व्योमस° । ३ च. पट्टचूर्णं । ४ घ. तत्तन्मेह° । ५ क. दिष्टोऽनुत्कृष्टो । घ. दिष्ट उत्कृष्टो । ६ झ. प्रकृष्टो । ७ क. मेलयेत् । ८ घ. रसकं प° ।

शीतलं तं समादाय भावयेच्च यथाक्रमम् ।
कुमारीचित्रकव्योषजातीफलहियावली ॥ ११२ ॥
विषमुष्टिं नखं चाम्लवेतसं परिमर्दयेत् ।
शोषं कृत्वा यथायोग्यं दिनमेकं पृथक्पृथक् ॥ ११३ ॥
तं शुद्धं वल्लमात्रं तु दापयेद्बुद्धिमान्भिषक् ।
मेहस्य मधुना युक्तं प्रयोज्यं भिषजां वरैः ॥ ११४ ॥
शर्करार्द्रकसंयुक्तं रक्तपित्ते प्रयोजयेत् ।
त्रिंशद्दिनानि दातव्यं शूले च त्रिफलाजलैः ॥ ११५ ॥
मधुना चातिसारस्य श्वासकासस्य शर्करा ।
क्षीरेण चाग्निमान्द्यस्य तैलकाञ्जिकसंयुतम् ।
सिद्धनाथेन संप्रोक्तो नाम्ना हृदयभास्करः ॥ ११६ ॥

**अथ हिमांशुः**—पिष्ट्वा कार्पासतक्रे रसधरणदशा तुल्यनागं कपित्था-
निर्यासं पञ्चनिष्कं निहितशतजलारातिबीजं च पश्चात् ।
पिण्डान्कृत्वाऽथ तेन प्रतिदिनमथ तत्पिण्डमेकं कपित्था-
निर्यासे पादनिष्कं मथितमधुयुतं मेहजालं रुणद्धि ॥ ११७ ॥
रसस्य कर्षमादाय खल्वे निक्षिप्य बुद्धिमान् ।
रक्तागस्त्यप्रसूनस्य स्वरसेन विमर्दयेत् ॥ ११८ ॥
सप्तवारं तथा साधु श्वेतदूर्वारसेन च ।
निष्कद्वयं टङ्कणं च कर्षं खादिरसारतः ॥ ११९ ॥
कर्पूरं रसतुल्यं च सर्वमेकत्र मर्दयेत् ।
यावच्चिक्कणतां याति युक्त्या चन्दनवारिणा ॥ १२० ॥
हरेणुमात्रान्वटकाञ्छायायां परिशोषितान् ।
प्रातः प्रातश्च सेवेत मध्याह्ने च विशेषतः ॥ १२१ ॥
निशायां च विशेषेण [1]सेवनीयं प्रयत्नतः ।
एतद्धि [2]मेहनुद्द्रव्यं मुखशोषहरं परम् ॥ १२२ ॥
सोमरोगहरं सर्वपिटिकानाशनं परम् ॥ १२३ ॥

**अथ वसन्तकुसुमाकरः**—[4]द्विभागौ हेमभूतेश्च गगनं चापि तत्समम् ।
लोहस्य च त्रयो भागाश्चत्वारो रसभस्मनः ॥ १२४ ॥
वङ्गभस्म त्रिभागं स्यात्सर्वमेकत्र कारयेत् ।
प्रवालं मौक्तिकं चैव रससाम्येन योजयेत् ॥ १२५ ॥

१ क. °रदशो तु°। २ ङ. सेवनीयः । ३ ग. मेरुरुद्राभ्यां मु°। ४ घ. द्वौ भागौ हेमरजतौ ग°।

भावना गव्यदुग्धेन इक्षुवाळारसेन च ।
हरिद्रावारिजेनैव मोचाकन्दरसेन च ॥ १२६ ॥
शतपत्ररसेनैव मालत्याः कुसुमेन च ।
उशीरद्वयनीरेण सप्त सप्त च संख्यया ॥ १२७ ॥
पश्चान्मृगमृदा भाव्यं सुसिद्धो रसराड्भवेत् ।
कुसुमाकरविख्यातो वसन्तपदपूर्वकः ॥ १२८ ॥
गुञ्जामात्रं ददीतास्य मधुना सर्वमेहजित् ।
क्षयकासतृषाश्वासरक्तपित्तविषार्तिजित् ।
सिताचन्दनसंयुक्तश्चाम्लपित्तादिरोगनुत् ॥ १२९ ॥

अथ मेहारिः—पारदभस्मशिलाजतुकृष्णालोहमलत्रिफलाकुलिबीजम् ।
ताप्यनिशारजकोपलकान्तव्योषरजः खपुरश्च कपित्थात्॥१३०॥
सर्वमिदं परिचूर्ण्य समांशं भावितभृङ्गरसं दिवसादौ ।
विंशतिवारमिदं मधुलेहं विंशतिमेहहरं हरिदष्टम् ॥ १३१ ॥
सूतं बाहुमितं बलिं शशिमितं संमर्द्य तत्कज्जलीं
कृत्वा कृष्णहिरण्यतोयसहितं संमर्द्य घस्रं पुनः ।
कूप्यामभ्रककालिकां सुपिहितां मृत्स्नांशुकैः सप्तभिः
संवेष्ट्य त्रिदिनं विशोष्य लवणापूर्णे क्षिपेद्भाण्डके ॥ १३२॥
दग्ध्वा यामचतुष्टये तु शिशिरां भित्त्वा च तां कूपिकां
तं सूतं द्विलवं लवं च गगनं लोहं लवं मर्दयेत् ।
सिद्धो वल्लमितः सिता च मधुना वत्सादनीसत्त्वतो
नोचेत्क्षौद्रकणायुतश्च तरसा सर्वप्रमेहाञ्जयेत् ॥ १३३ ॥
रोगाधीश्वरपाण्डुकामलहरिद्राभत्वपित्तोद्भवा-
न्सर्वांश्च मदरामयान्विजयते मेहारिनामा रसः ॥ १३४ ॥

अथ मेहबद्धरसः—भस्मसूतं मृतं कान्तं मुण्डभस्म शिलाजतु ।
ताप्यं शुद्धं शिलाव्योषं त्रिफलाङ्कोलबीजकम् ॥ १३५ ॥
कपित्थरजनीचूर्णं समं संभाव्य भृङ्गिना ।
त्रिंशद्वारं विशोष्याथ मधुयुक्तं लिहेत्सदा ॥
निष्कमात्रं हरेन्मेहान्मेहबद्धो रसो महान् ॥ १३६ ॥

---

१ च. °त्थान् । २ घ. हरदिष्टम् । ३ घ. तत्सिद्धं द्वि° । ४ क. ड. °ङ्कोलषी° । ५ क. भाव्यं च ।
६ ख. ठ. ड. °न्मेघष° ।

**अथ हरिशंकररसः**—महानिम्बस्य बीजानि षण्निष्कं पेषितानि तु ।
पलं तण्डुलतोयेन घृतनिष्कद्वयेन च ॥ १३७ ॥
एकीकृत्य पिबेच्चानु हन्ति मेहं चिरंतनम् ।
मृतं सूताभ्रकं तुल्यं धात्रीफलनिजद्रवैः ॥ १३८ ॥
सप्ताहं भावयेत्खल्वे रसोऽयं हरिशंकरः ।
माषमेकां वटीं खादेन्नीलमेहप्रशान्तये ॥ १३९ ॥
पूर्वयोगानुपानं स्यादसाध्यं साधयेत्क्षणात् ॥ १४० ॥२००० ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये मूत्रकृच्छ्राश्मरीमेहसोमरोगपिटिकाचिकित्सितं नाम सप्तदशोऽध्यायः ॥ १७ ॥

---

अथाष्टादशोऽध्यायः ।

[ अथ विद्रध्यादिचिकित्सनम् । ]

**अथ विद्रधिचिकित्सा**—अन्नैरध्युषितोष्णशुष्कपरुषैरन्यैरसृग्दूषणै-
र्वक्रैर्वा शयनादिभिस्तनुभृतामन्तर्बहिर्वोत्थितः ।
मेदस्त्वक्पलकण्डरास्थिरुधिरं गाढं प्रदूष्य कृतो
वृत्तः स्यादथवायतोऽधिकरुजः शोथस्त्वसौ विद्रधिः ॥ १ ॥

**अथ सर्वेश्वरपर्पटी**—रसोपरसलोहानि कार्षिकाणि पृथक्पृथक् ।
तेषु लोहानि सर्वाणि पाषाणाः कठिनास्तथा ॥ २ ॥
घनसत्त्वं च तत्सर्वं भस्मीकृत्य प्रयोजयेत् ।
रत्नानि वल्लतुल्यानि भस्मीकृत्य च सर्वशः ॥ ३ ॥
एभिश्चतुर्गुणः सूतो गन्धस्तस्माच्चतुर्गुणः ।
कृत्वा कज्जलिकां ताभ्यां क्षिपेल्लोहस्य भाजने ॥ ४ ॥
प्रद्राव्य बदराङ्गारैर्निक्षिपेत्तदनन्तरम् ।
रसोपरसलोहानां रत्नानामपि सर्वशः ॥ ५ ॥
चूर्णं भस्म च निक्षिप्य काष्ठेनाऽऽलोड्य मेलयेत् ।
ततश्च षोडशांशेन मिश्रयित्वाऽरुणं विषम् ॥ ६ ॥
गोमयोपरि निक्षिप्य निक्षिपेत्कदलीदले ।
पत्रेणान्येन रम्भायाः समाच्छाद्य प्रयत्नतः ॥ ७ ॥

---

१ घ. एलात°। ज. पलत°। २ क. ठ. वटीकृत्य । ३ घ. °षमेकं व°। ङ. °षमात्रं व°। ४ क. °र्हिर्वा स्थितः । ५ च. मेदूस्थाफलक°। ६ च. गाढः प्रदुष्टः कृ°। ७ ङ. °षाणः कठिनस्त°।

कराभ्यां चिपिटीकृत्य क्षिपेदुपरि गोमयम् ।
ततः शीतं समाकृष्य चूर्णयित्वा च पर्पटीम् ॥ ८ ॥
विनिक्षिपेत्करण्डान्तः संपूज्य रसभेषजम् ।
सर्वेश्वराभिधानेयं पर्पटी परिकीर्तिता ॥ ९ ॥
सर्वलोकहितार्थाय नन्दिनेयं प्रकीर्तिता ।
रक्तियुक्तसमानेयं मरिचार्द्रसमन्विता ॥ १० ॥
विद्रधौ षट्प्रकारायां देया वर्ध्मसु सप्तसु ।
क्षयरोगेषु सर्वेषु पाण्डुरोगे विशेषतः ॥ ११ ॥
ग्रहणीरोगभेदेषु गुल्मेष्वष्टविधेषु च ।
मूलरोगेष्वशेषेषु प्लीहार्थे यकृदामये ॥ १२ ॥
प्रमेहे सोमरोगे च प्रदरे जठरार्तिषु ।
विशेषेण च मन्दाग्नौ सर्वेष्वावर्तकेषु च ॥ १३ ॥
अनुक्तेष्वपि रोगेषु तत्तदौचित्ययोगतः ।
रसोऽयं खलु दातव्यः शिवतुल्यपराक्रमः ॥ १४ ॥
यद्यद्द्रव्यमसात्म्यं हि जनानामुपजायते ।
तत्सर्वं सात्म्यमायाति रसस्यास्य निषेवणात् ॥ १५ ॥
पीतं हालाहलं तोयं पर्वताग्रे वरोद्धतम् ।
सलिलं तैलतत्तुल्यं निर्जलं स्यात्सुवारिणा ।
दुःसाध्यो विद्रधिर्मासाच्छान्तिमाप्नोति निश्चितम् ॥ १६ ॥

[ इति सर्वेश्वरपर्पटीरसः ।

वरुणावल्कलक्वाथैर्हिङ्गुकासीससैन्धवम् ।
शिलाजतुसमायुक्तमसाध्यं विद्रधिं जयेत् ॥ १७ ॥
क्वाथं शिग्रुवचाश्वत्थहिङ्गुसैन्धवचूर्णितैः ।
संयुक्तं पाययेच्छान्त्यै विद्रधीरोगपीडितम् ॥ १८ ॥
हरिद्राकन्दमङ्कोलतण्डुलं गन्धकं गुडम् ।
मूलानि च महाभेर्याः पृथगर्धपलान्वितम् ॥ १९ ॥

---

१ घ. °टीकृत्वा क्षि°। २ क. °ण्डातं सं°। च. °ण्डाते सं°। ३ ग. °कारेयं दे°। ४ च. ङ. हि जानतामु°। ५ ङ. जन्मनामु°। ६ ग. °यं सर्वतोग्रावरोद्धृतम् । ङ. °यं पर्वताग्रपरो°। च. °यं सर्वतो ग्रावरो°। ज. °यं पर्वताग्रे परो°। ७ घ. °ल्यं तज्जलं स्यात्सुधोपमम् । ङ. °ल्यं तज्जलं स्यात्सुधासमम् । ८ ङ. °क्वाथे हिङ्गु°। ९ ङ. °समं पेयम°। १० ज. क्वाथः शिग्रुत्वचोत्थश्च हि°।

तुत्थं च पञ्चपलिकं नारीस्तन्येन पेषितम् ।
लिप्तं मूलान्धमूषासु धमनात्सत्त्वमाहरेत् ॥ २० ॥
शस्तं क्षाररसेष्वेतत्पोटल्याः पचनादनु ।
घृतेनाऽऽवर्तिते तस्मिन्निष्कद्वितयसंमिते ॥ २१ ॥
प्रवेशितं निष्करसं महाजम्बीरनीरतः ।
अम्लपिष्टं शरावान्तर्लिप्तं मृद्वस्त्रमुद्रितम् ॥ २२ ॥
अधरोत्तरदत्तानां भ्रष्टानामाढके स्थितम् ।
वालुकानां तथाभूतैः खारीपरिमितैस्तुषैः ॥ २३ ॥
पक्वं शीतं कृतं क्षुण्णमष्टौ निष्कानि खर्परात् ।
चत्वारि सुरभं स्थूलं घनवर्तुलनीरुजाम् ॥ २४ ॥
पीताभानां सगर्भत्वाद्वराटानां च षोडश ।
अम्लस्य सार्धप्रस्थेन श्लक्ष्णपिष्टानि पात्रयोः ॥ २५ ॥
जम्बीरमूलिकाकल्केनान्तर्लिप्तानि लिप्तयोः ।
पचेच्छुष्ककरीषाणामर्धभारेण सूतकम् ॥ २६ ॥
कृष्णवर्णोऽनुपक्वोऽसौ सुपक्वः शङ्खपाण्डुरः ।
काचशङ्खमये पात्रे धारणीयः सुरक्षितः ॥ २७ ॥
पेटचूर्णवशात्सर्वानामयान्विनियच्छति ॥ २८ ॥ इति विद्रधिचिकित्सा ।

## अथ वृद्धिचिकित्सा ।

अथ वातारिः—चूर्णं दारुहरिद्राया गवां मूत्रैस्त्रिनिष्ककम् ॥ २९ ॥
चित्रं चिरोत्थितां हन्ति अन्त्रवृद्धिं न संशयः ।
रसो वातारिनामा यः सोऽत्र देयः पिबेदनु ॥ ३० ॥
एरण्डतैलकर्षैकं गवां क्षीरं दलद्वयम् ।
अण्डवृद्धिहरं ख्यातं मासमात्रान्न संशयः ॥ ३१ ॥
रसभागो भवेदेको द्विगुणो गन्धको मतः ।
त्रिभागा त्रिफला ग्राह्या चतुर्भागश्च चित्रकः ॥ ३२ ॥
गुग्गुलुः पञ्चभागः स्यादेरण्डस्नेहमर्दितः ।
क्षिप्त्वाऽत्र पूर्वकं चूर्णं पुनस्तेनैव मर्दयेत् ॥ ३३ ॥
गुटिकां कर्षमात्रां तु भक्षयेत्प्रातरेव हि ।
नागरैरण्डमूलानां क्वाथं तदनु पाययेत् ॥ ३४ ॥

---

१ ग. °तं नालान्ध°। २ क. °लान्धमू°। ३ च. क्षारं र°। ४ झ. °टल्या प°। ५ घ. शीतिक्र°। ६ घ. °रुजा। ७ च. पत्रयोः। ८ झ. प्रयत्नतः। ९ घ. पुटचू°। १० ज. °मूत्रे त्रिनि°। ११ घ. पिबेच्चिरो°। १२ घ. °न्ति ह्यन्त्र°। १३ घ. क्षीरद°।

अभ्यज्यैरण्डतैलेन स्वेदयेत्पृष्ठदेशकम् ।
विरेके तेन संजाते स्निग्धमुष्णं च भोजयेत् ॥ ३५ ॥
वातारिसंज्ञको ह्येष रसो निर्वातसेवितः ।
मासेन सुखयत्येव ब्रह्मचर्यपुरःसरः ॥
विजयागुटिकां रात्रौ स्वल्पमात्रां च भक्षयेत् ॥ ३६ ॥
कर्षैकं तिलतैलं तु पलैकं चाऽऽर्द्रकद्रवम् ।
यः पिबेत्प्रातरुत्थाय तस्यान्त्रवृद्धिहृद्भवेत् ॥ ३७ ॥
गोमूत्रैरण्डतैलं च च्छागमांसरसं तथा ।
त्रिफलाक्वाथतुल्यांशं तैलशेषं विपाचयेत् ॥ ३८ ॥
तत्तैलं तु पिबेत्कर्षमान्त्रवृद्धिप्रशान्तये ।
दध्यारनालमदिरामातुलुङ्गरसैः समैः ॥ ३९ ॥
ताम्रचूडरसैस्तुल्यं तैलं वा घृतमेव वा ।
स्नेहशेषं पचेत्सर्वं तत्पिबेदन्त्रवृद्धिजित् ॥ ४० ॥
अन्त्रवृद्धिहरं पाने मायूरात्तित्तिराद्रसम् ।
वार्ताकं कुक्कुटं पक्त्वा तद्रसं पानभोजने ॥ ४१ ॥
योजयेदन्त्रवृद्ध्यार्ते शममाप्नोति नान्यथा ॥४२॥ इत्यन्त्रवृद्धिचिकित्सा ।

**अथ गुल्मचिकित्सा**—उद्गारबाहुल्यपुरीषबन्धतृप्त्यक्षमत्वान्त्रविकूजनानि।
आटोपमाध्मानमपक्त्यशक्तिरासन्नगुल्मस्य वदन्ति चिह्नम् ॥४३॥

**अथ गन्धकादिपोटलीरसः**—गन्धकं तालकं ताप्यं शिलाह्वं पिप्पलीकृते ।
कषाये भावयेत्तत्तुल्याः क्षीरे मूत्रे च सप्तशः ।
निष्कार्धमस्याः पोटल्याः स्यादर्धं साज्यमाक्षिकम् ॥ ४४ ॥
प्रयोज्यं सयकृत्प्लीह्नि पञ्चकोलपलाशिना ।
वर्षाभू कारवं शौण्डी सूचीवचाकिलासनम् ॥ ४५ ॥
तिलाक्षियुतमाबाणानिशाकर्कन्धुसूरिका ।
रक्तागस्त्येन्दुरेखाब्दनीलज्योतिरयोमृतम् ॥ ४६ ॥
वल्कलं बहुवेल्लयाः कृष्णकाम्बोजिकाफलम् ।
गवाक्षीरजनीकृष्णानिम्बवेल्लकटिल्लकम् ॥ ४७ ॥

---

१ ग. ठ.ड. °सरम् । २ क. °मात्रं वृ° । ३ घ. °हरः पा° । ४ झ. मायूरं तैत्तिरं रसम् । ५ घ. °ब्रसः । ६ घ. ठ. °ये तु भजेत्तनु° । ७ झ. °मस्य पो° । ८ झ. °टल्या अर्धं स्यादाज्य° । ९ झ. प्रयोज्यः । १० च °लखलाशिनः । ११ ड. °पलांशि° । १२ घ. कारवी । १३ घ. °सूकरी । १४ घ. °हुवल° । १५ ग. कृष्णाका° ।

मानिकांशं पृथक्क्षुण्णं तुल्यं भूशर्करांघ्रतम् ।
त्रिफलाबीजतैलेन भावितं कर्षसंमितम् ॥ ४८ ॥
प्राह्णे घृतेन मध्याह्ने गुडेन मधुना निशि ।
पोदं पादार्धमात्रं वा पोटल्याश्च रजो भवेत् ॥ ४९ ॥
हैयङ्गवीनशाल्यन्नकृष्णगोक्षीरवर्तत्पुनः ।
एवं वर्षत्रयं कुर्यात्स्याद्वलीपलितोज्झितः ॥ ५० ॥
प्रत्यहं मण्डलं खादेदपथ्यं त्यक्त्वा ततःपरम् ।
इष्टाहारविहारी च सहस्रायुर्भवेत्परम् ॥ ५१ ॥

**अथ वङ्गेश्वरः**—भस्मसूतं वङ्गभस्म पलैकैकं प्रकल्पयेत् ।
गन्धकं मृतताम्रं च प्रत्येकं च पलं पलम् ॥ ५२ ॥
अर्कक्षीरैर्दिनं मर्द्यं सर्वं तद्गोलकीकृतम् ।
रुद्ध्वा तद्भूधरे पच्यात्पुटैकेन समुद्धरेत् ॥ ५३ ॥
एष वङ्गेश्वरो नाम प्लीहगुल्मोदरापहः ॥ ५४ ॥
घृतैर्गुञ्जाद्वयं लेह्यं निष्कं श्वेतपुनर्नवा ॥
गवां मूत्रैः पिबेच्चानु रजनीं वा गवां जलैः ॥ ५५ ॥

**अथ शिखिवाडवः**—पञ्चाङ्गदेवदाल्यास्तु चूर्णकर्षं शिवाम्बुना ।
मासमात्रं पिबेद्यस्तु प्लीहा तस्य करोति किम् ॥ ५६ ॥
लवणं रजनी राजी प्रत्येकं पलपञ्चकम् ।
चूर्णितं निक्षिपेद्भाण्डे शततक्रपलान्विते ॥ ५७ ॥
त्रिदिनं मुद्रितं रक्षेत्पश्चात्पञ्चपलं सदा ।
पीत्वा विनाशयेत्प्लीहं त्रिःसप्ताहान्न संशयः ॥ ५८ ॥
समूलपत्रमेरण्डं रुद्ध्वा भाण्डे पुटे पचेत् ।
तत्कर्षं पलगोमूत्रैः पीतं प्लीहविनाशनम् ॥ ५९ ॥
शरपुङ्ख्यर्कयोर्मूलं चिरं दन्तैश्च चर्वितम् ।
गिलितं नाशयेत्प्लीहं यवागूपानमाचरेत् ॥ ६० ॥
वज्रक्षारं तु कर्षैकं भक्ष्यं प्लीहविनाशनम् ।
काञ्चनीमूलचूर्णं तु निष्कमात्रं तथा पिबेत् ॥ ६१ ॥

---

१ ज. °रामृत°।ङ. °रायुत°।२ घ. पादपा°। ३ ग. हैयङ्गवीनं शाल्यन्नं कृष्णा गो°। ४ ङ. °वर्तिनः। ५ ङ.कुर्वन्त्स्याद्व°। ६ घ. °देत्काथं त्य°। ७ घ. च चतुष्पल°। ८ घ. पश्चात्पु°। ९ ग. एवं। १० घ. °रा- ञयेत्। ११ च. °श्चाङ्गं दे°। १२ क. चूर्णं क°। १३ च. करोतु। १४ ग. °क्रफला°। १५ घ. °पुङ्खार्क°। १६ घ. दन्तेन। १७ घ. °हहरं परम्।

सुरया काञ्जिकैर्वाऽथ हन्ति प्लीहं चिरंतनम्।
प्लीहानां पृष्ठदेशे तु रक्तस्रावं च कारयेत्।
अर्कक्षीरं ससिन्धूत्थं क्षिपेत्तत्र रुजापहम्॥ ६२॥
मारितं सूततांम्राभ्रं गन्धकं माक्षिकं समम्।
मर्दयित्वाऽऽर्द्रकद्रावैर्यवक्षारयुतैर्दिनम्॥ ६३॥
त्रिगुञ्जं भक्षयेन्नित्यं नागवल्लीदलेन च।
वातगुल्महरः ख्यातो रसोऽयं शिखिवाडवः॥ ६४॥
विडङ्गं दाडिमं हिङ्गु सैन्धवैलासुवर्चलम्।
मातुलुङ्गरसैः पिष्ट्वा कर्षैकं सुरया सह॥ ६५॥
वातगुल्महरं देयमनुपानं सुखावहम्॥ ६६॥

**अथ दीप्तामरः**—शुद्धं सूतं समं गन्धं सूतांशं मृतताम्रकम्।
शाकवृक्षोत्थपञ्चाङ्गद्रवैर्मर्द्यं दिनत्रयम्॥ ६७॥
दिनं सर्पाक्षिजैर्द्रावै रुद्ध्वा गजपुटे पचेत्।
पञ्चधा भूधरे चाथ चूर्णं जेपालतुल्यकम्।
द्विगुञ्जं भक्षयेच्चाऽऽज्यैः पित्तगुल्मप्रशान्तये॥ ६८॥
द्राक्षाहरीतकीकाथमनुपानं प्रकल्पयेत्।
रसो दीप्तामरो नाम पित्तगुल्मं नियच्छति॥ ६९॥

**अथ विद्याधरः**—गन्धकं तालकं ताप्यं मृतताम्रं मनःशिलाम्।
शुद्धं सूतं च तुल्यांशं मर्दयेद्भावयेद्दिनम्॥ ७०॥
पिप्पल्यास्तु कषायेण भावयेत्स्नुग्भवेन च।
निष्कार्धं भक्षयेत्क्षौद्रैर्गुल्मं प्लीहं विनाशयेत्॥ ७१॥
रसो विद्याधरो नाम गोमूत्रं च पिबेदनु॥ ७२॥

**अथ रक्तोदरकुठारः**—तिलकाथो गुडं चाऽऽज्यं व्योषभार्ङ्गीरजोन्वितम्।
पानं रक्तभवे गुल्मे नष्टपुष्पे तु योषितः॥ ७३॥
देवदारुकणाभार्ङ्गीशुण्ठीकरञ्जवल्कलम्।
चूर्णं तिलानां काथेन रक्तगुल्महरं भवेत्॥ ७४॥
पारदं शिखितुत्थं च जेपालं पिप्पलीसमम्।
आरग्वधफलान्मज्जा वज्रीदुग्धेन भावयेत्।
सूक्ष्ममात्रां वटीं खादेत्स्त्रीणां हन्याज्जलोदरम्॥ ७५॥

---

१ च. प्लीहिनां। २ क. ठ. ढ. सुखावहम्। ३ क. °क्लीद्रवेन। ४ च. पूर्णं। ५ घ. नष्टे पु°। ६ ग. च। ७ च. °रजव°।

चिञ्चाफलरसं चानु पथ्यं दध्योदनं हितम् ।
रक्तोदरं हरेत्सैव कठिनं रेचयेदनु ॥ ७६ ॥

**अथ वैश्वानररसः**—विष्णुक्रान्ता च जेपालं लाङ्गली सुरदारिका ।
यवचिञ्चाम्बुसारेण तासां द्विगुणगन्धकम् ॥ ७७ ॥
पक्षं विमर्दितं सूतं स्वेदयेन्मृदुनाऽग्निना ।
गुल्मे गुञ्जात्रयं चास्य सोष्णाम्बुघृतसैन्धवम् ॥ ७८ ॥
वातजे कफजे लिह्यान्मध्वार्द्रकसमन्वितम् ।
ससितामाक्षिकं पैत्ते सोऽयं वैश्वानरो रसः ॥ ७९ ॥

**अथाग्निकुमारः**—नेपालवैगन्धरसत्रयाणां फलत्रयस्यापि कटुत्रयस्य ।
मूत्रे गवां षोडशभागमाने भागान्नवैकत्र दिनत्रयं च ॥ ८० ॥
विमर्द्य तेषां बदरप्रमाणां बद्ध्वा वटीमुष्णजलानुपानात् ।
एकत्र युक्ता सहसा निहन्ति सा रेचयित्वा मलजालमादौ ॥ ८१ ॥
गुल्मं यकृत्पाण्डुविबन्धशूलं मान्द्यं ज्वरं चाथ जलोदरं च ।
अग्नेः कुमारः सहसा निहन्यादुद्दीपितो दीप इवान्धकारम् ॥ ८२ ॥

## अथ सर्वाङ्गसुन्दरः प्राणेश्वरो रसः ।

शुभ्रमभ्रं रसं गन्धं मेलयित्वा समांशकम् ।
तालमूलीरसैर्मर्द्य कल्कं संपादयेच्छुभम् ॥ ८३ ॥
तत्कल्कं कूपिकामध्ये कृत्वा वक्त्रं निरुन्धयेत् ।
खटिन्या मुखमाच्छाद्य मृदा खर्परसंज्ञया ॥ ८४ ॥
कूपिकां लेपयेत्सर्वां शोषयेदातपे खरे ।
कूपिकां भूगतायां च कृत्वा तां पुटयेत्ततः ॥ ८५ ॥
कूपिकां मर्दयेत्कृत्स्नां खटिन्या सह संयुताम् ।
त्रिभिः क्षारैस्तु तच्चूर्णं पञ्चभिर्लवणैस्तथा ॥ ८६ ॥
त्र्यूषणं त्रिफला हिङ्गु पुरमिन्द्रयवास्तथा ।
गुञ्जाकिनी तथा चित्रमजमोदा यवानिका ॥ ८७ ॥
एतानि समभागानि समादाय विचूर्णयेत् ।
योजयेत्सह सूतेन ततः सिध्यति सूतकः ॥ ८८ ॥
सिद्धसूतस्य चूर्णेन माषं सर्वरुजापहम् ।
भक्षयेत्प्रातरुत्थाय रसः सर्वाङ्गसुन्दरः ॥ ८९ ॥

---

१ घ. °त्सैवं क° । २ ग. कथितं । ३ घ. ठ. विशाला । ४ घ. ङ. °दालिका । ५ च. °श्चा च सा° । ६ ङ. °पित्ते । ७ घ. जेपा° । ८ घ. °रसागृमाणां । ङ. °रसाभ्रिमाणान्फल° । ९ च. °माणं ब° । १० च. युक्त्वा । ११ ग. शुद्धम° । १२ च. खदिन्या । १३ ङ. °येत्सिद्धस्° । १४ च. °तकपर्णे° ।

उष्णोदकानुपानं तु पाययेत्तुल्लकद्वयम् ।
भक्षयेदेकवारं तु द्विवारं न कथंचन ॥ ९० ॥
दिनमध्ये वारमेकं दातव्यो भिषजा रसः ।
शीतोदकं सकृद्देयं तृड्भावेऽप्यहर्निशम् ॥ ९१ ॥
भोजने वर्जयेत्तत्र शाकाम्लं द्विदलं तथा ।
तैलाभ्यङ्गं ब्रह्मचर्यं वर्जयेच्छयनं दिवा ॥ ९२ ॥
हितं तत्सेवयेत्पथ्यमहितं च विवर्जयेत् ।
अनेनैव प्रकारेण योजयेत्प्रतिवासरम् ॥ ९३ ॥
यस्त्वचेतनतां याति संनिपाती कथंचन ।
तस्य नातिप्रयोक्तव्यो रसो यत्नाद्भिषग्वरैः ॥ ९४ ॥
देवाग्निऋषिविप्रांश्च कुमारीयोगिनीगणान् ।
पूजयित्वा यथाशक्त्या सेव्यः प्राणेश्वरो रसः ॥ ९५ ॥
गुल्मं वाऽष्टविधं वातं शूलं च परिणामजम् ।
संनिपातज्वरं चैव प्लीहानमपकर्षति ॥ ९६ ॥
कामलां पाण्डुरोगं च मन्दाग्निं ग्रहणीं तथा ।
शिववत्सेवितो हन्ति रसः प्राणेश्वरस्त्वयम् ॥ ९७ ॥

**अथ गुल्मनाशनः**—गन्धकं रसतुल्यं च द्विभागं सैन्धवस्य च ।
त्रिभागं टङ्कणं प्रोक्तं चतुर्भागं च तुत्थकम् ॥ ९८ ॥
पञ्चमं तु वराटं स्यात्षड्भागं शङ्खमेव च ।
वह्निमूलकषायेण चिरबिल्वरसेन च ॥ ९९ ॥
आर्द्रकस्य रसेनात्र प्रत्येकं तु पुटत्रयम् ।
तत्समं मारिचं चूर्णं शाणार्धं भक्षयेन्नरः ॥ १०० ॥
पञ्चगुल्मं क्षयं श्वासं मन्दाग्निं चाऽऽशु नाशयेत् ॥ १०१ ॥

## अथ शूलचिकित्सा ।

**अथाग्निमुखः**—मृतसूताभ्रकं ताम्रं गन्धकं चाम्लवेतसम् ।
विषं फलत्रयं तुल्यं सर्वं मर्द्यं दिनावधि ॥ १०२ ॥
विषमुष्टिजया वासा विजया रक्तशाकिनी ।
बृहती च महाराष्ट्री धत्तूरः पञ्चपत्रकः ॥ १०३ ॥

---

१ घ. °क्षुलुक°। २ च. वा । ३ ग. तृड्भा°। ४ घ.ठ.विदलं । ५ च. तदा । ६ घ. °येत्ससवा°। ७ घ. °मिगुरुवि°। ८ क. °लमं चाष्ट°। ९ घ. वातशू°। १० क. गुल्मारिः । ११ घ. °सेनैव प्र°। १२ क. पलत्रयं ।

नागवल्ली शमी जम्बू भाव्यमेभिर्द्रवैस्त्र्यहम् ।
समांशं पञ्चलवणं दत्वाऽऽर्द्रकरसेन च ॥ १०४ ॥
दिनं पेष्यं ततः कुर्याद्वटिकां चणमात्रकाम् ।
भक्षयेद्वातशूलार्तः सोऽयमग्निमुखो रसः ॥ १०५ ॥

**अथ त्रिनेत्रः**—हरीतकी प्रतिविषा हिङ्गु सौवर्चलं वचा ।
कलिङ्गेन्द्रयवास्तुल्यं पाययेदुष्णवारिणा ॥ १०६ ॥
कर्षैकमनुपानं स्याद्वातशूलहरं परम् ।
चिञ्चाक्षारं जलैः पीतं शूलं शान्तिमवाप्नुयात् ॥ १०७ ॥
खण्डितं हारिणं शृङ्गं स्वर्णं शुल्बं मृतं रसम् ।
दिनैकं चाऽऽर्द्रकद्रावैर्मर्द्यं रुद्ध्वा पचेत्पुटे ॥
त्रिनेत्राख्यो रसः सोऽयं माषं मध्वाज्यकैर्लिहेत् ॥ १०८ ॥

**अथ चिन्तामणिः**—सैन्धवं जीरकं हिङ्गु मध्वाज्याभ्यां लिहेदनु ।
पङ्क्तिशूलहरं ख्यातं मासमात्रान्न संशयः ॥ १०९ ॥
टङ्कणं मूर्छितं सूतं यवक्षारं समं समम् ॥ ११० ॥
चूर्णितं भक्षयेन्माषं मधुना पक्तिशूलनुत् ।
जम्बूमांसाज्ययोर्यूषमनुपानं पिबेत्सदा ॥ १११ ॥
सूतं च गन्धं द्विगुणं विमर्द्य कोरण्टनिम्बूत्थरसैर्दिनं तत् ।
चिञ्चोद्भवः क्षाररसेन चैकं दिनं च गोलं रविसंपुटस्थम् ॥११२॥
लिप्त्वा मृदा शुष्कमतीव कृत्वा सामुद्रयन्त्रेण पुटं ददीत ।
उद्धृत्य शीतं रसपादभागं प्रक्षिप्य गन्धं विपचेन्मनाक्च ॥११३॥
विषं च दत्वा रसपादभागं लोहस्य पात्रे तु कृशानुतोयैः ।
रसस्तु चिन्तामणिरेष उक्तो वातारितैलेन समाक्षिकेण ।
वल्लेन मानं प्रददीत चाम्लं तैलं च शीतं परिवर्जयेच्च ॥११४॥
हन्ति गुल्मं सहाध्मानं तूनीं प्रतितूनीमपि ॥ ११५ ॥

**अथ शूलकेसरी**—शुद्धं सूतं द्विधा गन्धं यामैकं मर्दयेद्दृढम् ।
द्वयोस्तुल्यं शुद्धताम्रं संपुटे तन्निरोधयेत् ॥ ११६ ॥
ऊर्ध्वाधो लवणं दत्वा मृद्भाण्डे धारयेद्भिषक् ।
रुद्ध्वा गजपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् ॥ ११७ ॥

---

१ क. पेष्य । २ ज. °टिकाश्चणमात्रकाः । ३ घ. °द्ध्वा पुटे पचेत् । ४ ञ. °न्मासं म° । ५ ङ. सूतेन ग° । ६ ङ. °द्भवश्छल्लिरसे° । ७ ङ. °नात्तम् ८ घ. °त्रेऽथ कु° । ९ च. युक्तो । ज. भुक्तो । १० ग. रसो हन्ति महाध्मानं गुल्मतूनी प्रतूनिजित् । ११ घ. तूनी प्रतूनिकाम° । १२ च. मृद्भाण्डे ।

संपुटं चूर्णयेत्सूक्ष्मं पर्णखण्डे द्विगुञ्जकम् ।
भक्षयेत्सर्वशूलार्तो हिङ्गु शुण्ठी च जीरकम् ॥ ११८ ॥
वचामरिचसंचूर्णं कर्षमुष्णजलैः पिबेत् ।
असाध्यं नाशयेच्छूलं रसः स्याच्छूलकेसरी ॥ ११९ ॥

**अथ मृतोत्थापनः**—वन्ध्याला‍ङ्गलिकामूलं शङ्खं तु द्विगुणं तयोः ।
त्रयाणां भावयेच्चूर्णं त्र्यहं जम्बीरजद्रवैः ॥ १२० ॥
रुद्ध्वा गजपुटे पच्यात्तत्क्षारं मरिचैर्घृतैः ।
कर्षमात्रं पिबेच्छूली तत्क्षणात्सुखमाप्नुयात् ॥ १२१ ॥
अभ्रं ताम्रं तथा लोहं प्रत्येकं संस्कृतं पलम् ।
सर्वमेतत्समाहृत्य गृह्णीयात्कुशलो भिषक् ॥ १२२ ॥
आज्ये पलद्वादशके दुग्धे तत्स्वरसंख्यके ।
पक्त्वा तत्र क्षिपेच्चूर्णं सुपूतं घनतन्तुना ॥ १२३ ॥
विडङ्गत्रिफलावह्नित्रिकूटानां तथैव च ।
पिष्ट्वा पलोन्मितानेतान्यथा संमिश्रतां नयेत् ॥ १२४ ॥
ततः पिष्ट्वा शुभे भाण्डे स्थापयेत्तद्विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा गुरुं रविम् ॥ १२५ ॥
घृतेन मधुना मद्यैः पाययेन्माषकाधिकम् ।
अष्टौ माषान्क्रमेणैव वर्धयेत्तु समाहितः ॥ १२६ ॥
अनुपानं च दुग्धेन नारिकेलोदकेन वा ।
जीर्णशर्करशाल्यन्नमुद्गमांसरसादयः ॥ १२७ ॥
रसपानाविरुद्धानि द्रव्याण्यन्यानि योजयेत् ।
हृच्छूलं पार्श्वशूलं च आमवातं कटिग्रहम् ॥ १२८ ॥
गुल्मशूलं शिरःशूलं यकृत्प्लीहानशेषतः ।
अग्निमान्द्यं क्षयं कुष्ठं कासं श्वासं विचर्चिकाम् ॥
अश्मरीं मूत्रकृच्छ्रं च योगेनानेन साधयेत् ॥ १२९ ॥

**अथ क्षारताम्रम्**—रसेन ताम्रस्य दलानि [13]लिप्त्वा
गन्धेन ताम्रं द्विगुणेन पश्चात् ।
वस्त्रेण बद्ध्वाऽथ समुद्रजेन
क्षारत्रयेणापि च वेष्टयित्वा ॥ १३० ॥

१ घ. °येत्कृत्स्नं प°। २ घ. °मरीचं संचूर्ण्य क°। ३ च. तथा । ४ ग. तत्सरसं भवेत् । ५ घ. °रसंभवेत् । ६ ङ. °डङ्गं त्रिफलावह्निं त्रि°। ७ ग. °त्रिकटूनां । ८ ग. च । ९ घ. जीर्णं श°। १० घ. °त्प्लीहो निशे°। ११ क. वातशूलाक्तः । १२ क. वातशूलाक्तः । १३ क. दत्वा ।

मृदा च संलिप्य पुटं ददीत दलानि ताम्रस्य विचूर्णयेत्[1]।
धत्तूरचित्रार्द्रकटुत्रयैश्च विमर्दयेत्तत्रिदिनप्रमाणम् ॥ १३१ ॥
कणाप्रमाणेन[2] विषं च दत्वा वल्लं ददीतास्य च वातशूले॥१३२॥

**अथ शूलान्तकः**—भस्मसूतस्य खस्यापि पलमेकं पृथक्पृथक्।
ताम्रभस्मपले द्वे तु गन्धकस्य पलत्रयम्[3] ॥ १३३ ॥
हरितालस्य कर्षांशं विमलं[4] हेममाक्षिकम्।
पलार्धं हलिनीकन्दं नागवल्ल्यौ पलार्धकौ ॥ १३४ ॥
चतुष्पलं तु त्रिवृतमेतत्सर्वं विचूर्णयेत्।
भूधात्रीस्वरसेनैव भावयेत्सप्तधा भिषक्॥ १३५ ॥
तथा दन्तीरसैर्वल्लं दद्यादार्द्रकवारिणा।
तेन कोष्ठे विशुद्धे तु दधिभक्तं तु भोजयेत् ॥
सर्वाणि शूलानि हरेद्रसः शूलान्तको मतः ॥ १३६ ॥

**अथाग्निमुखः**—पारदं माक्षिकं ताम्रं कृष्णाभ्रं गन्धकत्रयम्।
मणिमन्थं विषं हिङ्गु त्वग्निशाकन्धकाञ्चनान् ॥ १३७ ॥
रक्तमारीषनिर्गुण्डीमहाराष्ट्रचाटरूषकम्।
जयाजयन्तीनिर्यासैस्तथा च विषतिन्दुकान् ॥ १३८ ॥
मर्दितं कुक्कुटपुटे पचेदग्निमुखाह्वयः।
अष्टगुञ्जामितः सोऽयं प्रयोज्यः साज्यनागरः ॥ १३९ ॥
हिङ्गुसौवर्चलोष्णाम्बुयुतो वा गुल्मशूलजित् ॥ १४० ॥

**अथ त्रिनेत्रः**—रसताम्रगन्धकानां त्रिगुणोत्तरवर्धितांशानाम्।
आम्लेन[5] मर्दितानां पुटपक्वानां निषेवितं भस्म ॥ १४१ ॥
गुञ्जाप्रमाणमार्द्रकसिन्धूत्थचूर्णसंयुक्तम्[6]।
एरण्डतैलमाक्षिकमथवा[7] पटुहिङ्गुजीरकोपेतम् ॥ १४२ ॥
शमयति शूलमशेषं तत्तद्रसभावितं बहुशः।
उपचूर्णैरनुपानैस्तैस्तैः सहितं कफानिलार्तिहरम् ॥ १४३ ॥
एतच्च हरिणशृङ्गं मृतकाञ्चनटङ्कणोपेतम्।
सघृतं मधु पक्तिशूलं शमयति शूलं त्रिनेत्ररसः ॥ १४४ ॥

**अथोदयभास्करः**—तोलतुल्यं रसं शुद्धं गन्धकं तच्चतुर्गुणम्।
विधाय कज्जलीं श्लक्ष्णां ततो निम्बुकवारिणा ॥ १४५ ॥

---

१ च. °येत्तान्। २ ग. कणाप्र°। ३ क. गन्धकस्य तु क°। ४ घ. विमला। ५ ग. अम्लेन। ६ ग. °न्धूत्थं चू°। ७ घ. °वा पुटहिं°।

कल्कं कुर्वीत संखल्वे यावद्यामचतुष्टयम् ।
द्वितोलमथ ताम्रस्य तनुपत्राणि सर्वशः ॥ १४६ ॥
कल्केन तेन निम्बूकरसेनाऽऽप्लाव्य खल्वके ।
स्थापयेदातपे तीव्रे पिण्डीकृत्य ततः परम् ॥ १४७ ॥
मूषामध्ये निरुध्याथ कुक्कुटाख्यैस्त्रिभिः पुटैः ।
पचेच्चुल्ल्यां विनिक्षिप्य चुल्लीपरिमितोपलैः ॥ १४८ ॥
तत आकृष्य संमर्द्य करण्डे तं विनिक्षिपेत् ।
रसोऽयं सर्वरोगघ्नो नृणामुदयभास्करः ॥ १४९ ॥
हन्ति शूलानि सर्वाणि तमांसीव दिवाकरः ।
पर्णखण्डिकया सार्धं देयश्चेत्यपरे जगुः ॥
पथ्यं रोगोचितं देयं रसस्यानुचितं त्यजेत् ॥ १५० ॥

**अथ शूलगजकेसरी**—पलप्रमाणसूतेन बलिना द्विगुणेन च ।
शुद्धत्रिपलतालेन कृत्वा कज्जलिकां त्र्यहम् ॥ १५१ ॥
पलमानेन कर्तव्यं शुद्धताम्रस्य संपुटम् ।
पिधानपात्रसंग्रस्ततलैपात्रास्यवान्खलु ॥ १५२ ॥
कज्जलीं संपुटस्यान्तर्निदध्यात्तदनन्तरम् ।
अधस्तादुपरिष्टाच्च संपुटस्याऽऽक्षिपेत्खलु ॥ १५३ ॥
आकण्ठं पटुचूर्णं तां निधाय च निरुध्य च ।
विशोष्य गजसंज्ञेन पुटेन पुटयेत्ततः ॥ १५४ ॥
पटचूर्णं विधायाथ सिन्धुमध्ये विनिक्षिपेत् ।
पथ्यार्द्रकरसोपेतो वल्लमानेन सेवितः ॥ १५५ ॥
रसो निःशेषशूलघ्नः स्याच्छूलगजकेसरी ॥ १५६ ॥

**अथ क्षारताम्रं**—पलमितमृतशुल्बं तन्मितं गन्धचूर्णं
वसुमितपलमानं तिन्तिणीक्षारचूर्णम् ।
त्रयमिदमभिदिष्टं क्षारताम्राख्यमेत-
द्धरति सकलशूलं पीतमुष्णोदकेन ॥ १५७ ॥

---

१ घ. शङ्खस्य । २ च. संमर्द्य । ३ क. ठ. पर्ण्यख° । ४ च. °पुटे । ५ क. °लपत्रा° । ६ च. °टस्याक्षि° । ७ क. आकण्ठपरिपूर्णां तां पिधाय च नि° । ८ झ. तं । ९ ग. पिधाय । घ. विधाय । १० ज. पटुचू° । ११ क. दध्यार्द्र° ।

अथ ताम्राष्टकम्—हिङ्गु व्योषं मधुकरुचकं तिन्तिणीक्षारतोः
सर्वं चैतन्मसृणमृदितं पीतमुष्णोदकेन ।
क्षिप्रं शूलं क्षपयति नृणां तीव्रपीडासमेतं
ध्वान्तं भानोरिव समुदयः साधु ताम्राष्टकं हि ॥ १५८ ॥

अथ वडवानलगुटिका—तालं तार्प्यं कनककुनटीकान्तगन्धार्कसूतै-
स्तुल्यांशैस्तैररुणमधुरं दीप्यकं सर्वतुल्यम् ।
एतैः सर्वैस्त्रिकटु च समं कज्जलीकृत्य सर्वं
हिङ्ग्वम्भोभिर्मुनिमितदिनैर्भावयेत्सप्तकृत्वः ॥ १५९ ॥
जयन्त्याः काचमाच्याश्च निर्गुण्ड्याश्चाऽऽर्द्रकस्य च ।
स्वरसैर्भावयेत्पिष्ट्वा सकृदेव दिने दिने ।
कर्तव्या मरिचैस्तुल्याश्छायाशुष्काश्च गोलिकाः ॥ १६० ॥
हन्त्येषा वडवानलाख्यगुटिका संसेवितोष्णाम्बुना
सर्वं शूलगदं कृमिं च सकलं वैषम्यवृत्तिं क्षुधः ।
मन्दाग्निं ग्रहणीगदं श्वयथुरुक्पाण्डुं च गुल्मार्शसी
वातश्लेष्मगदं तथोदररुजं श्वासं च कासं ज्वरम् ॥ १६१ ॥

अथाग्निकुमारः—रसगन्धकयोः कृत्वा कज्जलीं तुल्यभागयोः ।
पादांशममृतं दत्वा शुक्तिभस्म कलांशकम् ॥ १६२ ॥
हंसपादीरसैः सम्यङ्मर्दयित्वा दिनत्रयम् ।
स्थूलगोलं ततः कृत्वा परिशोष्य खरातपे ॥ १६३ ॥
निरुध्य वालुकायन्त्रे क्रमपुष्टेन वह्निना ।
पचेदेकमहोरात्रं ततः शीतं विचूर्ण्य च ॥ १६४ ॥
तुल्यांशममृतं दत्वा मर्दयेदार्द्रकद्रवैः ।
विलिप्य स्थालिकामध्ये ततोऽन्यस्थालिकोदरे ॥ १६५ ॥
पलार्धममृतं क्षिप्त्वा रसस्थालीं च तन्मुखे ।
न्युब्जां दत्वा दृढं रुद्ध्वा चुल्ल्यामारोप्य यत्नतः ॥ १६६ ॥
यामं प्रज्वालयेदग्निं विचूर्ण्य तदनन्तरम् ।
करण्डके विनिक्षिप्य स्थापयेदतियत्नतः ॥ १६७ ॥
रसो ह्यग्निकुमाराख्यो दिष्टो मन्थानभैरवे ॥ १६८ ॥

---

१ घ. ठ. ड. °प्यं गगनकु°। २ घ. °रिचस्थूलाश्छा°। ३ च. °वृत्तिक्षु°। ४ ग. शुल्बम°। ५ ग. क्रमेण पुटव°। ६ क. °लिमध्ये ततो°। ७ क. °रवैः ।

हन्यादत्यग्निमान्द्यं ज्वरहरमखिलं वातजातं क्षयार्तिं
शोफाढ्यं पाण्डुरोगं कफजनितगदान्प्लीहगुल्मं गुदार्तिम् ।
सर्वाङ्गीणं च शूलं जठरभवरुजं खञ्जतां पङ्गुलत्वं
सर्वांश्चासाध्यरोगान्हरिरिव दुरितं रक्तगुल्मं वधूनाम् ॥१६९॥

**अथ क्षारवटी**—शम्बूकं त्र्यूषणं पञ्च लवणानि मृतायसम् ।
समांशं पेषयेन्मूत्रैः कृष्णाजस्य दिनावधि ॥ १७० ॥
भक्षयेत्कर्षमात्रं तु परिणामाख्यशूलनुत् ।
इन्द्रवारुणिकामूलं कटुत्रयसमायुतम् ॥ १७१ ॥
पिबेदुष्णाम्बुना हन्ति शूलमत्यन्तदुःसहम् ।
भूदारुवटमूलं च शूलजित्सोष्णवारिणा ॥ १७२ ॥
सद्योभवं हरेच्छूलं लवणं वाऽऽरनालकैः ।
घृतेन सैन्धवं वाऽथ उष्णतोयैः सुवर्चलम् ॥ १७३ ॥
अमृतं मेघभस्माथ शङ्खं चिञ्चा सुभास्करम् ।
क्रमाद्द्विगुणितं कृत्वा तत्तुल्यं च कटुत्रिकम् ॥ १७४ ॥
तुलसी भृङ्गराजैश्च मातुलिङ्गार्द्रकद्रवैः ।
भावितं बहुशश्चूर्णं रजो वा गुलिकाऽपि वा ॥ १७५ ॥
गुञ्जामात्रं तु सेवेत गुल्मशूलान्विनाशयेत् ।
मन्दाग्निं ग्रहणीमर्शो गुल्मशूलमरोचकम् ।
एतत्क्षारवटी नाम कृशदेहेषु युज्यते ॥ १७६ ॥

## अथ कार्श्यचिकित्सा ।

**अथामृतार्णवः**—रसभस्म त्रयो भागा माषैकं हेमभस्मकम् ।
सर्वांशममृतासत्त्वं सितामध्वाज्यमिश्रितम् ॥ १७७ ॥
दिनैकं मर्दयेत्खल्वे माषैकं भक्षयेत्सदा ।
कृशानां कुरुते पुष्टिं रसोऽयममृतार्णवः ॥ १७८ ॥
अश्वगन्धापलार्धं च गवां क्षीरैः पिबेदनु ॥ १७९ ॥

**अथ पूर्णचन्द्रः**—मृतसूताभ्रलोहं वै शिलाजतु विडङ्गकम् ।
ताप्यं क्षौद्रघृतं तुल्यमेकीकृत्य विमर्दयेत् ॥ १८० ॥

---

१ ग. °आर्तिक्ष°। घ. °जातक्ष°। ज. °जानां क्ष°। २ घ. °ष्णान्तस्य। ३ ग. °दारव°। ४ ग.ठ.ड. °णं चार°। ५ ग. मेहभ°। ६ घ. चिन्ता°। ७ घ. °टुत्रयम्। ८ च. °जस्य मा°। ९ घ. गुल्माष्ठीला°।

पूर्णचन्द्ररसो नाम्ना माषैकं भक्षयेत्सदा ।
शाल्मलीपुष्पचूर्णं च क्षौद्रैः कर्षं पिबेदनु ॥ १८१ ॥
दुर्बलो बलमाप्नोति मासेकेन यथा शशी ।
कृशानां बृंहणं देयं सर्वं पानान्नभेषजम् ।
निद्रा चैव दिवा रात्रौ छागमांसाशनं तथा ॥ १८२ ॥

## अथ स्थौल्यचिकित्सा ।

**अथ वडवाग्निमुखः**—शुद्धसूतं मृतं ताम्रं तालं बोलं समं समम् ।
अर्कक्षीरैर्दिनं मर्द्यं क्षौद्रैर्लेह्यं द्विगुञ्जकम् ॥ १८३ ॥
वडवाग्निमुखो नाम स्थौल्यं तुन्दं नियच्छति ॥ १८४ ॥

**अथाग्निकुमारः**—पलं क्षौद्रं पलं तोयमनुपानं पिबेत्सदा ।
तत्राऽऽदौ पञ्चकर्माणि लङ्घनाद्यैरुपाचरेत् ॥ १८५ ॥
आर्द्रकं मधुना खादेन्मेदोनिलकफाञ्जयेत् ।
गन्धकेन द्विकर्षेण शुद्धसूतेन तावता ॥ १८६ ॥
विधाय कज्जलीं सूक्ष्मामेकवासरमर्दनात् ।
कर्षमात्रं विषं दत्वा मर्दयित्वा दृढं पुनः ॥ १८७ ॥
हंसपादीरसैस्तैर्वा स्तोकं स्तोकं मुहुर्मुहुः ।
कुडवार्धमितैः पश्चाद्गोलं कृत्वा विशोष्य च ॥ १८८ ॥
काचकूप्यां विनिक्षिप्य शुल्बे नाडीं विधाय च ।
देवशास्त्रे पुनः प्रोक्तं विषं कर्षविचूर्णितम् ॥ १८९ ॥
ऊर्ध्वाधो गोलकानां हि काचकूप्यां विनिक्षिपेत् ।
निक्षिपेत्कज्जलीं मध्ये यतश्चाग्र्यं प्रजायते ॥ १९० ॥
ततश्च द्व्यङ्गुलोत्सेधां मृदा कूपीं विलिप्यताम् ।
विशोष्य वालुकायन्त्रे यन्त्रवर्गप्रकाशिते ॥ १९१ ॥
अधोमुखीं घटीं क्षिप्त्वा क्षिपेदुपरि वालुकाम् ।
निरुध्य भाण्डवक्त्रं च चुल्ल्यामारोप्य यत्नतः ॥ १९२ ॥
वह्निं प्रज्वालयेत्सार्धं दिनं क्रमविवर्धितम् ।
स्वाङ्गशीतलमाकृष्य सह ताम्रेण मर्दयेत् ॥ १९३ ॥

---

१ झ. न्दं न य°। २ घ.ङ. °लीं श्लक्ष्णामे°। ३ क. °द्गोलकि°। घ. °द्गोलीकृत्य वि°। ४ क.ट. पि-धाय। ५ ग. पुटीं। च. गुटीं। ६ ग. °त्सार्धदि°।

पलार्धं मरिचं सूक्ष्मं कर्षार्धं वत्सनाभकम् ।
विनिक्षिप्य विमर्द्याथ क्षिपेद्रम्यकरण्डके ॥ १९४ ॥
नन्दिना तु समुद्दिष्टं रसतुल्यं मरीचकम् ।
वत्सनाभं तु कर्षांशं मिश्रयेत[1] विचूर्ण्य तत् ॥ १९५ ॥
निर्दिष्टोऽग्निकुमारको रसवरो देव्या तथा नदिना
[2]सेव्यो वैद्ययशःप्रभूतफलदश्चानाहविध्वंसनः ।
[3]सद्यः पाचनदीपनो रुचिकरः शीघ्रं तथाष्ठीलिकां
सामां च ग्रहणीं हरेत्कफरुजः कण्ठामयध्वंसनः ॥ १९६ ॥
वल्यो भोजनतोयभक्ष्यसुखदः श्रेष्ठो रसानां प्रभु-
र्मन्दाग्निं कफवातजं क्षयगदं निःशेषशूलामयान् ।
श्वासं कासगदं तथा कफरुजं जूर्तिं च पाण्डुं तथा
शोफं वातगदं तथा खलु [4]रतीतुल्योर्धपर्णान्वि[5]तः ॥१९७॥
कणया सितयाऽऽज्येन दातव्यो[6]ऽसौ महारसः ।
प्रत्यष्ठीलादिरोगेषु जलकूर्मगदेषु च ।
नन्दिना तु पुनः प्रोक्तस्तत्तद्रोगहरौषधैः ।
निहन्ति सकलान्रोगान्दुष्पत्नीव मनोरथान् ॥ १९८ ॥
रसजनितविदाहे शीततोयाभिषेको
मलयजघनसारालेपनं मन्दवातः ।
तरुणदधि सिताक्तं नारिकेलीफलाम्भो
मधुरशिशिरपानं शीतमन्यच्च शस्तम् ॥ १९९ ॥
सौभा[7]ग्यं मेघनादाग्निसितामधुकचन्दनम् ।
तुषोदकेन दातव्यं सर्वस्मि[8]न्रसवैकृते ॥ २०० ॥
छर्द्यां [9]तृष्णासु दातव्यं कपित्थं वा सितान्वितम् ।
कुमारी[10]शीतलेपश्च सर्वाङ्गीणः प्रशस्यते ॥ २०१ ॥
[11]क्षीरं मधुसि[12]तापीतं क्राथो वाऽमृतबन्धुकः ।
उपचारा अमी सर्वे प्रशस्ता रसतापिनाम् ॥ २०२ ॥
रसस्याग्निकुमारस्य प्रभावं वेत्ति तत्त्वतः ।
गिरिजा नन्दिकेशो वा यद्वा नारायणः प्रभुः ॥ २०३ ॥

---

१ क.ठ. °श्रयेत्तं वि°। घ. °श्रयित्वा विचूर्णयेत् । २ घ. सद्यो । ३ झ. नित्यं । ४ ग. रतितुल्यार्धे°। झ. रतिस्तुल्यार्धे°। ५ ञ. °न्विता । ६ घ. °व्योऽयं म°। ७ घ. °भाग्यमे°। ८ च. °स्मिन्सर्ववै°। ९ च. मृष्टेक्षु । ज. घृतक्षु°। १० घ. °शीरले°। ११ क. सीरं । घ. क्षीरम°। १२ घ. °सितोपेतं ।

**अथाम्लपित्तचिकित्सा**—अम्लोद्गारवमी हस्तपादहृत्कुक्षिदाहता ।
अम्लपित्ते मुखं तिक्तं भवेच्छूलमरोचकम् ॥ २०४ ॥
अम्लपित्ते तु वमनं तदन्ते मृदुरेचनम् ।
ऊर्ध्वगं वमनैर्हन्यादधोगं रेचनैर्जयेत् ॥ २०५ ॥
तिक्तभूयिष्ठमाहारं पानं चापि प्रकल्पयेत् ।
अम्लपित्ते च वमनं पटोलारिष्टवारिभिः ।
विरेचनं त्रिवृच्चूर्णं मधुधात्रीफलैर्भवेत् ॥ २०६ ॥

**अथ लीलाविलासः**—शुद्धसूतं शुद्धगन्धं मृतं ताम्राभ्ररौप्यकम् ।
तुल्यांशं मर्दयेद्यामं रुद्ध्वा लघुपुटे पचेत् ॥ २०७ ॥
अक्षधात्रीहरीतक्या क्रमवृद्ध्या विपाचयेत् ।
जलेनाष्टगुणेनैव ग्राह्यमष्टावशेषितम् ॥ २०८ ॥
अनेन भावयेत्सर्वं[5] पूर्वं[6] सूतं पुनः पुनः ।
पञ्चविंशतिवारं च तावता भृङ्गजैर्द्रवैः ॥ २०९ ॥
शुष्कं तच्चूर्णितं खादेत्पञ्चगुञ्जं मधुप्लुतम् ।
रसो लीलाविलासोऽयमम्लपित्तं नियच्छति ॥ २१० ॥

**अथ कूष्माण्डखण्डम्**—कूष्माण्डस्य रसस्य सत्पलशततुल्यं गवां क्षीरकं
धात्रीचूर्णपलाष्टकं लघु पचेद्यावत्कृतं पिण्डितम् ।
धात्रीतुल्यसितं पलार्धममृतं तल्लेहकं लेहये-
त्ख्यातं कूष्माण्डखण्डं क्षपयति नितरामम्लपित्तं[10] नचान्यत्[11]॥२११॥

**अथ ताम्रद्रुतिः**—पलं नेपालशुल्बस्य पत्राणि सुतनूनि च ।
कृत्वा कण्टकवेध्यानि कारयेत्तदनन्तरम् ॥ २१२ ॥
कर्षैकं द्विगुणं ग्राह्यं क्रमात्सूतकगन्धयोः ।
मर्दितव्यं[12] शिलाखल्वे रसैर्दन्तशठस्य वै ॥ २१३ ॥
[13]तत्कल्कं पङ्कवत्कृत्वा तेन पर्णानि सर्वशः ।
लेपयित्वा शिलाखल्वे स्थापयेदातपे खरे ॥ २१४ ॥
यामैकेन समुद्धृत्य द्रवीभवति नान्यथा ।
वान्ति विरेचनं कृत्वा शुद्धकायो यथाविधि[14] ॥ २१५ ॥

---

१ ज. °दद्रकु°। २ ग. °अरोचक°। ३ च ठ.ड. पिष्ट्वा । ४ ग. °तक्यः क्र°। ५ क. °र्वं पक्कसू°। ६ पूर्वसू°। ७ ङ. सत्पल°। च. सत्पल°। ८ च. पात्रे तु°। ९ घ. °तं तं लेह°। १० च. °त्तं तथाऽन्य°। ११ ज. °चान्यात् । १२ घ. °तव्या शि°। १३ घ. तं कल्कं°। १४ ङ. °विधिः ।

पूजयित्वा सुरान्वैद्यान्विप्रान्हेमाम्बरादिभिः ।
तं सूतं मधुसर्पिभ्यां रक्तिकामाषकादिभिः ॥ २१६ ॥
लीढ्वा तत्र पिबेत्तक्रं धान्याम्लकमथापि वा ।
जीर्णे सायं समश्नीयाच्छाल्यन्नं तु पुरातनम् ॥ २१७ ॥
सेव्यमानं निहन्त्येतदम्लपित्तं सुदारुणम् ।
कासं क्षयं तथा शोषमर्शांसि ग्रहणीं तथा ॥ २१८ ॥
कामलां पाण्डुरोगं च कुष्ठान्येकादशैव च ।
रक्तपित्तं सखालित्यं शूलं चैवोदराणि च ॥ २१९ ॥
वातरोगं प्रतिश्यायं विद्रधिं विषमज्वरम् ।
संतताभ्यासयोगेन वलीपलितवर्जितः ॥ २२० ॥
ताम्रवत्कुरुते देहं सर्वव्याधिविवर्जितम् ।
जीवेद्वर्षशतं सोग्रं द्वितीय इव भास्करः ॥ २२१ ॥

## अथ पित्ते ।

**अथ दशसारपित्तान्तकरसः**—मृतसूताभ्रमुण्डार्कतीक्ष्णमाक्षिकतालकम् ।
गन्धकं च भवेत्तुल्यं यष्टीद्राक्षामृताद्रवैः ॥ २२२ ॥
जलमण्डपिकावासाद्रवैः क्षीरविदारिजैः ।
दिनैकं मर्दयेत्खल्वे सिताक्षौद्रयुता वटी ॥ २२३ ॥
निष्कमात्रं निहन्त्याशु पित्तं पित्तज्वरं क्षयम् ।
दाहं तृष्णां भ्रमं शोषं वेगात्पित्तान्तको रसः ॥ २२४ ॥
सिताक्षीरं पिबेच्चानु यष्टीं सितान्वितां जलैः ।
पिबेद्वा पित्तशान्त्यर्थं शीततोयेन चन्दनम् ॥ २२५ ॥
यष्टी द्राक्षा फलं धात्र्या एलाचन्दनवालकम् ।
मधूकपुष्पं खर्जूरं दाडिमं पेषयेत्समम् ॥ २२६ ॥
सर्वतुल्या सिता योज्या पलार्धं भक्षयेत्सदा ।
दशसारमिदं ख्यातं सर्वपित्तविकारजित् ॥ २२७ ॥
मेहतृष्णारतीश्चैव दाहं मूर्छाज्वरं जयेत् ॥ २२८ ॥ २२२८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये विद्रधिवृद्धिगुल्मयकृत्प्लीहशूलकार्श्यस्थौल्याष्ठीलाप्रत्यष्ठीलाजलकूर्मरसवैकृतानाहाम्लपित्तपित्तचिकित्सा नामाष्टादशोऽध्यायः ॥ १८ ॥

---

१ ख. तां हंति म°। ङ. तन्मृतं म°। च. तं मृतं । २ °माप्रिका°। ३ क. सत°। ४ क. °वैरोगवि°। ५ क. °र्जितः । ६ ख. सोऽयं । ७ ङ. पावकः । ८ च. क्षीरं वि°। ९ घ. °नबालक°। १० च. °वालुक°। ११ च. ठ. ङ. मूर्छां ।

## अथैकोनविंशोऽध्यायः।

### [ अथोदरादिचिकित्सनम्। ]

उदरं सजलं यस्य सदोषं वलिवर्जितम्।
श्वयथुः पादयोः शोफः स्याज्जलोदरलक्षणम्॥ १॥
उदरं वातसंपूर्णं सव्यथं च कृशाङ्गता।
मुहुर्मुहुः श्वसित्येव तद्वातोदरलक्षणम्॥ २॥

अथात उदरपाण्डुशोफकामलाकुम्भकामलाहलीमकचिकित्सा।

**अथ विनोदविद्याधरः**—जीमूतलोहरसगन्धशिलालताम्र-
व्योषाग्निकुष्ठमुसलीविषदीप्यचूर्णम्।
निम्बूकनीरलुलितं गुटिकीकृतं त-
द्भुक्तं निशासु मधुना सकलोदरघ्नम्॥ ३॥
रसेन्द्रबलिटङ्कणैः सजयपालबीजैः समै
रसैः सुमृदितो भवेत्खलु विनोदविद्याधरः॥ ४॥
पयोगुडयुतो हरेत्सकलरेचनीयामया-
ञ्ज्वरं च जठरामयान्गुदगदं सशूलं नृणाम्॥ ५॥
सम्यग्विरेचनाभावे मुद्गक्वाथं पिबेदनु।
भेदाधिक्ये पिबेत्तक्रं बर्बूराणां त्वचो रसम्॥ ६॥

**अथ मृत्युंजयः**—अष्टौ निस्तुषदन्तिबीजमपि चेच्छुण्ठ्यास्त्रयो गन्धका-
द्द्वौ च द्वौ मरिचस्य टङ्कणरसं चैकैकभागं पृथक्।
गुञ्जामात्रमिदं सुरेचनकरं देयं च शीताम्बुना
शोफं गुल्मजलोदरं प्रशमयेत्प्लीहामयघ्नं परम्॥ ७॥
द्विक्षारं त्र्यूषणं पञ्चलवणं शतपुष्पिकाम्।
समभागमिदं सर्वं पटचूर्णं समाचरेत्॥ ८॥
तत्समौ रसगन्धौ च कृत्वा कज्जलिकां शुभाम्।
सर्वमेकत्र संमेल्य मर्दयेद्दिवसत्रयम्॥ ९॥
अयं मृत्युंजयो नाम्ना रसः शीघ्रफलप्रदः।
कथितो मैर्यलार्येण संनिपातहरः परम्॥ १०॥

---

१ क. °दोषबलत्व°। ज० दोषमतिवर्धित°। २ ङ. °त्येष त° । ३ क. °लासता°। ४ च. निम्बाली-नी°। ५ क. °टिकाकृ°। ६ ग. सजलो°। ७ घ. °सः समुदि°। ८ घ. बब्बुलानां । ९ ख. °ङ्कणं र°। १० ङ. पटुचू° । ११ ग. °मय्यला°। घ. °मिर्यला°।

संनिपाते प्रयोक्तव्यो[1] रक्तिकापञ्चमात्रिकः[2] ।
चित्रकार्द्रकसिन्धूत्थकटुभि[3]र्वा समन्वितः ॥ ११ ॥
पीततोयं त्रिदोषार्तं निर्वाते वा शयेत्ततः[4] ।
पथ्यं दध्योदनं देयं याचमानाय[6] नान्यथा ॥
गुणो न जायते यस्य तस्य देयो रसः पुनः ॥ १२ ॥
हन्याद्वातगदं तथा कफगदं मन्दानलत्वं ज्वरं
शूलं सर्वमहामयाञ्जठरजां पीडां यकृत्पाण्डुताम् ।
शोफं गुल्मरुजं तथा ग्रहणिकां प्लीहामयं विड्ग्रहं
वान्तिं गुल्मकृतां सकासमभितः श्वासं च हिक्कामपि ॥१३॥
आदौ सर्वोदराणां च देयमुक्तं विरेचनम् ।
गोमूत्रैर्वाऽथ गोक्षीरैर्योज्यमेरण्डतैलकम् ॥ १४ ॥
कर्षमात्रं प्रयत्नेन शुद्धे देयो रसः पुनः ॥ १५ ॥
**अथ त्रैलोक्यसुन्दरः**—शुद्धसूतं तथागन्धं मृताभ्रं सैन्धवं विषम् ।
कृष्णजीरं विडङ्गं च गुडूचीसत्त्वचित्रकम् ॥ १६ ॥
एला चैव यवक्षारं प्रत्येकं स्याद्रसार्धकम् ।
दिनं निर्गुण्डिकाद्रावैर्बीजपूररसैर्दिनम् ॥ १७ ॥
मर्दयेच्छोषयेत्सोऽयं रसस्त्रैलोक्यसुन्दरः ।
गुञ्जाद्वयं घृतैर्लेह्यो वातोदरकुलान्तकः ॥ १८ ॥
पलमेकं[7] चित्रमूलं[8] द्विगोमूत्रैश्चतुर्जलैः ।
पाच्यं यावद्भवेत्कल्कं घृतं कल्कं च योजयेत् ॥ १९ ॥
वह्न्यैकं[9] च यवक्षारं क्षिप्त्वा पक्त्वा च तारयेत्[10] ।
तत्कर्षैकं[11] पिबेच्चानु स्निग्धमुष्णं च भोजयेत् ॥ २० ॥
**अथ महावह्निः**—चतुः सूतस्य गन्धोऽष्टौ रजनी त्रिफला शिवा ।
प्रत्येकं च द्विभागं स्यात्त्र्यूषजीरकदन्तिकाः ॥ २१ ॥
प्रत्येकमष्टभागं स्यादेकीकृत्य विचूर्णयेत् ।
जयन्तीस्नुक्पयोभृङ्गवह्निवातारितैलकैः ॥ २२ ॥
प्रत्येकेन क्रमाद्भाव्यं सप्तवारं पृथक्पृथक् ।
महावह्निरसो नाम निष्कमुष्णजलैः पिबेत् ॥ २३ ॥

---

१ घ. ङ. प्रदातव्यो । २ च. ठ. °मात्रतः । ३ झ. °स्थपटु° । ४ घ. निवाते वासये° । ५ ञ. वासये° । ६ घ. याचमानस्य । ७ ङ. पलैकं ८ ङ. °लं च द्विगोमू° । ९ झ. पलैकं । १० च. पाचयेत् । ११ क. °त्कर्षकं ।

विरेचनं भवेत्तेन तक्रभक्तं ससैन्धवम् ।
दिनान्ते भोजयेत्पथ्यं वर्जयेच्छीतलं जलम् ॥
नाभ्युत्तरे जलस्रावं कुर्याद्धन्ति जलोदरम् ॥ २४ ॥

**अथ वज्रक्षारः**—सर्वोदरहरं योज्यं गुडनागरयोः पलम् ।
सामुद्रं सैन्धवं काचं यवक्षारं[1] सुवर्चलम् ॥ २५ ॥
टङ्कणं[2] सर्जिकाक्षारस्तुल्यं चूर्णं विभावयेत् ।
अर्कक्षीरैः स्नुहीक्षीरैरातपे[3] भावयेत्त्र्यहम् ॥ २६ ॥
अर्कपत्रं लिपेत्तेन रुद्ध्वा चान्तःपुटे पचेत् ।
तत्क्षारं चूर्णयित्वाऽथ त्र्यूषणं त्रिफलारजः ॥ २७ ॥
जीरकं रजनीवह्निचव्यकं[4] स्यात्समं समम् ।
क्षारार्धमेतदर्धं च एकीकृत्य प्रयोजयेत् ॥ २८ ॥
अग्निमान्द्येष्वजीर्णेषु भक्ष्यं निष्कद्वयं द्वयम् ।
वाताधिके जलैः कोष्णैर्घृतैः[5] पित्ताधिके हितम् ॥ २९ ॥
कफे गोमूत्रसंयुक्तमारनालैस्त्रिदोषजे ।
वज्रक्षारमिदं सिद्धं स्वयं प्रोक्तं पिनाकिना ॥ ३० ॥
सर्वोदरेषु[6] गुल्मेषु शोफशूलेषु योजयेत् ॥ ३१ ॥

**अथ वैश्वानरः**—खदिरं[7] देवदारुं च कर्षं गोमूत्रतः पिबेत् ॥ ३२ ॥
उदरं पाण्डुरोगं च हन्ति शूलं च प्लीहकम् ।
दिनैकं पिप्पलीचूर्णं स्नुहीक्षीरेण भावयेत् ॥ ३३ ॥
निष्कं जलोदरं हन्ति महिषीमूत्रतः पिबेत् ।
रसगन्धकताम्राणि शिलाजित्कान्तलोहकम् ॥ ३४ ॥
त्रिकटुश्चित्रकं कुष्ठं निर्गुण्डी मुसली विषम् ।
अजमोदश्च सर्वेषां[8] द्वौ द्वौ भागौ प्रकल्पयेत् ॥ ३५ ॥
चूर्णीकृत्य ततः सर्वं निम्बकाथेन[9] भावयेत् ।
एकविंशत्प्रकारेण भृङ्गराजेन सप्तधा ॥ ३६ ॥
मधुना गुटिकां शुष्कां रजन्यां तु प्रदापयेत् ।
वैश्वानराभिधो योगो जलोदरविशोषणः ॥ ३७ ॥

---

१ घ. क्षारः सु॰। २ क. ॰णं स्वर्जि॰। ३ घ. ॰पे शोषये॰। ४ च. ॰हिनवकं । ५ क. कटुगो॰। ६ घ. सर्वे । ७ घ. ठ. ड. खादि॰। ८ च. ॰मोदा च स॰। ९ घ. निम्बुका॰।

**अथ सूर्यप्रभागुटिका**—भार्ङ्गीवह्निजयायुगाभ्रकदली पाठा वचा रोचना
चव्यं पत्रकचित्रकं त्रिकटुकं क्षारद्वयं गन्धकम् ।
त्रायन्तीहरबीजकेसरिविषद्वंद्वं लवङ्गं कणा
कुष्ठं शैल्वफलं फलत्रययुतं फेनः समुद्रादपि ॥ ३८ ॥
ब्रह्मबीजं लताबीजं बालबिल्वं विरूढकम् ।
लवणानि तथा पञ्च जात्यादिकुसुमाष्टकम् ॥ ३९ ॥
वातारितैलैनैतेषां कल्पिता भिषजां वरैः ।
एषा सूर्यप्रभा नाम गुटिकाऽग्निप्रदीपनी ॥ ४० ॥

**अथोदयमार्तण्डरसः**—पलोन्मितस्य शुल्बस्य सूक्ष्मपत्राणि कारयेत् ।
तत्समं गन्धकं दत्वा खल्वे सर्वं विनिक्षिपेत् ॥ ४१ ॥
जम्बीररससंयुक्तं दिनं घर्मे निधापयेत् ।
ततः शुल्बे द्रवीभूते रसकर्षं नियोजयेत् ॥ ४२ ॥
तत्सिद्धमुदरे योज्यं शोफे चैव भगन्दरे ।
नाम्ना तूदयमार्तण्डरस एष प्रकीर्तितः ॥ ४३ ॥ इत्युदरचिकित्सा ।

**अथ पाण्डुरोगचिकित्सा**—विवर्णता शरीरे स्याच्छ्वयथुः कार्श्यमेव हि ।
सत्त्वहानिरथाऽऽलस्यं पाण्डुरोगस्य लक्षणम् ॥ ४४ ॥

**अथ हंसमण्डूरः**—मण्डूरं मर्दयेच्छ्लक्ष्णं गोमूत्रेऽष्टगुणे पचेत् ।
त्र्यूषणं त्रिफलामुस्ताविडङ्गं चव्यचित्रकौ ॥ ४५ ॥
दार्वी ग्रन्थी देवदारु तुल्यं तुल्यं विचूर्णयेत् ।
घृतं मण्डूरतुल्यं च पाकान्ते मिश्रयेत्ततः ॥ ४६ ॥
भक्षयेत्कर्षमात्रं च जीर्णान्ते तक्रभोजनम् ।
पाण्डुरोगं हलीमं च ऊरुस्तम्भं च कामलाम् ॥
अर्शांसि हन्ति नो चित्रं हंसमण्डूरकाह्वयम् ॥ ४७ ॥

**अथ कालविध्वंसनः**—शुद्धसूतं हेमतारं ताम्रतुल्यं च मर्दयेत् ।
जम्बीरनीरसंयुक्तमातपे मर्दयेद्दिनम् ॥ ४८ ॥
सर्वतुल्यं पुनः सूतं पिष्ट्वा पिष्टं प्रकल्पयेत् ।
धत्तूरफलमध्ये तु दोलायन्त्रे त्र्यहं पचेत् ॥ ४९ ॥

---

१ ग. भार्गीव° । २ घ. ठ. ड. °जरायु° । ३ च. °हरिबी° । ४ घ. शल्मफ° । ५ क. बीजलता । ६ क. दार्व्यग्निं देवदारुं च तु° । ७ च. °जनः । ८ घ. पाण्डुं शोफं ह° । ९ घ. क्षिप्त्वा ।

धत्तूरोत्थद्रवैरेव[1] यन्त्रं पूर्यं पुनः पुनः ।
आदाय बन्धयेद्वस्त्र इष्टिकायन्त्रगं[2] क्षिपेत् ॥ ५० ॥
जम्बीरैर्गन्धकं पिष्ट्वा अधश्चोर्ध्वं च दापयेत्[3] ।
तुल्यं पुनः पुनर्देयं रुद्ध्वा लघुपुटे[4] पचेत् ॥ ५१ ॥
षड्गुणे गन्धके जीर्णे तत्तुल्यं मृतलोहकम् ।
दत्वा मर्द्यं दिनैकं च कण्टकार्या द्रवैर्दिनम्[5] ॥ ५२ ॥
रुद्ध्वाऽथ[6] करिषाग्निस्थं कपोताख्यपुटे पचेत् ।
पुनर्मर्द्यं पुनर्भाव्यं[7] त्रिवारं पूर्वजैर्द्रवैः ॥ ५३ ॥
बृहत्युत्थरसैस्तद्वत्त्रिधा मर्द्यं[8] पुटेत्त्रिधा ।
वह्न्यर्कनक्तमालानां पृथग्द्रावैर्द्विधा द्विधा ॥ ५४ ॥
मर्द्यं[9] रुद्ध्वा पुटेत्तद्वद्दशांशं वत्सनाभकम् ।
दत्वा तस्मिन्विचूर्ण्याथ गुञ्जामात्रं प्रयोजयेत् ॥ ५५ ॥
कालविध्वंसनो नाम रसः पाण्ड्वामयापहः ।
अभयाऽथ गवां मूत्रैः पिष्ट्वा चानु प्रदापयेत् ॥ ५६ ॥
**अथ पञ्चाननः**—मृतं[10] कान्तं सुवर्णं च शुल्बताराभ्रभस्मकम् ।
पृथगक्षमितं सर्वं पटचूर्णं[11] कृतं मुहुः ॥ ५७ ॥
रसगन्धककज्जल्या तुल्यया सह मार्दितम् ।
सार्धद्विपलमानेन[12] ताप्यचूर्णेन मर्दयेत्[13] ॥ ५८ ॥
द्विपलं मूषिकामध्ये विनिक्षिप्यालचूर्णकम् ।
ततस्तु कज्जलीं क्षिप्त्वा मनोह्वां तावतीं क्षिपेत् ॥ ५९ ॥
ततो निरुध्य यत्नेन परिशोष्य पुटेन्निशि ।
पुटेन गजसंज्ञेन स्वतः शीतं विचूर्णयेत् ॥ ६० ॥
चतुर्गुणेन गन्धेन निर्मितां रसकज्जलीम् ।
क्षिप्त्वा पूर्वरसे[14] लुङ्गवारिणा परिमर्दयेत्[15] ॥ ६१ ॥
पचेत्क्रोडपुटेनैव दशवारमतः परम् ।
एवं तालककज्जल्या दशवारं पुनः पुनः ॥ ६२ ॥
ततश्च मृतवैक्रान्तभस्मना च कलांशतः ।
ततो विचूर्ण्य यत्नेन करण्डान्तर्विनिक्षिपेत्[16] ॥ ६३ ॥

---

१ क. °रेवं य° । २ च. °न्त्रकं क्षि° । ३ अ. °पचेत् । ४ घ. °पुटैः प° । ५ घ. °वैर्दृढम् । ६ घ. °ध्वा तु क° । ७ ङ. पुनः पाच्यं । ८ घ. मर्द्यं । ९ च. मर्द्यं । १० घ. मृतका° । ११ ङ. °चूर्णीकृतं मुहु । १२ घ. सार्धं द्वि° । १३ ग. मर्दितम् ॥ ५८ ॥ १४ च. पूर्वं र° । १५ ङ. °मर्द्यं च ॥ १६ ङ. °रण्डान्ते विनि° ।

अयं पञ्चाननो नाम देवराजेन कीर्तितः ।
श्रेष्ठः सर्वरसेन्द्रेषु महारससमो गुणैः ॥ ६४ ॥
पथ्यासूरणशुण्ठीभिः सघृताभिर्निषेवितः ।
सर्वान्पाण्डुगदान्हन्ति कृतघ्न इव सत्कृतिम्[1] ॥ ६५ ॥
यक्ष्माणं जठरं हलीमकरुजं वातार्तिविड्बन्धनं
कुष्ठं च ग्रहणीं ज्वरातिसरणं श्वासं च कासारुची ।
श्लेष्मव्याधिमशेषतो[2] गलगदान्दुर्नाम मन्दाग्नितां
मेहं गुल्मरुजं च किं बहुगिरा हन्याद्दरांश्चापरान् ॥ ६६ ॥
सेव्यमाने रसे चास्मिन्बिल्वमेकं च वर्जयेत् ।
स्वस्थः सर्वं समश्नीयाद्वदी पथ्यं गदापहम् ॥ ६७ ॥

**अथाऽऽरोग्यसागरः**—एकैक[3]पलगन्धाश्मरससंभवकज्जलीम् ।
तस्या[4] मध्ये द्विपलिकं तार्प्यं तालं पलोन्मितम् ॥ ६८ ॥
पलमात्रं[5] मनोह्वां[6] च पलमभ्रकभस्मकम् ।
सुखस्पर्शस्य कर्षं[7] च निक्षिप्य परिमर्द्य च ॥ ६९ ॥
मूषामध्ये विनिक्षिप्य पिनद्धान्तर्मुखीं ततः ।
पत्रेण शुद्धताम्रस्य निर्दलेन त्रिकर्षिणा ॥ ७० ॥
मूषां मृद्भिः[8] सवस्त्राभिः परिरुध्य यथा दृढम् ।
परिशोष्य गिरण्डैश्च[9][10] पुटेद्गजपुटेन हि[11] ॥ ७१ ॥
स्वाङ्गशीतं समुद्धृत्य [12]खोटीभूतं विचूर्णयेत् ।
गन्धतालशिलाचूर्णैः सहितं खल्वचूर्णकम् ॥ ७२ ॥
पुटेत्क्रोडपुटे[13] चैव दशवारं ततःपरम् ।
क्षिपेद्विंशतिभागेन वैक्रान्तं भस्मतां गतम् ॥ ७३ ॥
विमर्द्य गोलकं कृत्वा क्षिपेद्रौप्यकरण्डके ।
आरोग्यसागरो नाम रसोऽतिगुणवत्तरः ॥ ७४ ॥
हन्यात्पाण्डुमरोचकं गुदगदं वातं च पित्तं कफं
गुल्माध्मानकशोफरोगमथ च श्वासं शिरोर्तिं वमिम् ।
अत्यर्थानलमन्दतां गुरुमुदावर्तं विचित्रं ज्वरा-
न्रोगानप्यपरान्रातद्वयमितः[14] सूतो मरीचाज्यवान्[15] ॥ ७५ ॥

---

१ झ. सत्कृतः । च. सत्कृतम् । २ क. श्लेष्माणं च विशे° । ३ ग. °कैकं प° । ४ घ. तस्यां । ५ घ. °मानं म° । ६ ग. °नोह्वा च । ७ ङ. च °कर्षम° । ८ ङ. °शैश्च क° । ९ च. °द्भिः सुव° । १० घ. गिरिण्डै° । ११ घ. च । १२ ग. खोटीभूतां । १३ च. °डयुगेनैव । १४ च. °मिदं सू° । १५ च. °ज्यवत् ॥ ७४ ॥

**पाण्डुहारीहरीतकी**—ताम्रभस्म रसभस्म गन्धकं वत्सनाभमथ तुल्यभागतः ।
वह्नितोयपरिमर्दितं पचेद्यामपादमथ मन्दवह्निना ॥ ७६ ॥
रक्तिकायुगलमानतो भवेच्छोफपाण्डुघनपङ्कशोषणः ॥ ७७ ॥
कोरन्टो भृङ्गराजश्च शतावरिपुनर्नवौ ।
एते सप्तपला ग्राह्याः प्रत्येकं सूक्ष्मचूर्णिताः ॥ ७८ ॥
एतत्क्वाथे पचेत्सम्यग्हरीतक्याः शतत्रयम् ।
षष्ट्याऽधिकं ततः शुष्कं गव्यदुग्धेन पाचयेत् ॥ ७९ ॥
शोषयित्वा शनैर्हृत्वा वटिकाभिः प्रपूरयेत् ।
रसस्य त्रिपलं दत्वा गन्धके त्रिपलात्मके ॥ ८० ॥
पक्त्वाऽथ पाचयेत्पात्रे चूर्णयित्वा ततः पुनः ।
गुडूचीसत्त्वमादाय शुष्कं सत्त्वं पलात्मकम् ॥ ८१ ॥
चूर्णयित्वा ततः सर्वं मधुना गुटिकाः किरेत् ।
तास्तु सूत्रे समाबद्ध्वा मधुभाण्डे विनिक्षिपेत् ॥
एकैकां भक्षयेन्नित्यं शुष्कपाण्डुविनाशिनीम् ॥ ८२ ॥

**अथ पित्तपाण्डुरिगुटिका**—रसस्य भागाश्चत्वारो लोहस्य द्वौ प्रकीर्तितौ ।
वह्निमुस्ताविडङ्गानां त्रिकटुत्रिफलस्य च ॥ ८३ ॥
भागास्त्वनेकशो ग्राह्याः कुटजस्य तथाऽपरः ।
चूर्णयित्वा ततः सर्वं मधुना गुटिकाः किरेत् ॥
एकैकां भक्षयेत्प्रातः पित्तपाण्डुपनुत्तये ॥ ८४ ॥

**अथ त्रैलोक्यसुन्दरः**—रसगन्धकलोहाभ्रगुडूचीसत्त्वसूकरः ।
त्रिफलाशिग्रुमूलानि भृङ्गसारेण भावयेत् ॥ ८५ ॥
त्रैलोक्यसुन्दरः सोऽयं सघृतक्षौद्रशर्करः ॥
मृगाङ्कवत्पथ्यभुजः पाण्डुशोषं नियच्छति ॥ ८६ ॥
युतः किंचिद्घृतक्षौद्रगुडतित्तिरिगुग्गुलैः ।
त्रिनेत्राख्यो रसो योज्यः शोषे तोयानुपानतः ॥ ८७ ॥

---

१ च. भजेच्छो°। २ घ. पातये°। ३ झ. °येत्पत्रे । ४ झ. पुनः । ५ ङ. सत्त्वप°। ६ क. °ला-ष्टक°। ७ ङ. °हस्याष्टौ प्र°। ८ ज. ततः प°। ९ क. °हाभ्रं गु°। १० क. °फलां शि°। ११ च. °पाण्डुं शो°। १२ ङ. °शोफं नि°।

**अथ विजयागुटिका**—पलत्रयं हरीतक्याश्चित्रकस्य पलत्रयम् ।
एलात्वक्पत्रमुस्तानां भागोऽर्धपलिको मतः ॥ ८८ ॥
रेणुकार्धपलं प्रोक्तं तदर्धं नागकेसरम् ।
व्योषं च पिप्पलीमूलं विषं च पलमात्रकम् ॥ ८९ ॥
रसः पलो महागन्धः सूक्ष्मचूर्णानि कारयेत् ।
पुरातने गुडे पक्के तुलार्धे तद्विनिक्षिपेत् ॥ ९० ॥
हिमस्पर्शे तु गृह्णीयाद्घृतेनाक्त्वा करं बुधः ।
बदरास्थिप्रमाणेन विजया गुटिका मता ॥ ९१ ॥
निशायां खादयेदेनां शोफपाण्डुविनाशनीम् ।
टङ्कणं मेघनादं च भक्षयेद्विषशान्तये ॥ ९२ ॥

**अथ जयपालरसः**—रसं गन्धं मृतं ताम्रं जयपालं च गुग्गुलुम् ।
समांशमाज्यसंयुक्तं गुटिकां कारयेन्मिताम् ॥ ९३ ॥
एकैकां खादयेद्वैद्यः शोफपाण्डुपनुत्तये ॥ ९४ ॥
देवदाल्यास्तु पञ्चाङ्गं चूर्णं क्षीरैश्च वा जलैः ।
निष्कमात्रं पिबेन्नित्यं मासात्पाण्डुगदापहम् ॥ ९५ ॥

**अथ कामला**—दग्धमांसरुधिरास्रपित्ततः कामला भ्रमतृषाविदाहिनी ।
पीतनेत्रमलवत्युपेक्षया शोफयुग्भवति कुम्भकामला ॥ ९६ ॥
[ इति कामलालक्षणम् ।
अपामार्गं शमीमूलं पिष्ट्वा तक्रेण पाययेत् ।
कामलां श्वयथुं पाण्डुं कर्षमात्रं नियच्छति ॥ ९७ ॥
तीक्ष्णसूतककान्ताभ्रशुल्बसूतकतालकम् ।
देवदालीरसैः पिष्टं वालुकायन्त्रमूर्छितम् ॥ ९८ ॥
अमृतोत्पलकह्लारकन्दद्राक्षासमन्वितम् ।
पिष्टं यष्ट्यम्भसा क्षौद्रसिताभ्यां कामलाप्रणुत् ॥ ९९ ॥

**अथ त्रियोनिः**—ताम्रस्य तुर्यभागेन रसेनोत्प्लुत्य लेपयेत् ।
निम्बुद्रावेण संयोज्य सूर्यतापे विनिक्षिपेत् ॥ १०० ॥
ऊर्ध्वाधो गन्धकं दत्वा पाचयेदतियत्नतः ।
मत्स्याक्षीमभितो दत्वा मृत्स्नया संनिरुध्य च ॥
यामद्वयं तु पक्वं च स्वाङ्गशीतं समुद्धरेत् ॥ १०१ ॥

---

१ क. °क्के तत्सर्वं तु विनि° । २ क. हिमस्पर्शेऽथ मृद्नीयाद्घृतेनाक्तकरो बुधः । ३ ञ. °येद्वेग- शान्त° । ४ घ. °श्चाङ्गचू° । ५ घ. °क्ष्णमाक्षिक° । ६ क. °नोत्प्युत्पले पचेत् । ङ. °नोपेत्य । ७ क. गोलकं । ८ झ. °ममात्रं च प° ।

गुञ्जामात्रं ददीतास्य साभयं गुडसंयुतम् ।
त्रियोन्याख्यो रसो ह्येष शोफ[1]पाण्ड्वपनोदनः ॥ १०२ ॥

**मुस्तादिचूर्णम्**—मुस्ता मृताचित्रकयष्टिपिप्पलीविडङ्गशुण्ठीत्रिफलैर्यथोत्तरम् ।
चूर्णं सहायोरजसा च संयुतं समाक्षिकं पाण्डुगदापहं परम् ॥१०३॥

**अथ कामेश्वरः**—पलं सूतं पलं गन्धं वज्री पथ्या त्रयं त्रयम् ।
मुस्तैलापत्रकानां च प्रतिसार्यं[2] पलं क्षिपेत् ॥ १०४ ॥
त्र्यूषणं पिप्पलीमूलं विषं चैव पलं पलम् ।
नागकेसरकर्षैकं रेणुकार्धपलं तथा ॥ १०५ ॥
पुरातनगुडेनैव तुलार्धेन विपाचयेत् ।
मर्दयेत्[3]कन्यकाद्रावैर्यां[4]मैकान्तं घृतेन च ॥ १०६ ॥
गुटिकां बदराभां[6] तु कारयेद्भक्षयेन्निशि ।
शोफपाण्डुहरः सोऽयं रसः कामेश्वरः[7] स्वयम् ॥ १०७ ॥

**अथ सिन्दूरभूषणः**—ताम्रभस्म रसभस्म गन्धकं वत्सनाभमथ तुल्यभागतः ।
वह्नितोयपरिमर्दितं पचेद्यामपादमथ मन्दवह्निना ॥ १०८ ॥
रक्तिकाद्वितय[8]मानतोऽनिलाच्छोफपाण्डुघनपङ्कशोषणः ॥ १०९ ॥
कंसेन पिष्टः शिलया सहितः पाचितो रसः ।
हताभ्यां तीक्ष्णताम्राभ्यां युतो[9] हन्ति हलीमकम् ॥ ११० ॥
शुद्धसूतं च सिन्दूरं पलैकैकं विमर्दयेत् ।
वासारसेन यामैकं तेन कुर्याच्च चक्रिकाम्[10] ॥ १११ ॥
सुपक्वां कारयेन्मूषामुत्तानां द्वादशाङ्गुलाम् ।
तन्मध्ये गन्धकं शुद्धं क्षिपेत्पलचतुष्टयम् ॥ ११२ ॥
पूर्वोक्तां चक्रिकां कृत्वा[11] तं धृत्वा प्रपुटेल्लघु ।
जीर्णे गन्धे तं[12]मुद्धृत्य चक्रिकां तां विचूर्णयेत् ॥ ११३ ॥
चूर्णाद्दशगुणं योज्यं मृतलोहं च मर्दयेत् ।
लशुनेन दशांशेन चणमात्रा वटीः किरेत् ॥
वातपाण्डुहरः सिद्धो[13] रसः सिन्दूरभूषणः ॥ ११४ ॥

---

१ क. शोषे पाण्ड्व°। २ ङ. °सार्धे प°। ३ घ. °येत्कनकद्रा°। ४ च. °वैर्मार्षैकं तं घृ°। ५ अ. कान्ते घृ°। ६ घ. °राकारां का°। ७ घ. °रस्त्वय°। ८ ङ. °द्विपरिमाणतो°। ९ घ. युक्तो। १० झ. चुक्रिकाम्। ११ ङ. °त्वा तत्कृत्वा। झ. °त्वा तत्क्षिप्त्वा प्र°। १२ घ. समुद्धृत्य। १३ च. शुद्धे।

पिबेच्चानु ह्यपामार्गस्यैरण्डस्य च मूलिकाम् ।
तक्रैः पिष्ट्वाऽथ कर्षैकं हन्ति पाण्डुं सकामलम् ॥ ११५ ॥२३४३॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये उदरपाण्डुशोफकामलाकुम्भकामलाहलीमकचिकित्सितं नामैकोनविंशोऽध्यायः ॥ १९ ॥

---

## अथ विंशोऽध्यायः ।

### [ अथ विसर्पादिचिकित्सनम् । ]

**विसर्पकुष्ठश्वित्रचिकित्सा**—कान्तगन्धकतीक्ष्णाभ्रविषताप्यसमन्वितः ।
वन्ध्याकर्कोटिकाकन्दे पक्कः[1] सूतो विसर्पजित् ॥ १ ॥
एरण्डतुम्बिनीनिम्बबाकुचीचक्रमर्दकम् ।
तिक्तकोशातकीबीजमङ्कोलश्च[2]शुबीजकम् ॥ २ ॥
गोमूत्रदधिदुग्धैस्तु भावयेत्तिलजेन च ।
मूत्रेणा[3]जाप्रसूतेन तैलं पातालयन्त्रजम् ॥ ३ ॥
विसर्पं नाशयत्याशु श्वेतकुष्ठं च[4] तत्क्षणात् ॥ ४ ॥
एरण्डतुम्बीकटु[5]बिम्बचक्रमर्दोत्थबीजानि च सोमराजी ।
अङ्कोलबीजानि समानि कृत्वा पातालयन्त्रेण सुतैलमेषाम् ॥
प्रगृह्य[6] तेनाथ विमर्दयीत[7] विसर्पकादीनि कृतं[8] प्रयान्ति ॥ ५ ॥
पादयोः श्वयथु[9]स्तोदो गलन्त्यङ्गुलयो यदि ।
नासिकास्वरयोर्भङ्गो गलत्कुष्ठस्य लक्षणम् ॥ ६ ॥
सर्वेषां कुष्ठिनामादौ पञ्चकर्माणि कारयेत् ॥ ७ ॥
पक्षे पक्षे च वमनं मासि मासि विरेचनम् ।
षण्मासे च शिरामोक्षो नस्यं सप्तदिनान्तरे ॥
इदं चिरस्थिते[10] कार्यं कुष्ठे स्वल्पेऽल्पशः क्रिया[11] ॥ ८ ॥
विपचे[12]द्गन्धकमध्ये घन[13]पिष्टीं शुल्बपिष्टीं वा ।
संकोच्य गोलकोऽयं शमयति[14] वातोत्थकुष्ठानि ॥ ९ ॥
कामलाभ्रकसंकोचो घृतगन्धकपाचितः ॥ १० ॥

---

१ च. पक्कसू° । २ घ.ठ. °ङ्कोल्लश्च° । ३ च. °णाजप्र° । ४ घ. च प्रक्षणा° । ५ घ. °टुनिम्ब° । ६ घ. प्रसह्य ञ. संगृह्य । ७ ङ. °र्दयेत । ८ घ. क्वातिं° । ९ झ. °थुस्तापो ग° । १० च. °स्थिरे का° । ११ झ. क्रमात् । १२ च. °चेद्गन्धकं म° । १३ झ. °पिष्टं शुल्बपिष्टं वा । १४ घ. °ति पवनोत्थ° ।

व्योषाग्निवेल्लत्वङ्मुस्ताव्याधिघातविषैः समः ।
त्रिगुणः[1] प्राणदो रेणुः पञ्चाशान्मृतकाञ्चनः[2] ॥ ११ ॥
बदरास्थिमितो मूत्रेणाजेन गुटिकीकृतः ।
नाशनः पित्तकुष्ठानामेकविंशतिवासरात्[3] ॥ १२ ॥
कनकाभ्रकसंकोचस्तैलगन्धकपाचितः[4] ।
विषव्योषाब्दवेल्लत्वक्तुल्य[5]स्त्रिगुणचित्रकः ॥ १३ ॥
गुञ्जामानोऽजमूत्रेण पिण्डितः श्लेष्मकुष्ठनुत् ।
तीक्ष्णाभ्रहेमसंकोचस्तैलगन्धक[6]पाचितः ॥ १४ ॥
तालताप्यविशालाग्निबोलपाठाजटाविषैः ।
शृङ्गीटङ्कणयष्ट्याह्वसिन्धुवारैः[7] समन्वितः ॥ १५ ॥
रसेन शृङ्गवेरस्य बद्धो बदरसंनिभः ।
छायाविशोषितः कुष्ठं निहन्यात्संनिपातजम् ॥ १६ ॥

**अथ विजयवटिका**—रेणुका पिप्पलीमूलं बाकुची विषतिन्दुकम् ।
अश्वगन्धा पलाशास्थि व्योषादिनवकं वचा ॥ १७ ॥
विशाला गन्धकं कुष्ठं सप्तकं रसभस्म च ।
गुडेन गुटिकां कुर्यात्समेन मधुमिश्रिताम् ॥ १८ ॥
तां भक्षयेत्सितासर्पिः क्षीरशाल्यन्न[8]भाग्भवेत् ।
जलौदनं[9] वा भुञ्जानो ब्रह्मचर्यपरायणः ॥ १९ ॥
खादेत्तापे[10] सिताधान्यसर्पिर्नागबलारजः ।
वटिका विजयाख्येयं सप्तकुष्ठान्नियच्छति ॥ २० ॥

**अथ सर्वेश्वरः**—पालिकं ताम्रगन्धाभ्रं कर्षांशं लोहपारदम् ।
स्नुह्यर्कक्षीरपाठालिजम्बीरोशीरवारिभिः ॥ २१ ॥
मर्दितं वालुकायन्त्रे[11] स्वेदयेद्दिवसत्रयम् ।
कर्षं कणाया निष्कं च विषस्यास्मिन्विनिक्षिपेत् ॥
एष सर्वेश्वरः सेव्यो[12] गुञ्जामात्रः प्रसुप्तिजित् ॥ २२ ॥
गन्धो रसश्च[13] कटुतैल[14]शृतो मृतोऽर्क-
व्योषाग्निवेल्लविष[15]मेघ[16]भयावचाभिः ।
ज्वालामुखीरसविमर्दितमाक्षिकाढ्यः[17]
पिण्डीकृतः शमयति स्थिरं[18] सुप्तकुष्ठम् ॥ २३ ॥

---

१ घ. ठ. °गुणप्राणदा रे° । २ च. पञ्चाशन्मृ° । झ. पञ्चांशं मृत° । ३ घ. °रान् ॥ १२॥ ४ च. °पाचनः । ५ च. °त्वक्चतुस्त्रि° । ६ च. °गन्धविपा° । ७ घ. °सिन्दुवा° । ८ ङ. °न्नभुग्भ° । ९ ङ. जवोद° । १० घ. °खातारिज° । ११ घ. स्वेदितं दिव° । १२ ङ. सेव्यो । १३ घ. °सस्य क° । १४ घ. °लयुतो । १५ ञ. °षमेघभ° । १६ च. °मेघभ° । १७ च. °काढ्यपि° । १८ च. °रसप्त° ।

**तापलङ्केश्वरः**—विषादिकाभ्रं रसगन्धटङ्कणं सताम्रकुष्ठायसपिप्पलीरजः ।
विमर्दितं काञ्चनपत्रवारिणा प्रतापलङ्केश्वरसंज्ञितो रसः ॥ २४ ॥
स्नुह्याः कुडवं पयसः प्रस्थं दुग्धस्य नारिकेलस्य ।
गन्धकनिशयोः कर्षं पारदकर्षं च साधु संयोज्यम् ॥ २५ ॥
खरतरकिरणातापात्पक्वं तैलं विलेपितं प्राज्ञैः[1] ।
कुष्ठकिटिभेऽपहन्ति प्रबलं च समीरणं हन्यात् ॥ २६ ॥
मर्दितो[2] मूलकक्षारस्याऽऽर्द्रकस्य च वारिणा ।
सामुद्र[3]गन्धपाषाणः पिष्टः सिध्मं विलेपनात् ॥ २७ ॥
वराटपिष्टी जम्बीरनीरार्द्रा वाऽऽतपे धृता ।
मयूरमोक्षकक्षीरं मेषशृङ्गीरसो रसः ॥ २८ ॥
त्रिक्षार[4]द्विनिशाव्योषशुल्बं लेपेन दद्रुजित् ।
चतुर्थांशेन ताम्रस्य भस्मना सक्तुकेन च ॥ २९ ॥
कृतावापो हरेत्कुष्ठं चर्माख्यं पर्पटीरसः ।
मेघनादामृतानीलीगदाः कृष्णतिला मधु ॥ ३० ॥
अश्वमेधामृतं चैतैर्युक्ता गन्धककज्जली ।
उद्वर्तनेन षण्मासाद्गजचर्मविनाशनी ॥ ३१ ॥
रसगन्धकताप्यार्कशिलाजत्वम्लवेतसम् ।
अष्टमांशगुडं साज्यमाक्षिकं स्याच्छतारुषि ॥ ३२ ॥
हेममाक्षिकगन्धाश्मतीक्ष्णकान्ताभ्रकं समम् ।
द्विगुणं हरवीर्यं च दशमांशं च सक्तुकम् ॥ ३३ ॥
मञ्जिष्ठादिकषायेण वालुकायन्त्रपाचितम् ।
कृष्णवर्णैकसंकाशमिदं भस्मैव कुष्ठजित् ॥ ३४ ॥
मञ्जिष्ठाघनदारुकुष्ठखदिरश्रेष्ठावचाबाकुची-
पाठापर्पटराजवृक्षकटुकायष्ट्याह्वमूर्वानिशा ।
त्रायन्तीकिटिमारवेल्लवृषकं निम्बामृतावत्सकं
काकोली[10] सदुरालभा च परमः[11] कुष्ठक्षयघ्नो गणः ॥ ३५ ॥

---

१ च. ठ. प्राज्ञ्ये २ ङ. मार्दिता । ३ क. समुद्रग° । ङ. शमयेद्गन्धपाषाणपिष्टिः सिध्मत्रि° । ४ च. क्षारमे° । ५ झ. °क्षारं द्वि° । ६ क. °शुल्बले° । ७ घ. °रबीजं च । ८ घ. °ण्माणिक्यसं° । ९ ग. °वैक्रियसं° । १० ङ. °ली च दु° । ११ ङ. °रमं कु° ।

आरग्वधरसो[1] गुञ्जाबाकुचीगन्धकत्रयैः ।
सरसैः कङ्गुणीतैलं जयेत्सिध्ममुदुम्बरम् ॥ ३६ ॥
विपक्का कटुतैलेन पामाहृद्गन्धपिष्टिका ॥ ३७ ॥

**अथ तालेश्वरः**—हरितालपले द्वे द्वे द्रंक्षणे रसगन्धयोः[2] ।
कुर्कुटीपत्रसारेण पिष्टं ताम्रमयोरजः ॥ ३८ ॥
पञ्चशो मर्दितं धात्रीकुर्कुटीरसमाक्षिकैः ।
वर्षाभूचित्रपत्राढ्यं[3] मूषागर्भे निवेशितम्[4] ॥ ३९ ॥
पाचितं भूधरे संस्थः[5] पर्णखण्डेन भक्षयेत् ।
हिङ्गुजम्बीरवातारितैलैः पवनपीडितैः ॥ ४० ॥
माधूकसारसिन्धूत्थवचाव्योषैर्हृतौजसि[6][7][8] ।
शोफे[9] भक्ताम्बुना कुष्ठे घृतेन पयसाऽथवा ॥ ४१ ॥
धारोष्णेनाऽऽर्द्रकस्यास्तु कामलायां रसेन च ।
रसस्तालेश्वराख्योऽयं सर्वकुष्ठहरः परः[10] ॥ ४२ ॥

**अथ महातालेश्वरः**—तालताप्यशिलागन्धरसैन्द्रलवणं[11][12][13] समम् ।
तालकाद्द्विगुणं ताम्रं[14] मृतं तद्वच्च गन्धकम् ॥ ४३ ॥
अम्लेन पञ्चशः पिष्टं जम्बीरस्य पुटे पचेत् ।
मदनेन वमिं कुर्याद्विरेकं पथ्ययाऽपि च ॥ ४४ ॥
लोहचूर्णस्य चत्वारो भागाः सिद्धरसस्य षट् ।
अष्टौ नेपालताम्रस्य गन्धकेन हतस्य च ॥ ४५ ॥
जम्बीराम्लेन तत्सर्वं मर्दितं पुटपाचितम् ।
एकत्रिंशांशगरलं[15] माषद्वितयसंमितम् ॥ ४६ ॥
शुद्धः[16] संशोधनं कुर्वन्[17]मध्ये मध्ये च भक्षयेत् ।
संनिपाते मधूकेन व्योषेण पवने हितः ॥ ४७ ॥
ग्रहणीकामलापाण्डुगुल्मार्शांसि हलीमकम् ।
क्षयं च शमयत्येष महातालेश्वरो रसः ॥ ४८ ॥

**अथ सर्वकुष्ठान्तकृत्तैलम्**—कृष्णाभ्रकं बलिवसां नीलज्योतीरसं रसम् ।
कङ्गुणीनिम्बकार्पासतैलं[18] चाऽऽयसि मर्दयेत् ।
तज्जयेत्सर्वकुष्ठानि बहिरन्तश्च सेवितम् ॥ ४९ ॥

---

१ ग. °रसे गु°। २ ङ. °गन्धचित्रकैः। ग. गन्धतक्रयोः। घ. गन्धकं त्र°। ३ क. ठ. विषाचित्रकप°। च. वर्षाचित्रकप°। ४ ट. निवासित°। ५ ञ. संस्थं ६ च. मधू°। ७ ञ. °न्धूत्थं व°। ८ ट. °व्योषौ हृतौ°। घ. °व्योषैर्हृतौ°। ९ च. शोषे। १० ङ. परम्। ११ ङ. °लाटङ्क र°। १२ च. °गन्धं र°। १३ झ. °रसेन ल°। १४ क. ताम्रं तद्वच्च गन्धकं समम्। १५ च. °काविंशां°। १६ झ. शुद्धसं°। १७ च. कुर्यान्म°। १८ ङ. °लं वाऽऽय°।

**अथ कुष्ठविध्वंसनो लेपः**—रसटङ्कणगन्धार्कपिप्पलीकुष्ठचन्दनम्।
कुष्ठविध्वंसनो लेपो मातुलुङ्गाम्बुमर्दितः ॥ ५० ॥

**अथ कनकसुन्दरः**—समतुलकनकोत्थव्योमसत्त्वोत्थपिष्टीं
द्विगुणबलिसमेतां गोलमध्ये विपाच्य।
त्रिकटुदहनवेल्लैर्वत्सनाभार्धभागै
रससमनवशृङ्गदारुयुक्तैः समस्तैः ॥ ५१ ॥
अजसलिलविपिष्टैर्गुञ्जया तुल्यगोलः
कुपितकफसमुत्थं हन्ति कुष्ठं गरिष्ठम्।
तदपरमथ वातश्लेष्मजत्वग्विकारं
गुदगदमपि सर्वं हन्ति मान्द्यं सुनिन्द्यम् ॥ ५२ ॥
तुष्टेन शंभुना दिष्टः सोऽयं कनकसुन्दरः।
त्वग्विकारविनाशाय कुबेराय महात्मने ॥ ५३ ॥

**अथ हरिबलाङ्कुशः**—घनभवमृतसत्त्वं कान्तलोहार्कभस्म
त्रिगुणरससमेतं तुल्यगन्धेन युक्तम्।
समतुलकृतमेभिष्टङ्कणं ताप्यचूर्णं
हरिदलमथ बोलं खण्डसंज्ञं मनोज्ञम् ॥ ५४ ॥

**अथ त्रिपुरान्तकः**—रससममृतशृङ्गी शृङ्गवेरं विडङ्गं
मधुरदहनपाठासिन्धुवारं च वन्ध्या।
त्रिफलकनकबीजं ऋद्धिवृद्धी निशे द्वे
छगलसलिलपिष्टं सर्वमेतेन जाता ॥ ५५ ॥
लघुबदरबीजस्थूलगोली नराणां
हरति पवनपित्तश्लेष्मसंजातकुष्ठम् ॥ ५६ ॥
उक्तस्त्रिपुरया पूर्वं रसोऽयं त्रिपुरान्तकः।
सर्वदोषोत्थकुष्ठघ्नः कृपानिघ्नमनस्कया ॥ ५७ ॥

**अथ विश्वहितः**—रसेन्द्रलिप्तताम्रस्य पत्रं गन्धकमारितम्।
तत्ताम्रं पलमात्रं हि पलमात्रं हि यावकम् ॥ ५८ ॥

---

१ घ. ठ. °कोत्थं व्यो°। २ घ. ड. °णरसस°। ३ घ. °वं वह्निमा°। ४ च. °लबलबो°। ग. °लचलबो°। क. °लबलखण्डं ख°। ५ ङ. वालं। ६ झ. °पातीव्रम°। ७ झ. यामक°।

पलं चूर्णितशुद्धालं मर्दयेत्तु दिनत्रयम् ।
इति सिद्धो रसः प्रोक्तो नाम्ना विश्वहितो हितः ॥
वल्लाभ्यां तुलितः सेव्यो मरीचघृतसंयुतः ॥ ५९ ॥
निर्गुण्डीतैलमध्वाज्यकुमारीशाल्मलीरसः ।
यवो गन्धकपिष्टश्च लेपः कुष्ठक्षयावहः ॥ ६० ॥
महानिम्बस्य सारेण मर्दितां गन्धपिष्टिकाम् ।
अमृताबाकुचीकान्तात्रिफलाचूर्णसंयुताम् ॥ ६१ ॥
भक्षयेदायसे न्यस्तां कुष्ठे पाणितलोन्मिताम् ।
सा कुर्याल्लेपनात्कान्तिं षण्मासाद्वृद्धिमायुषः ॥ ६२ ॥
पालिकं व्योषसूताग्निगन्धकं सफलत्रयम् ।
काकोदुम्बरिकाक्षीरैर्मर्दितं गुटिकीकृतम् ॥ ६३ ॥
माषप्रमाणं सक्षौद्रं कुष्ठार्शः श्वासकासजित् ॥ ६४ ॥

**अथ कुष्ठकुठाररसः**—रसस्य कर्षः कर्षौ द्वौ गन्धकात्कज्जलं तयोः ।
तिलपर्ण्यलिमुण्डीनां स्वरसैः कृतभावनम् ॥ ६५ ॥
कर्षकर्षवचाधात्रीकणातीक्ष्णकृमिच्छिदान् ।
शाणं विषस्य कर्षार्धं जीरकस्य सितस्य च ॥ ६६ ॥
पलार्धं मृतताम्रस्य तथा शुण्ठ्याश्च मर्दितम् ।
भृङ्गाम्भसि घटे स्निग्धे पचेच्चणकसंमिताः ॥ ६७ ॥
वटिकाः कुष्ठविश्वाग्नित्रिफलासैन्धवान्विताः ॥
कुर्यात्कुष्ठकुठाराख्यो रसोऽयं सर्वकुष्ठजित् ॥ ६८ ॥

**अथ वज्रशेखरः**—गुञ्जाचित्रकशङ्खचूर्णरजनी भल्लातकं लाङ्गली
स्नुक्क्षीरोत्तमकन्यका घनरवा धूमोद्गमः सूतकः ।
गोमूत्रैडगजं विडङ्गमरिचं सक्षौद्रखारीजलं
पामादद्रुविचर्चिकाकिटिभजित्कण्डूघ्नमुद्वर्तनात् ॥ ६९ ॥
विष्णुक्रान्ता घनरसः सर्पाक्षी शङ्खपुष्पिका ।
गोजिह्वा क्षीरिणी निली ब्रह्मवृक्षो रुदन्तिका ॥ ७० ॥
निचुलः काकमाची च रसैरेषां विमर्दितम् ।
पक्वं तुषकरीषाग्नौ रसैद्विगुणगन्धकम् ॥ ७१ ॥
पर्पटीरसवत्पक्वं खसत्त्वेनारुणेन च ।
पृथग्गन्धकतुल्येन ताप्येन च रसाङ्घ्रिणा ॥ ७२ ॥

---

१ ज. ङ. °यापहः। २ घ. °मबाकुची घ°। ३ क. रसाद्द्विगु°।

कृतावापं गता मुण्डीहस्तिकर्ण्यमृतालिकाः ।
मूर्वाविदार्याश्च[1] रसैर्मर्दितं घृतमिश्रितम्[2] ॥ ७३ ॥
कषाये दशमूलस्य विपक्वं लेहतां गतम् ।
रसतुल्यत्रि[3]जाताग्निव्योषयष्ट्याह्वसंयुतम् ॥ ७४ ॥
स्निग्धभाण्डगतं कुष्ठी क्षयी च कृतशोधनः ।
मञ्जिष्ठादिकषायस्य कृत्वा मासं निषेवणम् ॥
माषप्रमाणं सेवेत रसोऽयं वज्रशेखरः[4] ॥ ७५ ॥

**अथ कुष्ठविद्रावणतैलम्**—द्वात्रिंशत्पलबाकुचीशृत[5]जलद्रोणाङ्घ्रिशेषे[6] चतु-
विंशत्या दनुजस्य कान्तरसयोर्निष्कैः[7] पृथक्पञ्चभिः ।
ताम्बूलीरसमर्दितैस्तिलभवप्रस्थं[8] शृतं[9] चिक्कणे
पाके सत्यवतार्य कल्कसहितं धान्ये द्विपक्षं[10] क्षिपेत्[11] ॥ ७६ ॥
तत्क्षीरान्नाशिना पीतं लिप्तं[12] कुष्ठकुलान्तकम् ।
श्वित्रं दाहजमश्वेतं[13] रूपमूलं[14] च लुम्पति ॥ ७७ ॥

**अथ दद्रुकुष्ठविद्रावणरसः***—रसगन्धकताप्याभ्रकान्तकृष्णाभ्रभस्मकम् ।
हिङ्गुलं मधुकं[15] कुष्ठं सर्वं समविभागिकम् ॥ ७८ ॥
अम्लवेतसतोयेन त्रिदिनं परिमर्दयेत् ।
विशोष्याऽऽज्यमधुभ्यां च मृदित्वा त्रिदिनं पुनः ॥ ७९ ॥
दत्त्वा[16] जीर्णं गुडं तुल्यं कोलास्थिप्रमिता वटीः ।
छायाशुष्काः प्रकुर्वीत शंभोरग्रे च पूजयेत् ॥ ८० ॥
इयं हि पञ्चाङ्गकृता[17]भिधाना नागार्जुनोक्ता गुटिका च नूनम् ।
सर्वाणि कुष्ठानि विचर्चिकां च दद्रूणि विद्रावयति क्षणेन ॥८१॥

**अथ माणिक्यतिलकः**—रसगन्धकताप्यालकान्ततीक्ष्णाभ्रभस्मकम् ।
हिङ्गुलं मधुकं कुष्ठं सर्वं समविभागिकम् ॥ ८२ ॥
शतमूलीनिजद्रावैर्मञ्जिष्ठादिकषायतः ।
त्रिदिनं त्रिदिनं सम्यक्परिमर्द्य विशोष्य च ॥ ८३ ॥
ततस्तु पक्वमूषायां संनिरुध्यातियत्नतः ।
प्रक्षिप्य वालुकायन्त्रे प्रपुटेद्दिवसद्वयम् ॥ ८४ ॥

* ज. नागार्जुनगुटिका ।

१ ङ. दूर्वाविदार्यैश्च । २ घ. °श्रितैः ॥ ७३ ॥ ३ च. °तुल्यं त्रि° । ४ ङ. चन्द्रशेखरः । ५ घ. °चीसृत° । ङ. °चीशृतजले द्रो° । च. °चीमृतजलं द्रो° । ६ घ. च. °णावशे° । ७ °सयोः पक्वैः पृ° । ८ ङ. °भवैः प्र° । च. °भवे प्र° । ९ घ. सृतं । १० च. द्विपक्वं । ११ च. खनेत् । १२ च. °सं क्षिप्रकु° । १३ च. °तं मूलपं मूलमेष्यति । १४ घ. रूपं मृ° । १५ च. मधुरं । १६ च. पक्त्वा । १७ ज. °ङ्क्षता° ।

माणिक्यतिलको नाम[1] रसो नासत्यकीर्तितः।
एष कुष्ठं हरत्याशु सन्मित्रमिव हृद्यथाम् ॥ ८५ ॥

**अथ परहितः**—श्वेतपाठा जटा श्वेता श्वेता चैव पुनर्नवा।
पिष्ट्वा जलेन तत्कल्कैः प्रकुर्यान्नालमूषिकाम्[2] ॥ ८६ ॥
स्थालीमध्ये च तां क्षिप्त्वा क्षिपेत्संशोधितं रसम्।
क्षिपेदुपरि संपेष्य द्व्यञ्जलिप्रमितं पटु ॥ ८७ ॥
पिधानं तन्मुखे दत्वा संनिरुध्यातियत्नतः।
अधस्ताज्ज्वालयेद्वह्निं पिधान्यामम्बु निक्षिपेत् ॥ ८८ ॥
यामत्रितयपर्यन्तं जातेऽथ शिशिरे ततः।
[3]क्रोडकेशैः समाकृष्य मृतं पारदमाहरेत् ॥ ८९ ॥
न चेदेतावता भस्म पुनरेव पुटेद्रसम् ॥ ९० ॥
तद्भस्मातिविषं विषं[4] क्रमिहरं व्योषोत्तमा गन्धजं
चूर्णं[5] द्वादशहाटकं खलु गुडो द्वात्रिंशदंशोन्मितः।
तत्सर्वं परिचूर्णितं प्रतिदिनं वल्लैश्चतुर्भिर्मितं
[6]चेत्थं हन्ति समस्तरोगनिवहं नागं गरुत्मानिव ॥ ९१ ॥
विशेषात्सर्वकुष्ठघ्नो रसोऽयं परिकीर्तितः।
ख्यातः परहितो नाम्ना भानुना भूरिभानुना ॥ ९२ ॥

**अथ तालकेश्वरः**—वीर्यं पुरारेरिहनागतुल्यं भागद्वयं चाप्यथ तालकस्य।
शुद्धेन नागेन रसो विशुद्धो विमर्दनीयो[7] हरितालकं च ॥ ९३ ॥
मूत्रं[8] गवां षोडशभागमानं[9] निधाय[10] भाण्डेऽथ पिधाय[11] तस्मिन्।
दीपाग्निना तत्परिशोष्य सर्वं मूत्रं ततस्तालकशुद्धता स्यात् ॥
ततस्तु जम्बीररसेन सर्वं विमर्दनीयं त्रिदिनं त्रिवारम् ॥ ९४ ॥
भाव्यं कुमार्याः सलिलेन भृङ्गवज्राह्वकन्देन च वारयुग्मम्।
कुष्ठे ददीतास्य रसस्य वल्लत्रयं रसैरार्द्रकजैर्विजेतुम् ॥ ९५ ॥
शाखास्तु पक्वत्वमथो सुषुप्तिं स्तम्भं च मन्योस्त्वथ[12] मण्डलानि।
गवां पयः शर्करया समेतं स्तम्भातिरेके[13] सति संनियोज्यम् ॥ ९६ ॥
औदुम्बरं हन्ति सितामधुभ्यां कृष्णं[14] च कुष्ठं त्रिफलारसेन।
गुडार्द्रकाभ्यां गजचर्मसिध्मविचर्चिकास्फोटविसर्पदद्रून् ॥ ९७ ॥

---

१ च. °म सोमसत्यप्रकी°। २ ङ. °र्यान्मल्लमू°। ३ ङ. क्रोडकोशे। घ. क्रेडकेशे। ४ घ. त्रिषक्कु°। ५ घ. चूर्णद्वा°। ६ च. श्रेष्ठं। ७ ङ. विमेलनीयो हारितालकश्च। ८ च. मूत्रे। ९ च. °माने नि°। १० च. विधाय। ११ ङ. विधाय। १२ घ. °न्यास्त्वथ। १३ ग. °म्भाय रे°। १४ ज. कुष्ठं।

निहन्ति पाण्डुं विविधां विपादीं सरक्तपित्तं कटुकीसिताभ्याम् ।
रोगेषु सर्वेष्वपि वासराणि त्रिसप्तसंख्यानि रसः प्रदेयः ॥ ९८ ॥
रसप्रयोगावसितौ सुषुप्त्यां क्वाथं पिबेच्छिन्नरुहासनोत्थम् ।
मासद्वयं मुद्गघृतान्वितान्नं पथ्यं ततोदुम्बरभेषजान्ते ॥ ९९ ॥
अङ्गानि पञ्चापि पलोन्मितानि दद्यादरिष्टस्य तथाऽऽढकीनाम् ।
क्वाथेन युक्तं सघृतौदनं च पथ्याय कृष्णेऽप्यथ कृष्णवर्णे ॥ १०० ॥
रसावसाने सितया समेतां पादोन्मितामामलकीं प्रदद्यात् ।
अन्नं समुद्गं सघृतं नियोज्यं मासद्वयं स्यादथवा विचिह्नम् ॥ १०१ ॥
रसप्रयोगावसितौ प्रयुञ्ज्यादङ्गानि पञ्च स्वर्वनिःसृतानि ।
पादोन्मितानीह च मासयुग्मं पथ्याय दुग्धौदनमाददीत ॥ १०२ ॥
स्यात्तालकेशाख्यरसप्रयोगे तक्रं च मासं परिवर्जयीत ॥ १०३ ॥

**अथ खगेश्वरः**—पलेन प्रमितः सूतः पलेन प्रमिता वसा ।
खगः पलमितः सर्वं मर्दयेदर्जुनद्रवैः ॥ १०४ ॥
गोलीकृत्य विशोष्याथ गोलं कूप्यां निरुध्य च ।
ततस्तां सुदृढे भाण्डे मूषां क्षिप्त्वा निरुध्य च ॥ १०५ ॥
पचेत्सार्धदिनं पश्चात्स्वाङ्गशीतं विचूर्णयेत् ।
खगेश्वरो रसो वल्लप्रमितः कुटजान्वितः ॥ १०६ ॥
श्वेतकुष्ठं निहन्त्याशु श्वासकासगदानपि ।
सघृतः पित्तजं कुष्ठं मधुना मेहमेव च ॥
पथ्यं दोषानुरूपेण बुद्धेन मुनिनोदितम् ॥ १०७ ॥

**अथ कुष्ठनाशनः**—सूतभस्म द्विनिष्कं स्याद्गन्धकं च चतुष्पलम् ।
सार्धं चतुष्पलं चित्रं चतुर्विंशत्पलं भवेत् ॥ १०८ ॥
बाकुचीबीजचूर्णस्य द्वादशघ्नं मरीचकम् ।
सर्वमेकत्र संयोज्य निष्कद्वितयसंमितम् ॥ १०९ ॥
मधुना लेहयेत्प्रातः सर्वकुष्ठविनाशनः ॥ ११० ॥

**अथाऽऽरोग्यवर्धनीगुटिका**—रसगन्धकलोहाभ्रशुल्बभस्म समांशकम् ।
त्रिफला द्विगुणा प्रोक्ता त्रिगुणं च शिलाजतु ॥ १११ ॥
चतुर्गुणं पुरं शुद्धं चित्रमूलं च तत्समम् ।
तिक्ता सर्वसमा ज्ञेया सर्वं संचूर्ण्य यत्नतः ॥ ११२ ॥

---

१ क. °णि त्रिःस°। २ क. रसः प्रदेयोऽत्र°। ३ घ. °वर्त्मान्°। ४ च. °थनावि°। झ. °थ नागचिह्ने। ५ क. °वत्रिसृ°। ६ च. °दोन्नता°। ७ घ. °सं च प°। झ. °सं च विवर्जनीयम्। ८ झ. निरुध्याथ गोलं कूप्यां विशोषयेत्। ९ ञ. बुध्वेन। १० झ. °चूर्णस्याद्द्वादशान्तं म°। ११ च.ठ.ड. द्विगुणं। १२ घ. परं।

निम्बवृक्षदलाम्भोभिर्मर्दयेद्विदिनावधि ।
ततश्च वटिका कार्या राजकोलफलोपमा ॥ ११३ ॥
मण्डलं सेविता सैषा हन्ति कुष्ठान्यशेषतः ।
वात्तपित्तकफोद्भूताञ्ज्वरान्नानाप्रकारजान् ॥ ११४ ॥
देया पञ्चदिने जाते ज्वरे रोगे वटी शुभा ।
पाचनी दीपनी पथ्या हृद्या मेदोविनाशिनी ॥ ११५ ॥
मलशुद्धिकरी नित्यं दुर्धर्षे क्षुत्प्रवर्तिनी ।
बहुनाऽत्र किमुक्तेन सर्वरोगेषु शस्यते ॥ ११६ ॥
आरोग्यवर्धनी नाम्ना गुटिकेयं प्रकीर्तिता ।
सर्वरोगप्रशमनी श्रीनागार्जुनयोगिना ॥ ११७ ॥

**अथ नारायणः**—रसभस्मसमानेन गन्धकेन समन्वितम् ।
तुल्यभागपुरोपेतं तुल्यत्रिफलयाऽन्वितम् ॥ ११८ ॥
वातारितैलसंयुक्तं सेवितं च पलोन्मितम् ।
मासेन नाशयेत्कुष्ठं दुःसाध्यमपि देहिनाम् ॥ ११९ ॥
क्षयं भगन्दरं शूलं मूलं गुल्मं च पाण्डुताम् ।
ग्रहणीं च महाघोरां मन्दाग्निमपि दुस्तरम् ॥ १२० ॥
एवंविधान्महारोगान्विनिहन्ति न संशयः ।
श्लेष्मरोगान्हरेत्सर्वान्रसो नारायणाभिधः ॥ १२१ ॥

**अथ *मेदिनीसाररसः**—पलत्रयं मृतं लोहं मृतं शुल्बं पलत्रयम् ।
भृगराजाम्बुगोमूत्रत्रिफलाकथितैः पृथक् ॥ १२२ ॥
पुटेत्त्रिवारं यत्नेन ततस्तस्मिन्विनिक्षिपेत् ।
अत्यम्लकाञ्जिकं पश्चात्पचेद्यामचतुष्टयम् ॥ १२३ ॥
ततश्च तुल्यगन्धेन पुटानां विंशतिं पचेत् ।
पलमात्रं मृतं सूतं रुद्रांशममृतं तथा ॥ १२४ ॥
कटुत्रयं समं सर्वैः पिष्ट्वा सम्यग्विधारयेत् ।
रसोऽयं मेदिनीसारो नन्दिना परिकीर्तितः ॥ १२५ ॥
सेवितो वल्लमानेन घृतत्रिकटुकान्वितः ।
हन्ति कुष्ठानि सर्वाणि श्वित्राणि विविधानि च ॥ १२६ ॥

---

* ग. मेदिनीरसः ।

---

१ क.ठ. जातज्व°। २ ज. नित्यमुत्कर्षात्क्षुत्प्रवर्धनी । ३ क. °णाह्वयः । ४ च. °त्यम्लैः काञ्जिकैः प°। ५ घ. °टुनान्वि°।

गुल्मं प्लीहामयं हिक्कां शूलरोगामयं तथा ।
उदावर्तं महावातं कफं मन्दानलं तथा ॥ १२७ ॥
गलग्रहं मदोन्मादं कर्णदन्तामयं तथा ।
सर्वाधिकं[1] विषं घोरं व्रणं लूताभगन्दरम् ।
विद्रधिं चान्त्रवृद्धिं च शिरस्तोदं च नाशयेत् ॥ १२८ ॥

**अथ जन्तुघ्नी गुटिका**—सूतगन्धौ समौ ताभ्यां मण्डूरं सप्तमांशतः ।
विधाय कज्जलीमाखुकर्ण्या[2] संमर्दयेत्त्र्यहम्[3] ॥ १२९ ॥
ततो मण्डूरमानेन[4] क्षुद्रदीप्यं विनिक्षिपेत् ।
आरुष्करकषायेण[5] दिनमेकं विमर्दयेत् ॥ १३० ॥
ब्रह्मबीजं समुद्रस्य फलं जातीफलं तथा ।
विषतिन्दुकबीजं च ताप्यं सर्वं समांशकम् ॥ १३१ ॥
विडङ्गं सममेतैश्च[6] सूक्ष्मचूर्णं प्रकल्पयेत् ।
रसतुल्यं हितं चूर्णं रसेन सह मेलयेत् ॥ १३२ ॥
वासा च निम्बत्वग्वंशो वेल्लव्योषाम्बुदं तथा ।
एषां क्वाथेन सप्ताहं त्र्यहं मूर्वाटके रसे ॥ १३३ ॥
भावयित्वा चणप्रायाः कर्तव्या वटिकाः शुभाः ।
अश्वनिम्बादिजक्वाथे प्रदत्तैका[7] वटी शुभा ॥ १३४ ॥
पातयेज्जठराज्जन्तून्[8]सर्वदेहगदान्हरेत्[9] ।
कुष्ठं[10] जन्तून्निहन्त्याशु द्वित्रिवारप्रयोगतः ॥ १३५ ॥

**अथ धन्वन्तरिः**—सूतगन्धार्कसौभाग्यकङ्कुष्ठं रक्तचन्दनम् ।
कणा[11] चैतानि तुल्यानि मर्दयेल्लुङ्गवारिणा ॥ १३६ ॥
एकाहमथ संशोष्य स्थापयेदतियत्नतः ।
रसो निःशेषकुष्ठघ्नो धन्वन्तरिरिति स्मृतः ॥ १३७ ॥
निर्दिष्टः[12] शंभुना सर्वरोगभीतिविनाशनः ।
पथ्याघृतयुतो वायुं सिन्धुविश्वान्वितोऽपि वा ॥ १३८ ॥

**अथ वज्रधारः**—वज्रसूताभ्रहेम्नां च भस्म योज्यं समं समम् ।
सर्वांशतालकं तुल्यं शिग्रुधत्तूरजद्रवैः ॥ १३९ ॥
मर्द्यः स्नुह्यर्कजैः क्षीरैर्दिनैकं चाथ भावयेत् ।
सप्ताहं बाकुचीतैलैस्तन्माषैकं तु भक्षयेत् ॥ १४० ॥

---

१ घ. सर्पादिकं । २ घ. °माशुक° । ३ घ. ङ. °येत्त्र्यह° । ४ घ. मधुर° । ५ घ. अरु° । ६ क. °मेभिश्च । ७ च. प्रवृत्तैका । ८ घ. °येज्जाठराज्जन्तू° । ९ ज. °गतान्ह° । १० घ. कुष्ठज° । ११ ग. कर्णि । १२ घ. °र्दिष्टस्तण्डुना । ज. °र्दिष्टस्तन्दुना ।

वज्रधारो रसः ख्यातः सर्वकुष्ठनिकृन्तनः ॥ १४१ ॥

**अथ सर्वकुष्ठाङ्कुशः**[*]—मुसलीबा[1]कुचीबीजं[2] निर्गुण्डीमूलतुल्यकम् ।
मध्वाज्याभ्यां लिहेत्कर्षमनु स्यात्सर्वकुष्ठनुत् ॥ १४२ ॥

**अथ महातालेश्वरः**—तालं ताप्यं शिलासूतं शुद्धं सैन्धवटङ्कणम् ।
समांशं चूर्णयेत्खल्वे सूताद्द्विगुण[3]गन्धकम् ॥ १४३ ॥
गन्धतुल्यं मृतं ताम्रं जम्बीरैर्दिनपञ्चकम् ।
मर्द्यं षड्भिः पुटैः पाच्यं भूधरे संपुटोदरे ॥ १४४ ॥
पुटे[4] पुटे द्रवैर्मर्द्यं सर्वमेकं तु षट्पलम् ।
द्विपलं मारितं ताम्रं लोहभस्म चतुष्पलम् ॥ १४५ ॥
जम्बीराम्लैस्तु तत्सर्वं दिनं मर्द्यं पुटेल्लघु ।
त्रिंशदन्तं पुटं[5] चास्य क्षिप्त्वा सर्वं विचूर्णयेत् ॥ १४६ ॥
महिष्याज्येन संमिश्रं निष्कार्धं भक्षयेत्सदा ।
मध्वाज्यैर्बाकुचीचूर्णं कर्षमात्रं लिहेदनु ॥ १४७ ॥
सर्वकुष्ठं निहन्त्याशु महातालेश्वरो रसः ॥ १४८ ॥

**अथ कुष्ठकुठारः**—सूतभस्मसमं गन्धं मृतायस्ताम्रगुग्गुलुः ।
त्रिफला विषं[6]शुण्ठी च चित्रकश्च शिलाजतु ॥ १४९ ॥
इत्येवं चूर्णितं कुर्यात्प्रत्येकं निष्कषोडश ।
चतुःषष्टिकरञ्जस्य बीजचूर्णं प्रकल्पयेत् ॥ १५० ॥
चतुःषष्टिमृतं ताम्रं मध्वाज्याभ्यां विलोडयेत् ।
स्निग्धभाण्डगतं खादेद्द्विनिष्कं सर्वकुष्ठजित् ॥ १५१ ॥
रसः कुष्ठकुठारोऽयं गलत्कुष्ठनिकृन्तनः ।
पथ्यं[7] तु मधुरं[8] देयं तदभावे गुडोदनम् ॥ १५२ ॥
पातालगरुडीमूलं मधुपुष्पी च धान्यकम् ।
सितया भक्षये[9]त्कर्षमतितापप्रणुत्तये ॥
लिह्यान्नागबलामूलं मध्वाज्यैर्हन्ति तापनुत् ॥ १५३ ॥

**अथ वज्रतैलम्**—वज्र[10]क्षीरं रविक्षीरं धत्तूरं चित्रकद्र[11]वम् ।
महिषीविड्भवं द्रावं सर्वांशं तिलतैलकम् ॥ १५४ ॥

---

* ख. मुसलीचूर्णम् ।

---

१ ट. °बाहुचीतुल्यं नि° । २ घ. °बीजनिर्गुण्डीमूलमेव च । ३ घ. सूताद्द्विगु° । ४ क. °टे द्रवैर्दिनं, मर्द्यं ५ च. पुटे वा स्यात्क्षिप्त्वा । ६ घ. ङ. °षमुष्टिश्च चि° । ७ घ. °थ्यं विमधुरैर्देयं । झ. °थ्यं त्रिमधुरैर्देयात्तद° । ८ ग. °धुरैर्देयं ९ झ. °येन्नित्यम° । १० घ. वज्रीक्षी° । ११ च. °द्रवैः ।

पचेत्तैलावशेषं तु तत्तैलं प्रस्थमात्रकम् ।
गन्धकाग्निशिलातालं विडङ्गातिविषाविषम् ॥ १५५ ॥
तिक्तकोशातकी कुष्ठं वचा मांसी कटुत्रयम् ।
दारुहरिद्रा यष्ट्याह्वं[1] सज्जीक्षारं च जीरकम् ॥ १५६ ॥
कर्षांशं देवदारुं च चूर्णं तैले विमिश्रयेत् ।
वज्रतैलमिदं ख्यातं मर्दनात्सर्वकुष्ठनुत् ॥ १५७ ॥

**अथ स्वर्णक्षीरः**—क्षिप्त्वा[2] तक्रपुटे पच्यात्काञ्चनीपलपञ्चकम् ।
तक्रे जीर्णे समुद्धृत्य पुनः क्षीर[3]पुटे पचेत् ॥ १५८ ॥
क्षीरे जीर्णे समुद्धृत्य जलैः प्रक्षाल्य शोषयेत् ।
तच्चूर्णितं पञ्चमूलं मरिचानां पलद्वयम् ॥ १५९ ॥
वल्लैकं मूर्छितं सूतमेकीकृत्य तु भक्षयेत् ।
निष्कैकं सुप्त[4]कुष्ठार्तः स्वर्णक्षीर[5]रसो ह्ययम् ॥ १६० ॥

**अथ महाभल्लाततैलम्**—पलां[6]द्विखण्डितं कुर्याद्भल्लातशतपञ्चकम् ।
क्षिप्त्वा पच्याच्छनैर्वह्नौ [7]तैले द्वादशं[8]त्रस्यके ॥ १६१ ॥
यावत्तरन्ति ते पक्त्वा तत्तैलं पाचयेत्पुनः ।
मधुपाके तु संप्राप्ते ह्यवतार्य तु चूर्णयेत् ॥ १६२ ॥
सर्वकुष्ठं निहन्त्याशु महाभल्लाततैलकम् ॥ १६३ ॥

**अथ त्रैलोक्यविजयतैलम्**—सूतभस्मसमं गन्धं मृतायस्ताम्रगुग्गुलुः ।
त्रिफला विषमुष्टिश्च चित्रकश्च शिलाजतु ॥ १६४ ॥
रसं गन्धं विषं तालं स्वर्णक्षीरीं[10] रुदन्तिका ।
वरुणाम्लेन संचूर्ण्य प्रति[11]निष्कद्वयं द्वयम् ॥ १६५ ॥
क्षिपेत्तस्मिन्विशोष्याथ क्रमान्निष्कं सदा लिहेत् ।
त्रैलोक्यविजयं तैलं सर्वकुष्ठहरं ध्रुवम् ॥ १६६ ॥

**अथ महामार्तण्डतैलम्**—शाकं निम्बाङ्कोल्लवह्निराजवृक्षाक्षिस्नुग्भवम् ।
गर्भशुष्कं[12] शुभं खण्डं नारिके[13]लंप्रियालकम् ॥ १६७ ॥
वार्ता[14]रिचक्रमर्दस्य बीजं बाकुचिजं तथा ।
समं पातालयन्त्रेण तैलं ग्राह्यं प्रयत्नतः ॥ १६८ ॥

---

१ घ. °ह्वं स्वर्जीक्षारं सजी°। २ घ. हेमाह्वां पञ्चपालिकां क्षिप्त्वा तक्रघटे पचेत् । ३ ग. °रघटे । ४ च. सप्तकुष्ठान्तः । ५ ग. °क्षीरीर°। ६ ग. °ल्लाद्वि ख°। ७ च. तैलं द्वादशपञ्चकम् । ८ घ. °शपालिके । ९ ज. तत्क्षणात् । १० घ.ठ. °री च दन्तिका । ११ ग. °निष्कं द्व°। १२ च. °ष्कं खण्डख°। १३ च. °लकपाल°। १४ झ. °तारिं च°।

प्रस्थौ द्वौ तिलतैलस्य कुष्ठचूर्णं पलद्वयम् ।
स्वर्णक्षीरीपलैकं च क्षिप्त्वा पक्त्वा[1]ऽवतारयेत् ॥ १६९ ॥
पूर्वतैले चतुष्प्रस्थे तैलीभूते विनिःक्षिपेत् ।
महामार्तण्डतैलोऽयं लेपात्कुष्ठं नियच्छति ॥ १७० ॥
अतिकण्डूं कृमिं पाकं स्फोटकानि च नाशयेत् ।
कुष्ठं च काञ्चनीतैलैर्मर्द्याल्लेप्यं सुघर्षि[2]तम् ॥ १७१ ॥
कुमारीसैन्धवं ले[3]प्यं शुष्ककण्डूहरं परम् ।
सैन्धवेन महामुण्डीलेपो हन्ति [4]विपादिकाम् ॥ १७२ ॥
शिलाशम्भुबीजं वरं कुष्ठगन्धं मरीचं तथा जीरकं देवधूपम् ।
निशासर्पिषा मर्दितं मन्दवारे हरेत्कायकण्डूव्रणस्फोटगण्डान् ॥ १७३ ॥

**अथ कुष्ठान्तपर्पटी**—पलैकं शुद्धसूतस्य कर्षैकं शुद्धगन्धकम् ।
गन्धतुल्यं मृतं ताम्रं सूतांशं मर्दयेद्विषम् ॥ १७४ ॥
सर्वतुल्यं पुनर्गन्धं दत्वा किंचिद्विशो[5]षयेत् ।
घृताभ्यक्ते लोहपात्रे पच्याद्यावद्द्रवीभवेत् ॥ १७५ ॥
रम्भापत्रे [6]पुटे वाऽथ पातयेत्पर्प[7]टीं तदा ।
माषैकं चूर्णितं खादेद्गजचर्म[8] नियच्छति ॥
निष्कैकं बाकुचीचूर्णं लेहयेदनुपानकम् ॥ १७६ ॥

**अथ कासीससारः**—पलं रसं हि कासीसैर्युतं पञ्चगुणैः सह ।
मर्दयेद्यामपर्यन्तमर्जुनस्य त्वचो रसैः ॥ १७७ ॥
शरावसंपुटे[9] रुद्ध्वा पुटेत्क्रोडपुटेन हि ।
रसः कासीसंबद्धो[10]ऽयं मधुना वल्लतुल्यकः ॥ १७८ ॥
[11]शाणं बाकुचिकायुक्तः सेवितो हन्ति निश्चितम् ।
त्रिभिर्मासैः किलासं हि दद्रूण्यपि विशेषतः ॥ १७९ ॥

**अथ कृमिचिकित्सा**—अजमोदाफलास्थीनि [12]क्षीरिणं रसगन्धकम् ।
आखुपर्णी रसं खादेत्सता[13]म्रं कृमिशूलनुत् ॥ १८० ॥

**अथ सर्वेश्वरः**—शुद्धसूतं चतुर्गन्धं खल्वे यामं विमर्दयेत् ।
मृतताम्राभ्रलोहानि हिङ्गुलं च पलं पलम् ॥ १८१ ॥
सुवर्णं रजतं चैव प्रत्येकं दशनिष्ककम् ।
माषैकं मृतवज्रं च तालसत्त्वं पलद्वयम् ॥ १८२ ॥

---

१ ग. °क्त्वा च कार°। २ घ. °र्षिते। ३ घ. लेह्यं। ४ घ. अनामिकाम्। ५ ग. °शोधये°। ६ घ.ठ.ड. पटे। ७ च. °र्पटी तथा। ८ ग. °चर्म नि°। ९ क. °पुटं रु°। १० घ. °ससारोऽयं। ११ ञ. शाणवा°। १२ ज. क्षीरिणा। १३ क. °ताम्रक°।

जम्बीरोन्मत्तवासाभिः स्नुह्यर्कविषमुष्टिभिः ।
मर्द्यं हयारिजैर्द्रावैः प्रत्येकं तु दिनं दिनम् ॥ १८३ ॥
एवं सप्तदिनं मर्द्यं तद्गोलं वस्त्रवेष्टितम् ।
वालुकायन्त्रगं स्वेद्यं त्रिदिनं लघुनाऽग्निना ॥ १८४ ॥
आदाय चूर्णयेत्सूक्ष्मं पलैकं योजयेद्विषम् ।
द्विपलं पिप्पलीचूर्णं मिश्रं सर्वेश्वरो रसः ॥ १८५ ॥
द्विगुञ्जं भक्षयेत्क्षौद्रैः सुप्तिमण्डलकुष्ठजित् ।
बाकुचीं देवदारुं च कर्षमात्रं सुचूर्णितम् ॥ १८६ ॥
लिहेदेरण्डतैलेन ह्यनुपानं सुखावहम् ।
गुग्गुलुं योगराजं वा योज्यं मण्डलशान्तये ॥ १८७ ॥

अथ श्वित्रारिः—श्वित्रं तु कृष्णमरुणं मरुदस्रगामि-
पित्तेन रोमशतनं च विदाहितां च ।
मांसाश्रितं बहुसितं कफतः सकण्डु
मेदोगतं बलवदेव यथोत्तरं स्यात् ॥ १८८ ॥
कासीसरसगन्धानि मर्दयेत्सुरसारसैः ।
संपुटे पुटयेद्दत्वा शार्ङ्गेरीमधरोत्तराम् ॥ १८९ ॥
सर्वमेतच्च संचूर्ण्य तण्डुलान्दश सप्त वा ।
आरभ्यं वर्धयेद्यावत्पञ्चषष्टिक्रमेण हि ॥ १९० ॥
अनुपानाय मध्वाज्यं दध्याज्यं नवनीतकम् ।
धात्र्यार्द्रकरसैश्चैव तिन्दुकं कदलीफलम् ॥ १९१ ॥
श्वित्रारिसंज्ञितो[8] ह्येष[9] चित्रकुष्ठनिषूदनः ॥ १९२ ॥
निम्बपत्रनिशाकृष्णाबाकुचीबीजकं समम् ।
चूर्णयित्वा पिबेद्दुग्धैः प्रभाते श्वित्रनाशनम् ॥ १९३ ॥
रसगन्धकतुत्थार्कं बाकुचीकाथमर्दितम् ।
सेवितं सोमतैलेन श्वित्रकुष्ठं नियच्छति ॥ १९४ ॥

अथ चन्द्रप्रभावटिका—पिष्टो निम्बुक[11]गोमयूरसलिले[12] सार्धो[13] रसो गन्धका-
न्मूषायां घननादपिण्डसहितं पक्कं करीषे तिलान्[14] ।
बाकुच्याश्च फलानि गोजलकृता चन्द्रप्रभेति श्रुता
श्वित्रं[15] तक्रभुजो निहन्ति वटिका क्षाराम्लतैलं त्यजेत् ॥ १९५ ॥
इति चन्द्रप्रभागुटिका ।

---

१ घ. ङ. °येच्चक्ष्लक्ष्णं प°। २ च °सुप्तम°। ३ घ. °कुचीदे°। ४ क. चित्रं । ५ घ. °शमनं । ६ घ. चाङ्गेरीमधरोत्तरम् । ७ च. °भ्य मर्दये°। ८ क. °संज्ञको ह्ये°। ९ ग. ह्येषः श्वित्र°। १० क. °चीरसम°। ११ च. निम्बक°। १२ घ. °लिलैः सा°। १३ क. सार्धं । १४ घ. °लात् । १५ झ. °त्रं नक्तभु°।

रसद्विगुणगन्धकं त्रिगुणताम्रलिप्तं पचे-
द्गृहीतमनु कज्जलीं खदिरबाकुचीनिम्बजैः।[1]
रसैः पुटविपाचितं समलया कषायं पिबे-
त्किलासमरुणं सितं जयति शुद्धतक्राशिनः॥ १९६॥

**अथोदयादित्यः**—शुद्धसूतं द्विधा गन्धं मर्द्यं कन्याद्रवैर्दिनम्।
तद्गोलं हण्डिकामध्ये ताम्रपात्रेण रोधयेत्॥[2] १९७॥
सूतकाद्विगुणेनैव[3] शुद्धेनाधोमुखेन वै।
पार्श्वे भस्म निधायाथ पात्रेऽर्धे[4] गोमयं जलम्॥ १९८॥
किंचित्किंचित्प्रदातव्यं चुल्ल्यां यामद्वयं[5] पचेत्।
चण्डाग्निनोद्धृत्य ततः स्वाङ्गशीतं विचूर्णयेत्॥ १९९॥
काकोदुम्बरिकावह्नित्रिफलाराजवृक्षकम्।
विडङ्गं बाकुचीबीजं क्राथयेत्तेन भावयेत्॥ २००॥
दिनैकमुदयादित्यो रसो भक्ष्यो द्विगुञ्जकः।
खदिरस्य कषायेण बाकुचीबीजचूर्णकम्॥ २०१॥
तुल्यं मृद्वग्निना पिण्डं जातं यावत्पचेल्लघु।
त्रिनिष्कं तद्रविक्षीरैः क्राथैर्वा त्रैफलैरनु॥ २०२॥
त्रिदिनान्ते भवेत्स्फोटः सप्ताहे वा न संशयः।
नीलीं गुञ्जां च कासीसं धत्तूरं हंसपादिकाम्॥ २०३॥
सूर्यावर्तं[6] चाम्लपर्णीतुल्यं[7] पिष्ट्वा प्रलेपयेत्।
स्फोटस्थाने प्रशान्त्यर्थं सप्तरात्रं पुनः पुनः॥
श्वेतकुष्ठं निहन्त्याशु साध्यासाध्यं न संशयः॥ २०४॥
अल्पं श्वेतं निघृष्यादौ रक्तमण्डलपल्लवैः।
शिलापामार्गभस्मापि लिप्त्वा श्वित्रं विनाशयेत्॥ २०५॥
लेपो वाऽङ्कोलतैलेन काञ्चन्या काञ्जिकेन वा।
गुञ्जाफलाग्निमूलं च लेपितं श्वेतकुष्ठजित्॥ २०६॥
सूते पले भूधरयन्त्रमध्ये [8]संजारयेद्गन्धपलं[9] ततश्च।
सूतेन गन्धस्य पलत्रयं[10] च दत्त्वाऽथ निम्बूत्थरसैर्विमर्द्य॥२०७॥
स्वरांशिकाबाकुचिकाग्निभृङ्गकोरण्टनीरैः परिमर्दयेत।
दिनैकमेकं कटुतुम्बिनीजलैर्मर्द्यं ततः काञ्चनकूपिकान्तः[11]॥२०८॥

---

१ झ. ङ. °चीभृङ्गजैः। २ च. ठ. °त्रे निरो°। ३ झ. °कात्रिगु°। ४ घ. पात्रार्धे। ५ घ. °द्वये प°। ६ अ. °र्तं ताम्रप°। ७ घ. चाम्रप°। ८ क. संयोजये°। ९ अ. गन्धेन। १० अ. °त्रयेण द°। ११ घ. काचसुकू°। ज. °काचसुकूप्यका°।

निक्षिप्य भाण्डे सिकतोदरान्तर्यामद्वयं स्वेदय तं ततश्च ।
ददीत वल्लद्वयमस्य कृष्णपर्णेन सार्धं त्वथवा तदर्धम् ॥ २०९ ॥
पलाशमूलं त्वनुपाययीत तक्रेण सार्धं च ददीत पथ्यम् ।
उष्णे क्षिपेत्तैलविमर्दितं च स्फोटा यदि स्युः सहसा च गात्रे ॥ २१० ॥
पलत्रयं गन्धकभृङ्गकृष्णतिलोत्थतैलं कटुतुम्बिनी च ।
भल्लाततैलं कटुनिम्बबीजं सर्वं समानं परिभावयेत ॥ २११ ॥
त्रिःसप्तकं भृङ्गरसैस्तु तोयं श्वेतारियोगः समुपैति सिद्धिम् ।
पलार्धमानेन ददीत चामुं सिताघृताक्तं दिनजन्मकाले ॥ २१२ ॥
विवर्जयेत्सूरणमाषमांसवृन्ताकमुद्गानि कषायकादि ।
कुमार्गजन्तीनुरपक्षसागरैर्वैरुष्टिशाभास्करलोकभाषया ॥ २१३ ॥
कल्कीकृतं यन्मधुना च संयुतं करोति तारं भ्रमरप्रभं च तत् ॥ २१४ ॥

गन्धकाश्वत्थरुचकश्वेतसूरणटङ्कणाः ।
तिलपुष्पं च तत्क्षारः सप्तधा गोजलप्लुतः ॥ २१५ ॥
तत्कर्षं मधुनाश्वित्रीतैलाद्यामं खरातपे ।
विकृते प्रतिता ह्येवं स्फोटाः स्युस्तान्वरोदकैः ॥ २१६ ॥
सिञ्चेत्तुर्यदिनाल्लिप्ते निशातन्दुलतालकैः ।
गोतक्रे कोद्रवान्नाशी सप्ताहाच्छ्वित्रजित्खलु ॥ २१७ ॥
उदुम्बरस्य मूलानि चित्रमूलं च निम्बजम् ।
अवल्गुजस्य बीजानि चूर्णयित्वा विचक्षणः ॥ २१८ ॥
उष्णेन वारिणाऽक्षांशं सेवितं क्षीरभोजिना ।
कृमिजालं श्वेतकुष्ठं सहसा तद्धिनिर्हरेत् ॥ २१९ ॥

**अथ कुष्ठारितैलम्**—अङ्कोलनिम्बनिर्गुण्डीपत्रकाष्ठाद्यथोचितम् ।
पातालयन्त्रविधिना तैलं श्वित्रनिबर्हणम् ॥ २२० ॥
नारिकेलं हरिद्रे द्वे बाकुचीवचया सह ।
अक्षभृङ्गकभल्लातं शाककाष्ठं च कौञ्चनम् ॥ २२१ ॥
एतानि समभागानि तैलं पातालयन्त्रतः ।
संगृह्य लेपयेत्तेन कुष्ठाष्टादशनाशनम् ॥ २२२ ॥

---

१ घ. ठ. पलद्वयं । २ ट. °कृष्णाति° । ३ झ. °रसस्तु । ४ ज. °कदुग्धानि । ५ घ. °न्तीनुरुप° । ज. °न्तीत्युरुपेक्षसागरैर्वसूटिकाभा° । ६ ख. °वैसूटिशा° । घ. °वैसूटिकाभा° । ७ ज. सैन्धवं । ८ ग. °लान्वितम् ॥ २१५ ॥ ९ घ. °तक्रको° । १० घ. °णा सार्कं से° । ११ घ. °क्षशृङ्गं च भ° । १२ ख. कीचकम् ।

**अथ क्रिमिचिकित्सा**—ज्वरो विवर्णता शूलं हृद्रोगः श्वसनं भ्रमः ।
भक्तद्वेषोऽतिसारश्च संजातक्रमिलक्षणम् ॥ २२३ ॥

**अथाग्नितुण्डरसः***—रसगन्धाजमोदानां क्रमिघ्नब्रह्मबीजयोः ।
एकद्वित्रिचतुःपञ्चभागान्सविषतिन्दुकान् ॥ २२४ ॥
संचूर्ण्य मधुना सर्वं गुटिकां क्रमिनाशिनीम् ।
खादयित्वाऽनु तोयं च मुस्तानां क्रमिशान्तये ॥ २२५ ॥
आखुपर्णीकषायं च शर्करां पिब सर्वथा ।
क्रमिज्वरोपशान्त्यर्थं खण्डामलकमत्ति वा ॥ २२६ ॥
स जग्ध्वैवं पर्पटी च स्नुहीरसं पिबेदनु ।
स्नुहीरसं विना कश्चिज्जन्तून्न च्छेत्तुमर्हति ॥ २२७ ॥
उदराध्मानतुत्त्यर्थं रसो ह्येष निगद्यते ।
अग्नितुण्डेति विख्यातः सर्वोदरगदापहः ॥ २२८ ॥

**अथ कीटमर्दो रसः**—रसस्य निष्कमादाय गन्धकं तत्समं कुरु ।
ताम्रं देहि तदर्धं च पञ्चाङ्कुशाकवारिणा ॥ २२९ ॥
मर्द्यादेकदिनं रात्रौ क्षिपेत्तत्रैव यत्नतः ।
क्षीरिणीक्वाथमादाय तथा कुरु दिनान्तरे ॥ २३० ॥
दत्त्वा लघुपुटं पञ्चजयपालान्विमर्दयेत् ।
देहि गुञ्जाद्वयं चास्य साज्यं शूलच्छिदे तथा ॥ २३१ ॥
अजमोदापलाशास्थिक्षीरिणीरसगन्धकम् ।
आखुपर्णीरसं खादेत्सताम्रं क्रमिशूलवान् ॥ २३२ ॥
मधुमिश्रनिम्बपल्लवसत्त्वयुतो यदा सूतः ।
क्रमिसंघातान्नाशयति त्रिभिरहोभिरसौ ॥ २३३ ॥
शुद्धसूतं चेन्द्रयवमजमोदामनःशिला ।
पलाशबीजं तुल्यांशं देवदाल्या द्रवैर्दिनम् ॥ २३४ ॥
मर्दयेद्भक्षयेन्नित्यमाखुकर्णीकषायकम् ।
सितायुतं पिबेच्चानु क्रिमिपातो भवत्यलम् ॥ २३५ ॥

---

* च. ठ. अग्निकुण्डरसः ।

---

१ घ. °द्रोगश्छर्दनं । २ च. सर्वदा । ३ च. °कमृत्तिका । ज. °कमार्तिवान् । ४ घ. °जग्ध्वैवं पर्पटीरसं स्नु° । ञ. सर्वत्रैवेति बोद्धव्यं जग्ध्वा तं पर्पटीरसम् । ५ च. ठ. °ग्निकुण्डे° । ६ ख. °तः खल्वोद° । ७ च. च दशांशं शा° । ८ ज. °श्चाङ्गं शा° । ९ च. कृत्वा । १० घ. शूलं छि° । ११ घ. °खुपर्णी° ।

शुद्धसूतं शुद्धगन्धमजमोदो विडङ्गकम् ।
विषमुष्टिब्रह्मबीजं क्रमादुक्तगुणं भवेत् ॥ २३६ ॥
चूर्णयेन्मधुना लेह्यं निष्कैकं कृमिजिद्भवेत् ।
कीटमर्दो रसो नाम मुस्तातोयं पिबेदनु ॥ २३७ ॥ २५८० ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये
विसर्पकुष्ठश्वित्रचिकित्सा नाम विंशतितमोऽध्यायः ॥ २० ॥

---

## अथैकविंशोऽध्यायः ।

### [ अथ वातव्याध्यादिचिकित्सनम् । ]

वातव्याध्यश्मरीकुष्ठमेहोदरभगन्दराः ।
अर्शांसि ग्रहणीत्यष्टौ महारोगाः प्रकीर्तिताः ॥ १ ॥
तत्रानेकानिलगदाः शीतवातादयः स्मृताः ।
हिमवन्ति हि गात्राणि रोमाञ्चैर्ज्वरितानि च ॥
शिरोक्षिवेदनालस्यं शीतवातस्य लक्षणम् ॥ २ ॥

**अथ वातारिः**—रसभागो भवेदेको गन्धको द्विगुणो मतः ।
त्रिभागा त्रिफला ग्राह्या चतुर्भागश्च चित्रकः ॥ ३ ॥
गुग्गुलुः पञ्चभागः स्यादेरण्डस्नेहमर्दितः ।
क्षिप्त्वाऽत्र पूर्वकं चूर्णं पुनस्तेनैव मर्दयेत् ॥ ४ ॥
गुटिकां कर्षमात्रां तु भक्षयेत्प्रातरेव हि ।
नागरैरण्डमूलानां क्वाथं तदनु पाययेत् ॥ ५ ॥
अभ्यज्यैरण्डतैलेन स्वेदयेत्पृष्ठदेशकम् ।
विरेके तेन संजाते स्निग्धमुष्णं च भोजयेत् ॥ ६ ॥
वातारिसंज्ञको ह्येष रसो निर्वातसेवितः ।
मासेन सुखयत्येव ब्रह्मचर्यपुरःसरम् ॥ ७ ॥
विजयागुटिकां रात्रौ स्वल्पमात्रां च भक्षयेत् ॥ ८ ॥

**अथ शीतारिः**—रसं पुनर्नवरसैर्विमर्द्य त्रिकगन्धकैः ।
पचेत्पक्वार्कपत्रोत्थरसैर्यत्नाद्विमृद्य च ॥ ९ ॥
रसेन गन्धं द्विगुणं प्रगृह्य पुनर्नवावह्निरसैर्विमर्द्य ।
पक्वार्कपत्रोत्थरसेन पश्चाद्विपाचयेदष्टगुणेन यत्नात् ॥ १० ॥

---

१ घ. ङ. सुदुस्तराः । २ घ. °क्षस्फुरि° । ३ घ. °सैस्तत्रैव गन्धकम् । च. °सैस्तत्रैव्यगन्धकम् ।

रसार्धभागेन विषं च दत्वा विपाचयेद्वह्निजलैः क्षणं तत् ।
शीतारिसंज्ञो हि रसोऽयमस्य वल्लं तदर्धं यदि चाऽऽर्द्रकेण ॥
मरीचचूर्णेन घृतप्लुतेन सेवेत मासं सघृतं च पथ्यम् ॥ ११ ॥
अङ्गेषु तोदनं प्रायो दाहं स्पर्शं न विन्दति ।
मण्डलानि च दृश्यन्ते स्पर्शवातस्य लक्षणम् ॥ १२ ॥

**अथ सर्वेश्वरः**—कर्षमात्रं रसस्य स्याल्लोहहिङ्गुलयोरपि ।
भास्वद्गगनयोश्चात्र गन्धकस्य पलं मतम् ॥ १३ ॥
व्योषगन्धकताम्राणां प्रत्येकं तु पलं पलम् ।
निम्बुद्रावेण संमर्द्य भावयेत्सप्तधा पृथक् ॥ १४ ॥
हेमार्कस्नुक्पयोवासाहयारिविषमुष्टिभिः ।
पिण्डितं वालुकायन्त्रे स्वेदयेद्दिवसद्वयम् ॥ १५ ॥
कर्षमात्रं तु पिप्पल्या निष्कमात्रं विषस्य च ।
संचूर्ण्य दापयेदत्र सर्वेश्वररसाख्यके ॥ १६ ॥
गुञ्जामात्रं ददीतास्य स्पर्शवातापनुत्तये ॥ १७ ॥

**अथार्केश्वरः**—रसेन गन्धं द्विगुणं प्रमर्द्य ताम्रस्य पत्रेण सुतापितेन ।
आच्छाद्य भूत्या तु ततः प्रयत्नाचक्रीविलग्नं तु रसं प्रगृह्य ॥ १८ ॥
विचूर्ण्य दत्वाऽथ दशार्कदुग्धैः पुटेत वह्नित्रिफलाजलैश्च ।
संभावितोऽर्केश्वर एष सूतो गुञ्जाद्वयं चास्य फलत्रयेण ॥ १९ ॥
ददीत मासत्रितयेन सुप्तवाताद्विमुक्तो हि भवेद्धिताशी ।
तारं रसेनाष्टगुणं जयांशे विमर्द्य यत्नाद्गुलिकां गुडेन ॥ २० ॥
निबध्य तां सेवय मासयुग्मं दिनोदये स्पर्शविकारनुत्त्यै ।
मूलं पिबेद्राजतरोः शरीरं मासद्वयं तेन विलेपयेत ॥ २१ ॥
यद्वा सुचूर्णीकृतचक्रमर्दबीजं सुगोमूत्रपरिप्लुतं च ।
अर्कस्नुहीक्षीरनिशाद्वयेन युक्तं भजेन्मण्डलनाशनाय ॥ २२ ॥

**अथ स्पर्शवातान्तकृद्वटिका**—अष्टौ भागा रसस्य स्युर्विषतिन्दोर्दशैव च ।
गन्धकस्य दश द्वौ च कटुत्रिफलयोस्त्रयः ॥
वह्निचित्रकमुस्तानां वचाश्वागन्धयोरपि ॥ २३ ॥

---

१ च. मांसं । २ घ. °श्चापि ग° । ३ घ. °सत्रय° । ४ घ. ठ. ढ. चक्रेण । ५ घ. भूस्थातु त° । ञ. भूत्वाऽपि त° । ६ घ. °र्ण्य तद्द्वादशचार्क° । ७ क. °लद्वये वा । घ. °लद्वयं वा । ८ च. °ये वा । ९ ग. तालं । १० ज. जयो च वि° । ११ ग. विषं ति° । १२ क. °स्य च द्वौ भागौ क° ।

रेणुकाविषकुष्ठानां पिप्पलीमूलनागयोः ।
एकैकस्तु भवेद्भाग इत्याद्यायास्तथैव च ॥ २४ ॥
चतुर्विंशद्गुडस्यात्र वटिका चणकाकृतिः ।
क्रमेणैवानुसेवेत स्वर्शवातापनुत्तये ॥ २५ ॥

## अथास्पर्शवातारितैलम् ।

त्रिगन्धकं तुत्थकमश्वगन्धाहयारिनागाश्रुतिवायसीनाम् ।
मूलानि संचूर्ण्य सुभाण्डके च तैलं क्षिपेत्तेन चतुर्गुणेन ॥ २६ ॥
पक्वार्कपत्रोत्थरसेन पश्चाद्विपाचयेदष्टगुणेन यत्नात् ।
अस्पर्शवाताय भवेद्धि तैलं विलेपयेत्तेन च तत्प्रदेशम् ॥ २७ ॥
हिंयावलीक्काथविपाचितं च अस्पर्शनाशाय ददेत्त्रिगन्धम् ।
हियावलीकन्दविलेपनाच्च अस्पर्शदेशः क्षरमेति यत्नात् ॥ २८ ॥
यवानिकासिद्धघृतेन पश्चादस्पर्शनाशाय विलेपयेत ।
अर्कोत्थदुग्धेन विलेपनाच्च स्फोटीभवेत्तस्य ततः प्रदेशः ॥२९॥
घृतेन चोक्तेन विलेपनाद्वा स्पर्शो लयं याति च तत्क्षणेन ।
यद्वाहिनीसूरणकं सितांश्च स्पर्शांतकः स्यात्खलु लेपनेन ॥३०॥
आदौ शिरामोक्षणतो रसेन्द्रं विलेपनं चापि नियोजयन्ति ॥ ३१ ॥

**अथ गन्धाश्मगर्भरसः**—गन्धं रसेनाष्टगुणं विमर्द्य कृशानुतोयेन विपाचयेत ।
मृद्वग्निना लोहमयेऽथ पात्रे विषेण पश्चादपि सिद्धिमेति ॥ ३२॥
गन्धाश्मगर्भो हि रसोऽस्य सर्वस्पर्शप्रणुत्त्यै भज वल्लयुग्मम् ।
सक्षीरमन्नं सघृतं च भोज्यं वर्ज्यं च सर्वं परिवर्जनीयम् ॥ ३३ ॥
गन्धकं चूर्णितं कृत्वा सूक्ष्मवस्त्रेण बध्य च ।
भाण्डे गोदुग्धकं दत्वा द्राव्यं वा खर्परेण च ॥ ३४ ॥
अग्निं प्रज्वालयेदूर्ध्वं पश्चाच्छीतं समुद्धरेत् ।
गन्धकाष्टकभागेन रसं दत्वाऽथ पाचयेत् ॥ ३५ ॥
मृद्वग्निना शीतभूमावुत्तार्योत्तार्य यत्नतः ।
यावद्गन्धकरूपस्य पूर्वस्य ह्यन्यथा भवेत् ॥ ३६ ॥

---

१ च. °लभाग°। २ च. °द्भागा इत्यध्याया°। ३ अ. °द्यायस्त°। ४ झ. हृदाव°। ५ च. °च स्पर्शप्रदेशं क्ष°। ६ घ. °द्वाहलीसू°। ७ घ. °ताश्वास्प°। ८ घ. °न्द्रं लेपादिकं चा°। ९ घ. °जयीत। १० घ. च। ११ घ. °दथ सि°। १२ घ. °त्वा प्राकृतं स°। १३ घ. °न्धकेनाष्टभा°। १४ घ. यवगन्ध°।

सप्तगुञ्जं ददीतास्य यावत्स्यादेकविंशतिः ।
प्रत्यहं तु हरीतक्यां गुञ्जा देयैकविंशतिः ॥ ३७ ॥
सक्षीरं सघृतं चान्नं भोजयीत सशर्करम् ।
निर्वाते चावतिष्ठेत कम्पस्पर्शापनुत्तये ॥
गन्धाश्मगर्भसंज्ञोऽयं योगिभिः परिकीर्तितः ॥ ३८ ॥

**अथास्पर्शारिरसः**—पलाशबीजोत्थरसेन सूतं गन्धेन युक्तं परिमर्दयीत ।
श्लक्ष्णीकृते तद्विषमुष्टिबीजं संयोजनीयं च कलाप्रमाणम् ॥३९॥
मासत्रयं निष्कमितं प्रयत्नादस्पर्शनुत्त्यै खलु सेवयेत ॥ ४० ॥

**अथ रक्तवातलक्षणम्**—पादयोश्च भवेत्तापः श्वयथुश्च प्रजायते ।
रक्तच्छाया शरीरे च रक्तवातस्य लक्षणम् ॥ ४१ ॥
त्रियोनिरसगुञ्जैकां प्रथमं दापयेद्भिषक् ।
हरीतक्यामलक्यौ च गुडूचीं कटुकां तथा ॥ ४२ ॥
पञ्चाङ्गानि च निम्बस्य चूर्णयित्वा च पाचयेत् ।
कोकिलाख्यस्य मूलानि गुडूचीनागरं तथा ॥ ४३ ॥
क्वाथयित्वा रजन्या च पाययेदतिशीतलम् ।
अग्रे शिराविमोक्षार्थं यवचिञ्चाविरेचनम् ॥ ४४ ॥
वान्तिमङ्कोलबीजेन देवदालीजलेन वा ।
सूरणं माषवृन्ताकं राजिकादि विवर्जयेत् ॥ ४५ ॥

**अथाऽऽमवातः**—कट्यां व्यथा भवेन्नित्यं संधिषु श्वयथुर्भवेत् ।
उत्थानेऽप्यसमर्थत्वमामवातस्य लक्षणम् ॥ ४६ ॥
एरण्डतैलसंयुक्तं वातारिरसमेव च ।
आमवातप्रशान्त्यर्थं ददीतोष्णेन वारिणा ॥ ४७ ॥
आमानिलस्यास्य रसोऽनिलारिश्चैरण्डतैलेन सकौशिकेन ।
कटुत्रयेणापि सगन्धकेन वल्लैकमानं परिषेवयेत ॥ ४८ ॥
आमवातगजेन्द्रस्य शरीरवनचारिणः ।
एक एवाग्रणीर्हन्ता एरण्डस्नेहकेसरी ॥ ४९ ॥

**अथापस्मारः**—मूर्छा शरीरस्य भवेदकस्माद्गात्रेषु कम्पश्च मुखे च फेनः ।
एवं त्वपस्मारगदं विदित्वा नियोजयेत्पर्पटिकाख्यसूतम् ॥५०॥

---

१ ज. ङ. °गुञ्जा द°। २ घ. °तक्या गु°। ३ घ. °स्पर्शप्रणुत्त°। ४ क. वातरक्तस्य । ५ घ. °लाक्षस्य। ६ च. °जन्यां तु पा°। ७ च. °लीदले°।

पर्पटीरसगुञ्जे द्वे ब्राह्मीरससमन्विते।
खादयेद्रोगिणं वैद्योऽपस्मारानिलशान्तये॥ ५१॥
ब्राह्मीशुण्ठीवचाकुष्ठं नीलोत्पलससैन्धवम्।
पिप्पलीमपि संचूर्ण्य ब्राह्मीद्रावेण भावयेत्॥ ५२॥
सप्तधा नवनीतेन पचेत्क्षिप्त्वा घृतं शुचौ।
वराहकर्णरक्तेन कर्कोट्या नस्यमाचरेत्॥ ५३॥
शुष्कां गवाक्षीमादाय घृष्टं कांस्यं च कम्बलम्।
गोघृतेनाऽऽयसं पिष्ट्वाऽप्यागते नस्यमाचरेत्॥ ५४॥
श्वेतापराजिताबीजं विजयाबीजमेव च।
नरमूत्रेण संपिष्य नस्यं दद्याद्भिषग्वरः॥ ५५॥
उन्मत्तकशुनोऽस्थीनि घृष्ट्वा तेनैव वा कुरु।
श्वेतापराजिताबीजं कर्णे बद्ध्वा सदा बुधः॥
निर्गुण्डीमूलकं जग्ध्वा ह्यपस्माराद्विमुच्यते॥ ५६॥

**अथोन्मादः**—बहु कृत्वा प्रलापैश्च विस्मृतिः कार्यवस्तुषु।
हन्ति धावति सर्वत्रोन्मादवातस्य लक्षणम्॥ ५७॥

**अथ माहेश्वरो धूपः**—पर्पटीरसगुञ्जाष्टौ धत्तूराद्वीजपञ्चकम्।
गोघृतेन च संयोज्य खादेदुन्मादशान्तये॥ ५८॥
सघृतं माषमण्डं वा पाययेद्घृतदुग्धकम्।
निम्बतैलं समुद्धृत्य स्वभ्यज्यापादमस्तकम्॥ ५९॥
गुर्वन्नं प्रायशो दद्याच्छुष्कशाकं च वर्जयेत्।
बद्ध्वाऽपि रक्षयेत्तावद्यावच्छान्तिं स गच्छति॥ ६०॥
माहेश्वराख्यधूपं च दापयेत्सततं निशि।
श्रीवेष्टं दारुबाह्लीकं मुस्ताकटुकरोहिणी॥ ६१॥
सर्षपा निम्बपत्राणि मदनस्य फलं वचा।
बृहत्यौ सर्पनिर्मोकः कार्पासास्थि यवास्तुषाः॥ ६२॥
गोशृङ्गं खररोमाणि बर्हिपिच्छं बिडालविट्।
छागरोमघृतं चैव बस्तमूत्रेण भावितम्।
एष माहेश्वरो धूपः सर्वग्रहनिवारणः॥ ६३॥

---

१ घ. °गिणां वै°। २ झ. ड. शुष्कां। ३ ग. °नाथ संपि°। ४ क. °सं पीत्वाऽप्या°। ५ घ. संपिष्य। ६ क. °ण्डीबीजकं। ञ. ण्डीबन्धजं ज°। ७ ञ. °लापश्चेद्विस्मृ°। ८ च. च। ९ घ. चेति।

**अथैकाङ्गकः**—एकस्मिन्देहदेशे च तोदः कार्श्यं चलात्मता ।
हिमस्पर्शश्च दृश्येतैकाङ्गवातस्य लक्षणम् ॥ ६४ ॥
पर्पटीरसगुञ्जाष्टौ वक्ष्यमाणं च गुग्गुलुम् ।
कर्षार्धं खादयेत्साज्यमेकाङ्गानिलशान्तये ॥ ६५ ॥
एरण्डवह्निशुण्ठीनां गुडूच्याश्च कषायकम् ।
अनुपानाय दातव्यं चणकक्काथमेव च ॥ ६६ ॥
नलिकायन्त्रयोगेन सर्जतैलं समुद्धरेत् ।
तदभ्यङ्गप्रयोगेण वातो दुष्टः प्रशाम्यति ॥ ६७ ॥

## अर्धाङ्गवायौ शतावर्यादिचूर्णम् ।

शतावरी गुडूची च सारणी गोक्षुरः कणा ।
शताह्वा दीप्यका रास्ना अश्वगन्धाश्च संज्ञकाः ॥ ६८ ॥
कचोरो नागरश्चैते चूर्णनीयाः समांशकाः ।
एतैः सर्वैः समो ग्राह्यो गुग्गुलुर्महिषाक्षकः ॥ ६९ ॥
खण्डयित्वा घृतेनाऽऽर्द्रं पूर्वचूर्णं विनिक्षिपेत् ।
संमर्द्य सर्पिषा गाढं कर्षार्धं गुलिकां किरेत् ॥ ७० ॥

**अथ योगराजगुग्गुलुः**—पिप्पली पिप्पलीमूलचव्यचित्रकनागरैः ।
पाठाविडङ्गेन्द्रयवहिङ्गुभार्ङ्गीवचान्वितैः ॥ ७१ ॥
सर्षपातिविषाजाजीरेणुकाकृष्णजीरकैः ।
गजकृष्णाजमोदाभ्यां कटुकामूर्वमिश्रितैः ॥ ७२ ॥
समभागान्वितैः सर्वैस्त्रिफला द्विगुणा भवेत् ।
त्रिफलासहितैरेतैः समभागस्तु गुग्गुलुः ॥ ७३ ॥
एतच्चूर्णीकृतं सर्वं मधुना च परिप्लुतम् ।
योगराजमिमं विद्वान्भक्षयेत्प्रातरुत्थितः ॥ ७४ ॥
अर्शांसि वातगुल्मं च पाण्डुरोगमरोचकम् ।
नाभिशूलमुदावर्तं प्रमेहं वातशोणितम् ॥ ७५ ॥
कुष्ठं क्षयमपस्मारं हृद्रोगं ग्रहणीगदम् ।
महान्तमग्निसादं च श्वासकासभगन्दरम् ॥ ७६ ॥
रेतोदोषाश्च ये पुंसां योनिदोषाश्च योषिताम् ।
निहन्यादाशु तान्सर्वान्दुर्वारान्न च संशयः ॥ ७७ ॥

---

१ ज. °श्च दर्श्यते°। २ घ. युञ्जीत । ३ अ. °न्धा च सं°। ४ घ. कर्चूरो । अ. कर्बूरो । ५ च. °नार्धं पू°।

एष निष्परिहारोऽस्ति पानभोजनमैथुने ।
सतताभ्यासयोगेन वलीपलितनाशनः ॥
सर्वव्याधिविनिर्मुक्तो जीवेद्वर्षशतत्रयम् ॥ ७८ ॥
क्षीराज्यरसभुक्तानां दोषधातुमलोचितम् ।
बुभुक्षितो मात्रयाऽन्नमद्याद्गुग्गुलुसेवकः ॥ ७९ ॥
दार्वीकाथेन मेहं जयतीत्यादि । इति योगराजगुग्गुलुः ।

**अथ गुग्गुलुः**—चित्रकं पिप्पलीमूलं यवानी कारवी तथा ॥
विडङ्गान्यजमोदश्च जीरकं सुरदारु च ॥ ८० ॥
वचैला[1] सैन्धवं कुष्ठं लाक्षागोक्षुरधान्यकम् ।
त्रिफलामुस्तकव्योषत्वगुशीरं यवाग्रजम् ॥ ८१ ॥
तालीसपत्रं पत्रं च सूक्ष्मचूर्णानि कारयेत् ।
एतानि समभागानि तावन्मात्रं च गुग्गुलुम् ॥ ८२ ॥
संसृज्य[2] सर्पिषा गाढं स्निग्धे भाण्डे विनिक्षिपेत् ।
भक्षयेत्कर्षमात्रं च वातरोगान्विनाशयेत्[3] ॥ ८३ ॥
ततो मात्रां प्रयुञ्जीत यथेष्टाहारसेवनात् ।
योगराज इति ख्यातो योगोऽयममृतोपमः ॥ ८४ ॥
आमवाताढ्यवातादीन्क्रिमिदुष्टव्रणानि च ।
प्लीहगुल्मोदरानाहदुर्नामानि विनाशयेत् ॥ ८५ ॥
अग्निं च कुरुते दीप्तं तेजोवृद्धिबलं तथा ॥ ८६ ॥

**अथ वडवानलः**—शुल्बं तालकगन्धकौ जलनिधेः फेनाग्निगर्भाशयैः
कान्तायोलवणानि हेम[4]वचयोर्नीलाञ्जनं तुत्थकम् ।
भागो द्वादशको रसस्य तदिदं वज्राम्बुघृष्टं शनैः
सिद्धोऽयं वडवानलो गजपुटे रोगानशेषाञ्जयेत् ॥ ८७ ॥ इति वडवानलः ।
आर्द्रकस्य द्रवेणामुं[5] दशवाराणि भावयेत् ।
दिनद्वयं चित्रकस्य द्रावेणैव तु भावयेत् ॥ ८८ ॥
पादांशममृतं दत्वा चित्रद्रावैः क्षणं पचेत् ।
मात्रया योजयेच्चानु दशमूलशृतं[6] पयः ॥ ८९ ॥
वातश्लेष्मप्रधाने च दद्यात्त्र्यूषणचित्रकम् ।
सिद्धं[7] च कटुतुम्बिन्या प्रयुञ्जीतातियत्नतः ॥ ९० ॥
दाहं च जयया कुर्याच्छीतवातं च वर्जयेत् ॥ ९१ ॥

---

१ ग. चव्यैला । २ च. संमृज्य । ३ घ. °न्विनिक्षिपेत् । ४ घ. °मबलयोर्नीला° । ५ क. रसेनामुं । ६ घ. °लसृतं । ७ ग. स्वेदं ।

**अथ मार्तण्डेश्वरः**—समताप्ययुतं शुल्बं पलविंशतिमानकम्।
प्रध्मातं हि चतुर्वारं खण्डयित्वा ततश्चरेत्॥ ९२॥
तत्तुल्यं माक्षिकोपेतं पुटेद्विंशतिवारकम्॥ ९३॥
गन्धकेन पुटेत्तावद्यावत्पलमितं भवेत्।
क्षिपेत्पलमितं तत्र गन्धकेन हतं रसम्॥ ९४॥
शाणमात्रं मृतं वज्रं सर्वमेकत्र मर्दयेत्।
इति सिद्धो रसेन्द्रोऽयं मार्तण्डेश्वरनामवान्॥ ९५॥
कीर्तितो लोकनाथेन लोकानां हितकाम्यया।
मरीचघृतसंयुक्तः सेवितो मण्डलार्धतः॥ ९६॥
वाताद्यष्टमहारोगाञ्श्वासकासयुतं क्षयम्।
हलीमकं च पाण्डुं च ज्वरानपि सुदुस्तरान्॥ ९७॥
इत्यादिकगदान्सर्वान्विनाशयति निश्चितम्।
करोति दीपनं तीव्रं दीपानलशतोपमम्॥ ९८॥
संनिपातं जयत्याशु व्योषार्द्रकसमन्वितः।
सर्वसौख्यकरो नृणां स्त्रीणां वन्ध्यत्वनाशनः॥ ९९॥
**अथ गुणाः**—समभागे शुभे हेम्नि निर्गूढं ताप्यमुत्तमम्।
शतधा शतधा रौप्ये शुल्बे च शतवारकम्॥ १००॥
इत्थं सिद्धमिदं बीजं पृथगक्षप्रमाणतः।
समावर्त्य तदेकत्र रसे पञ्चपलात्मके॥ १०१॥
वक्ष्यमाणप्रकारेण जारयेदतियत्नतः।
तप्ते खल्वे रसं दत्वा बीजं निष्कमितं तथा॥ १०२॥
मर्दयेदतियत्नेन भवेद्यावद्दिनत्रयम्।
पूर्वोक्तकच्छपे यन्त्रे वक्ष्यमाणबिडान्विते॥ १०३॥
वक्ष्यमाणप्रकारेण बीजमेवमशेषतः।
बलिकासीसकव्योमकाङ्क्षीसौवर्चलैः समैः॥ १०४॥
चक्राङ्गीरससंभिन्नैः शतधा बिडमित्रवत्।
एवं जारितसूतेन पलमात्रेण वा तथा॥ १०५॥
गन्धकेऽपि च कर्तव्या सुस्निग्धा वरकज्जली।
लोहपात्रे घृतोपेतां द्रावयेत्तां तु कज्जलीम्॥ १०६॥

१ घ. °मितिर्भवे°। २ घ. °दुर्धरा°। ३ घ. निर्व्यूढं। ४ घ. °गद्यप्र°। ५ घ. तत्र। ६ क. बलीका°। ७ ग. °डमत्र°। ८ ग. °न्धकस्य च। ९ घ. द्रावयित्वा।

तुल्यसत्त्वाभ्रभसितं क्षिप्त्वा संमिश्रय्य सर्वशः ।
रम्भापत्रे विनिक्षिप्य कुर्यात्पर्पटिकां शुभाम् ॥ १०७ ॥
विचूर्ण्य पर्पटीं सम्यग्वैक्रान्तत्रिंशदंशतः ।
निक्षिप्य हिङ्गुतोयेन शतधा परिभावितम् ॥ १०८ ॥
निरुध्य मल्लमूषायां स्वेदयेदतियत्नतः ।
पुनः संचूर्ण्य यत्नेन करण्डे विनिवेशयेत् ॥ १०९ ॥

**अथ वातास्रपर्पटी**—हन्यात्सर्वमरुद्गदान्क्षयगदं पाण्डुं च नष्टाग्निताम्
निर्वीर्यत्वमरोचकं त्वजरणं शूलं च गुल्मादिकम् ।
अष्टौ चैव महागदानतितरां व्याधिं सशोषं क्षणा-
द्भुक्तो मुद्गमितश्चतुःसुधरसः स्वस्थोचितो भूभुजाम् ॥११०॥
मूलकं वर्जयेदस्मिन्रसे नान्यत्तु किंचन ।
त्रिवारमेकवारेण बुभुक्षां जनयेद्ध्रुवम् ॥ १११ ॥

**अथ सर्ववातारिः**—गन्धकाद्द्विगुणं तालं तालकाद्द्विगुणा शिला ।
शिलाया द्विगुणं ताप्यं ताप्याच्च द्विगुणं रसम् ॥ ११२ ॥
खल्वयेत्सर्वमेकत्र यावत्स्याद्दिनसप्तकम् ।
सर्वस्याष्टमभागेन दत्वा रक्तामृतं शुभम् ॥ ११३ ॥
विषतिन्दुकजैर्द्रावैः पिष्ट्वा गोलकमाचरेत् ।
विशोष्य वालुकायन्त्रे अन्धयेद्दिवसद्वयम् ॥ ११४ ॥
स्वाङ्गशीतलमुद्धृत्य तुल्यहिङ्ग्वष्टकान्वितम् ।
भावयेद्बीजपूरस्य सप्तवारं रसेन हि ॥ ११५ ॥
सप्तवारं रसैः शुण्ठ्याश्चित्रमूलस्य वारिणा ।
इति सिद्धो रसेन्द्रोऽयं सर्ववातारिसंज्ञकः ॥ ११६ ॥
घृतेन सहितो लीढो वल्लद्वयमितो नृभिः ।
निहन्त्यशीतिवातार्तीर्गुल्मानष्टविधानपि ॥ ११७ ॥
चतुर्विधं च मन्दाग्निं[3] शूलानुदरजान्क्रिमीन् ।
आध्मानं च तथा हिक्कां मूढवातं च विड्ग्रहम् ॥ ११८ ॥

**अथ वातविध्वंसनः**—मृतमभ्रकसत्त्वं हि कांस्यं शुल्बं च माक्षिकम् ।
गन्धकं तालकं सर्वं भागोत्तरविवर्धितम् ॥ ११९ ॥
कज्जलीकृत्य तत्सर्वं वातारिस्नेहसंयुतम् ।
मर्दयेत्सप्तदिवसं गोलीकृत्य तु यत्नतः ॥ १२० ॥

---

१ क. °क्रान्ताग्निं° । २ घ. च जरणं । ३ क. °ग्निं स्थूला° । ४ च. सर्वभागोत्तरविमर्दितम् ।

निम्बुद्रवेण संपिष्टं तालकल्केन लेपयेत् ।
अर्धाङ्गुलदलं चैव परिशोष्य प्रयत्नतः ॥ १२१ ॥
प्रपचेद्वालुकायन्त्रे यामानां द्वादशावधि ।
पटचूर्णं विधायैतद्भावयेत्तदनन्तरम् ॥ १२२ ॥
पञ्चकोलकचित्राङ्घ्रिवरुणादिकषायतः ।
दशमूलकषायेण शृङ्गवेररसेन च ॥ १२३ ॥
रक्तामृतं कलांशेन दत्वा निष्पिष्य यत्नतः ।
स्थूलकोलास्थितुलितां छायाशुष्कां वटीं किरेत् ॥ १२४ ॥
तत्तद्रोगहरैर्द्रव्यैर्वणां देया सदा हिता ।
हन्यादशीतिधा भिन्नान्वातजातान्महागदान् ॥ १२५ ॥
गुल्मानष्टविधांश्चापि शूलानष्टविधानपि ।
जठरस्य रुजः सर्वास्तथा च मलनिग्रहम् ॥ १२६ ॥
आध्मानकमथानाहं विषूचीं मन्दवह्निताम् ।
आमदोषानशेषांश्च गुल्मं छर्दिं च दुर्धराम् ॥ १२७ ॥
ग्रहणीं श्वासकासौ च कृमिरोगमशेषतः ।
हन्यात्सर्वाङ्गसदनं मन्यास्तम्भं च वाजिनाम् ॥ १२८ ॥
ज्वरे चैवातिसारे च मूलरोगे त्रिदोषजे ।
पथ्यं रोगानुरूपेण दापनीयं भिषग्वरैः ॥ १२९ ॥
श्रीमता नन्दिना प्रोक्तो वातविध्वंसनो रसः ।
क्षुधार्थिभिः सदा सेव्यः सर्वाहारपरैर्नरैः ॥ १३० ॥

**अथ वृकोदरगुटिका**—सूतगन्धकतीक्ष्णाभ्रैः सताप्यैः समभागिकैः ।
रसांशमपरं सर्वं पट्टोलं जीरकद्वयम् ॥ १३१ ॥
सौवर्चलं ससिन्धूत्थं विडङ्गं च हरीतकी ।
अम्लवेतसकं सर्वं बीजपूराम्बुमर्दितम् ॥
गुटिकास्तेन कल्केन कार्याः कोलास्थिमात्रकाः ॥ १३२ ॥
योगिन्या बहुघातिनामयुतया त्रैलोक्यविख्यातया
निर्दिष्टा हि वृकोदरीति गुटिका सोष्णाम्बुना सेविता ।
निःशेषानिलदोषशेषजरुजः श्लेष्मामरोगोद्भवं
मन्दाग्निं ग्रहणीं चतुर्विधमहाजीर्णं च तूर्णं जयेत् ॥ १३३ ॥

१ घ. °म्बुद्रावेण संपिष्टता°। २ क. °कणायुतः । ३ च. °लविग्र°। ४ च. उद्धृताम् । ग. उद्धृतम् । ५ च. °राम्लम°। ६ च. °हुधेतिना°। ७ घ. °महत°। ८ च. °षरोगज°। क. °षसोषज°।

**अथ प्रभावती वटी**—हेमाभ्रालकतीक्ष्णताप्यकमलोमेषां समं सप्तकं
सूतं च द्विगुणं विशोधनवधूस्नुग्वह्निसौभाञ्जनात्।
पाठासूरणसिन्दुवारविजयैरण्डद्रवैर्मर्दितं
तैले काङ्गुणिगन्धकं कटु भवेत्कल्कं वटीं कल्पयेत्॥१३४॥
प्रभावतीति कथिताऽऽर्द्रकद्रावैर्निषेविता।
ततश्चानु पिबेत्तोयं दशमूलप्रसाधितम्॥ १३५॥
सपिप्पलीकं पिबतो जलं जये-
न्मरुद्विकारानुदराण्यपस्मृतिम्॥ १३६॥ इति प्रभावती वटी।
अष्टगुञ्जमितं खादेदेकाङ्गे पर्पटीरसम्।
अर्धकर्षं घृतेनानु योगराजं च गुग्गुलुम्॥ १३७॥

**अथ विजयभैरवतैलम्**—धान्याम्लपिष्टसुरभित्रयसूतलिप्त
तैलाक्तदीप्तपटवर्तिमुखात्प्रवृत्तम्।
कम्पोत्तराञ्जयति पानविलेपनाभ्यां
वातामयान्विजयभैरवनामतैलम्॥ १३८॥
उक्तं च। रसतालशिलागन्धं दिनं संचूर्ण्य काञ्जिकैः।
लिप्त्वा वस्त्रैः कृतां वर्तिं तैलाक्तां ज्वालयेत्पुनः॥ १३९॥
तद्भूतं संग्रहेत्तैलमधःपात्रे धृते सति।
तत्तैललेपितं पत्रं नागवल्ल्या च भक्षयेत्॥ १४०॥
बाहुकम्पं शिरःकम्पमेकाङ्गं जानुकम्पनम्।
नाशयेद्भक्षणाल्लेपात्तैलं विजयभैरवम्॥ १४१॥

**अथ स्वच्छन्दभैरवः**—तीक्ष्णायस्कान्तगोदन्तमाक्षिकैर्मर्दितो रसः।
समांशगन्धकः पक्वो हण्डिकायन्त्रमध्यगः॥ १४२॥
व्योषाग्निमन्थसुरसाकन्दशृङ्ग्यभयाविषैः।
समैः समं त्र्यहं मुण्डीनिर्गुण्डीरसैर्पिण्डितः॥ १४३॥
सेवितः शमयेद्वातान्नाम्ना स्वच्छन्दभैरवः।
विशेषाद्वातरक्तं च द्विवल्लं चाऽऽर्द्रकैर्ददेत्॥ १४४॥

**अथ विजयभैरवतैलम्**—रसगन्धशिलातालं सर्वं कुर्यात्समांशकम्।
चूर्णयित्वा ततः श्लक्ष्णमारनालेन मर्दयेत्॥ १४५॥
लेपयित्वा तु कल्केन सूक्ष्मवस्त्रं ततः परम्।
तैलाक्तां कारयेद्वर्तिमूर्ध्वभागे प्रदीपयेत्॥ १४६॥

---

१ ग. °लाभोदैः स°। २ ग. शोदनव°। ३ वधूः स्नु°। ४ घ. °वैर्मूर्छितं। ५ घ. लं कङ्गु°। ६ घ. प्रथिताऽऽ। ७ च. °मिदं खा°। ८ घ. °काङ्गीप°। ९ झ. °सपुट°। १० अ. °ग्रास्तिम्। ११ च. वस्त्रे। १२ क. वल्ल्याश्च भ°। १३ च. °साटङ्कशृ°। १४ च. °सपीडितः। १५ घ. द्विगुणं। १६ घ. त्वाऽथ क°। १७ घ. °वस्त्रे ल°।

वर्त्यधःस्थापिते पात्रे तैलं पतति शोभनम्।
लेपयेत्तेन गात्राणि भक्षयेदातुरस्तथा॥ १४७॥
नाशयेत्सूततैलं तद्वातरोगाननेकधा।
बाहुकम्पं शिरःकम्पं जङ्घाकम्पं ततःपरम्॥ १४८॥
एकाङ्गं च तथा वातं हन्ति रोगाननेकधा।
रोगशान्त्यै सदा देयं तैलं विजयभैरवम्॥ १४९॥

**अथ वडवानलः**—सूतहाटकवज्रार्ककान्तभस्म समाक्षिकम्।
तालं नीलाञ्जनं तुत्थमब्धिफेनं समांशकम्॥ १५०॥
पञ्चानां लवणानां तु भागैकैकं विमर्दयेत्।
वज्रक्षीरै[2]र्दिनैकं तु[3] रुद्ध्वा तं भूधरे पचेत्॥ १५१॥
माषैकं चाऽऽर्द्रकद्रावैर्लेहयेद्वडवानलम्।
पिप्पलीमूलजं क्वाथं सपिप्पल्यनुपाययेत्।
धनुर्वातं दण्डवातं शृङ्खलावातकम्पनुत्॥ १५२॥

**अथ स्वच्छन्दभैरवः**—शुद्धं सूतं मृतं लोहं ताप्यगन्धकतालकम्।
पथ्याग्निमन्थनिर्गुण्डीत्र्यूषणं टङ्कणं विषम्॥ १५३॥
तुल्यांशं मर्दयेत्खल्वे दिनं निर्गुण्डिकारसैः।
मुण्डीद्रावैर्दिनैकं तं द्विगुञ्जं वटकीकृतम्॥ १५४॥
भक्षयेत्सर्ववातार्तो नाम्ना स्वच्छन्दभैरवः॥ १५५॥

**अथ षडङ्गगुग्गुलुः**—रास्नामृतादेवदारुशुण्ठीवातारितुल्यकम्।
गुग्गुलुं सर्वतुल्यांशं कुट्टयेद्घृतवासितम्॥
कर्षांशं भक्षयेच्चानु ख्यातः षडङ्गगुग्गुलुः॥ १५६॥

**अथाऽऽनन्दभैरवघृतम्**—धूमसारं वरा यष्टी टङ्कणं पत्रकं विषम्।
तुल्यं गुञ्जाद्वयं खादेदामवातप्रशान्तये॥ १५७॥
एरण्डतैलं त्रिफला गोमूत्रं चित्रकं विषम्।
सर्पिषा सहितं पक्त्वा सर्वाङ्गं तेन मर्दयेत्॥ १५८॥
त्वग्वातघ्नं महाश्रेष्ठं देयं[6] चाऽऽनन्दभैरवम्।
लशुनं सैन्धवं तैलमनुपानं प्रकल्पयेत्॥१५९॥ इत्यानन्दभैरवघृतम्॥
निर्गुण्डीमूलचूर्णं तु कर्षं तैलेन लेहयेत्।
संधिवातः कटीवातः[7] कम्पवातश्च शाम्यति॥ १६०॥

---

१ ग. राग°। २ क. वज्राक्षी°। ३ क. तु संरुद्ध्वा भू°। ४ च. °लकाक्का°। ५ ग. षडङ्ग°। ६ च. °यं वाऽऽन°। ७ क. °तः पृष्ठीवा°। घ. °तः शिरोवा°।

रक्तस्यैरण्डमूलस्य कर्षं घृष्ट्वा जलैः पिबेत् ।
सर्ववातहरं श्रेष्ठं भग्नवाते विशेषतः ॥ १६१ ॥
इन्द्रवारुणिकामूलं मागधीगुडसंयुतम् ।
भक्षयेत्कर्षमात्रं तु संधिवातहरं भवेत् ॥ १६२ ॥
मृतं सूतं मृतं तीक्ष्णं मर्दयेत्कटुकीद्रवैः ।
चणमात्रां वटीं खादेत्सर्वाङ्गैकाङ्गवातनुत् ॥ १६३ ॥

**अथ त्र्यम्बकेश्वररसः**—सूतकस्य पलं पञ्च पलैकं ताम्रचूर्णकम् ।
जम्बीराणां द्रवैः पिष्टं सूततुल्यं च गन्धकम् ॥ १६४ ॥
नागवल्लीदलैः पिष्टं ताम्रपिष्टं प्रकल्पयेत् ।
रुद्ध्वा लघुपुटैः पच्याद्भूधरे यामपञ्चकम् ॥ १६५ ॥
आदाय चूर्णयेत्तुल्यैस्त्र्यूषणैः सममिश्रितैः ।
अर्धाङ्गकम्पवातार्तो भक्षयेच्च द्विगुञ्जकम् ॥ १६६ ॥

**अथ गगनगर्भा वटी**—सूताभ्रं तीक्ष्णताम्रं च मृतं तालकगन्धकम् ।
भार्ङ्गीशुण्ठीवचाधान्यकम्पिल्लं चाभयाविषम् ॥ १६७ ॥
मर्द्यं पर्पटकद्रावैर्निष्कैकां भक्षयेद्वटीम् ।
वातश्लेष्महरा ह्याशु वटी गगनगर्भिता ॥ १६८ ॥

**अथ वातगजाङ्कुशः**—मृतं सूतं मृतं लोहं गन्धकं तालमाक्षिकम् ।
पथ्याभृङ्गीविषं व्योषमग्निमन्थं च टङ्कणम् ॥
तुल्यं खल्वे दिनं मर्द्यं मुण्डीनिर्गुण्डिजैर्द्रवैः ॥ १६९ ॥
द्विगुञ्जां वटिकां खादेत्सर्ववातप्रशान्तये ॥
साध्यासाध्यं निहन्त्याशु रसो वातगजाङ्कुशः ॥ १७० ॥

**अथ वातरक्ते**—संधिष्वनिलरक्ताभ्यां शोफोऽन्तर्बहिराश्रयः ।
छर्दिज्वरारुचिकरो भवेद्वातास्रसंज्ञकः ॥ १७१ ॥
त्रिनेत्राख्यं रसं खादेद्वातशोणितपीडितः ।
वातास्रजिच्छूलगजकेसर्युदयभास्करः ॥ १७२ ॥
पूर्वोक्ता पर्पटी योज्या सर्वेष्वावरणेषु च ।
सर्वरोगहिता चैव नाम्ना सर्वेश्वरी शुभा ॥ १७३ ॥

**अथ चन्द्रावलेहः**—एलायाश्च तुला ग्राह्या जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टं तु शर्करार्धतुलां क्षिपेत् ॥ १७४ ॥

---

१ ज. °पलप°। २ च. पश्चाद्भू°। ३ घ. °येत्तद्द्विगु°। ४ च. °र्पटिकाद्रा°। ५ घ. ताम्रमा°।

शतावर्या विदार्याश्च गोक्षीरं चाढकं पृथक् ।
लेहवत्साधिते तस्मिन्द्राक्षामधुकपिप्पलीः ॥ १७५ ॥
त्रिजातकं च खर्जूरं चन्दनद्वयसारिवा ।
मुस्तापद्मकह्रीबेरधात्री चोत्पलचोरकम् ॥ १७६ ॥
एतेषां पलमादाय क्षिपेत्क्षीर्याश्चतुष्पलम् ।
क्षौद्रप्रस्थेन संयुक्तं लेहयेत्प्रातरुत्थितः ॥ १७७ ॥
पित्तोन्मादविकारेषु शिरोभ्रमणमूर्छिते ।
हस्तपादाङ्गदाहे च पित्तरक्तोत्तरावृतौ ॥
छर्दिकासक्षये पाण्डौ चन्द्रवच्चन्द्रभाषितम् ॥ १७८ ॥

**अथैलेयसर्पिः**—ऐलेयकस्य स्वरसे घृतं क्षीरं समं पचेत् ।
चन्दनं मधुकं द्राक्षा मधूकं च सिता तुगा ॥ १७९ ॥
ऐलेयकमिदं सर्पिः सर्वपित्तविकारजित् ।
वातपित्तविकारघ्नं शिरोभ्रमणकम्पनुत् ॥ १८० ॥

**अथैलेयकतैलम्**—ऐलीयकस्य स्वरसे सक्षीरां शर्करां पिबेत् ।
क्वाथं वा शर्करायुक्तं शिरोभ्रमणकम्पनुत् ॥ १८१ ॥
ऐलीयकस्य स्वरसमाढकं तु भिषग्वरः ।
कुमार्याः स्वरसं शुद्धं चतुष्प्रस्थं तु कारयेत् ॥ १८२ ॥
आमलक्याः शतावर्या रसं प्रस्थद्वयं पृथक् ।
तैलाढकसमायुक्तं क्षीरद्रोणविमिश्रितम् ॥ १८३ ॥
चोचं मलयजं वारि सरलं कुमुदोत्पलम् ।
द्वे मेदे मधुकं द्राक्षा तुगा क्षीरी मधूलिका ॥ १८४ ॥
काकोली क्षीरकाकोली जीवकर्षभकावुभौ ।
मृगनाभ्यजगन्धा च शशाङ्कश्च पृथक्पृथक् ॥ १८५ ॥
एतेषां चार्धपलकं श्लक्ष्णं चूर्णं विनिक्षिपेत् ।
एतत्सर्वं समालोड्य मन्दं मन्दाग्निना पचेत् ॥ १८६ ॥
मुहूर्ते शुभनक्षत्रे नववस्त्रेण पीडयेत् ।
शिरोनेत्रविकारेषु नस्यवत्कर्णयोजितम् ॥ १८७ ॥
अभ्यङ्गोद्वर्तनालेपैः शिरोभ्रमणकम्पनुत् ।
अङ्गदाहं शिरोदाहं नेत्रदाहं च दारुणम् ॥ १८८ ॥

---

१ घ. द्राक्षाप्र°। २ घ. °दाहेषु पि° । च. °दाहौ च । ३ अ. छर्दिकाक्षयपा°। ४ च. ऐले°। ५ च. शिला। ६ घ. तुगाः । ७ घ. ऐलेय°। ८ घ. रसप्र°। ९ ग. °जमोदा च । १० घ. °पलिकं ।

विसर्पकविकारांश्च मूर्ध्नि जातान्बहून्व्रणान्।
आस्यशोषं भ्रमं चैवं नाशयेन्नात्र संशयः॥
ऐलेयकमिदं तैलं प्रशस्तं पित्तरोगिणाम्॥ १८९॥

**अथैलेयकामृतप्राशः**—ऐलेयकं समूलं च मुद्गपर्णी तथैव च।
शतावरी विदारी च वाराहीकन्दमेव च॥ १९०॥
मधुकं च मधूकं च तुगाक्षीरी च गोस्तनी।
एतानि द्विपलांशानि चूर्णीकृत्य पृथक्पृथक्॥ १९१॥
सरलं चन्दनं चोचमुत्पलं कुमुदं जलम्।
काकोली क्षीरकाकोली द्वे मेदे जीवकर्षभौ॥ १९२॥
एतेषां चार्धपलिकं प्रत्येकं शर्करायुतम्।
ऐलेयकं विदारी च वाराही मुद्गपर्णिका॥ १९३॥
एतेषां स्वरसे शुद्धे शतावर्याश्च भावितम्।
एतत्सर्वं समाहृत्य छायाशुष्कं तु सप्तधा॥ १९४॥
इक्ष्वामलकयोः क्षौद्रैर्भावितं सप्तधा पुनः।
पयसा तु पिबेत्प्रातर्यथाग्निबलवान्नरः॥ १९५॥
अङ्गदाहं शिरोदाहं रक्तपित्तं सुदारुणम्।
शिरोक्षिकम्पभ्रमणमित्यादिकगदाञ्जयेत्॥ १९६॥ २७७६॥

इतिश्री वैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये शीतवातस्पर्शवातरक्तवातामवातापस्मारोन्मादैकाङ्गवातसंधिवातभग्नकम्पवातरक्तशिरोभ्रमणचिकित्सा नामैकविंशोऽध्यायः॥ २१॥

---

## अथ द्वाविंशोऽध्यायः।

### [ अथ वन्ध्यादिचिकित्सनम्। ]

भेदा वन्ध्याबलानां हि नवधा परिकीर्तिताः।
तत्राऽऽदिवन्ध्या प्रथमा पापकर्मविनिर्मिता॥ १॥
रक्तेन च पृथग्दोषैः समस्तैः पञ्चधा भवेत्।
भूतदेवापचारैश्च तिस्रो वन्ध्याः प्रकीर्तिताः॥ २॥
पुमानपि भवेद्वन्ध्यो दोषैरेतैश्च शुक्रतः।
गर्भस्रावी स्मृता पूर्वं मृतवत्सा द्वितीयका॥ ३॥
तृतीया स्त्री प्रसूतिः स्यात्काकवन्ध्या सकृत्प्रसूः॥ ४॥ इत्यादि।

१ घ. °न्बहुन्त्र°। २ घ. क्षोद्रे भावि°। ३ अ. °न्ध्यावधूनां। ४ झ. मता। ५ झ. °वाभिचा°।

अथ जयसुन्दरः—सुवर्णं रजतं ताम्रं ताप्यसत्त्वं च वैकृतम् ।
एकैकं निष्कमानेन संशुद्धं परिमारितम् ॥ ५ ॥
एतच्चतुर्गुणं सूतं सूताद्द्विगुणगन्धकम् ।
मर्दयेल्लक्ष्मणातोयैर्बन्धुजीवरसैरपि ॥
काचकूप्यां ततः क्षिप्त्वा ताम्रपात्रं मुखे न्यसेत् ॥ ६ ॥
विलिम्पेदभितः कूपीमङ्गुलोत्सेधया मृदा ।
विशोष्य च पुटं दद्याद्भूमौ निक्षिप्य कूपिकाम् ॥ ७ ॥
गजाख्यपुटपर्याप्तिः शाणकर्षमितोत्पलैः ।
स्वाङ्गशीतं विचूर्ण्याथ भावयेल्लक्ष्मणाद्रवैः ॥ ८ ॥
सप्तवारं विशोष्याथ करण्डान्तर्विनिक्षिपेत् ।
अश्वगन्धारजोयुक्तस्ताम्रगोक्षुर[3]संयुतः ॥ ९ ॥
सेवितो[4] गुञ्जया तुल्यः सितया च रसोत्तमः ।
मासत्रयप्रयोगेण वन्ध्या भवति पुत्रिणी ॥ १० ॥
पुत्रिण्यै स्नानशुद्धायै[6] रजःकौशिकचक्षुषी ।
गव्याज्येन च संसाध्य तत्तदानीं हि भोजयेत् ॥ ११ ॥
ऋतावृताविदं देयं यावन्मासत्रयं भवेत् ।
रसेन्द्रः कथितः सोऽयं चम्पकारण्यवासिभिः ॥ १२ ॥
पूर्णामृताख्ययोगीन्द्रैर्नामतो जयसुन्दरः ।
सेवितेऽस्मिन्रसे स्त्रीणां न भवेत्सूतिकागदः ॥ १३ ॥
भवेत्पुत्रश्च दीर्घायुः पण्डितो भाग्यमण्डितः ॥ १४ ॥

अथ रत्नभागोत्तरः—वज्रं मरकतं पद्मरागं पुष्पं च नीलकम् ।
वैदूर्यं वाऽथ गोमेदं मौक्तिकं विद्रुमं तथा ॥ १५ ॥
पञ्चगुञ्जामितं सर्वं रत्नं भागोत्तरं परम् ।
तत्तत्प्रोक्तविधानेन भस्मीकुर्यात्प्रयत्नतः ॥ १६ ॥
सर्वस्मादष्टगुणितं भस्म वैक्रान्तसंभवम् ।
तत्तुल्यं ताप्यजं भस्म तद्वद्विमलभस्म च ॥ १७ ॥
सर्वतस्त्रिगुणां तुल्यां रसगन्धककज्जलीम् ।
सर्वमेकत्र संमर्द्य छागीदुग्धेन तद्द्व्यहम् ॥ १८ ॥

---

१ घ. ताप्यं स°। २ घ. °तोये बन्धु°। ३ ग. °गोक्षीर°। ४ घ. °तोऽयं जयातु°। ५ च. मात्रात्र°। ६ घ. °यै जरन्कौशि°। ज. °यै जराकौ°। ७ अ. नवाज्ये°। ८ च. °स्तदन्नं हि। ९ क. °यसुन्दरः १० घ. ज्ञान्वितं। ११अ. रत्नभागोत्तरं पुटम्। १२ घ. °तत्प्रोक्त°। १३ ग. °स्समकम्।

विधाय पर्पटीं यत्नात्परिचूर्ण्य प्रयत्नतः ।
वन्ध्याकर्कोटकीपूर्णक्वाथेन परिमर्दयेत् ॥ १९ ॥
काननोत्पलविंशत्या पुटेत्षोडशवारकम् ।
एवं रसो विनिष्पन्नो रत्नभागोत्तराभिधः ॥ २० ॥
महावन्ध्यादिवन्ध्यानां सर्वासां सन्ततिप्रदः ।
देवीशास्त्रे विनिर्दिष्टः पुंसां वन्ध्यत्वरोगनुत् ॥ २१ ॥
सोऽयं पाचनदीपनो गदहरो वृष्यस्तथा गर्भिणी-
सर्वव्याधिविनाशनो रतिकरः पाण्डुप्रचण्डार्तिनुत् ।
धन्यो बुद्धिकरश्च पुत्रजननः सौभाग्यकृद्योषितां
निर्दोषस्मरमन्दिरामयहरो योगादशेषार्तिनुत् ॥ २२ ॥

**अथ चक्रिकाबन्धः**—गन्धकः पलमात्रश्च पृथगक्षौ शिलालकौ ।
त्रिदिनं मर्दयित्वाथ विदध्यात्कज्जलीं शुभाम् ॥ २३ ॥
निःसाराकारमूषायां कज्जलीं निक्षिपेत्ततः ।
द्विपलस्य च ताम्रस्य तन्मुखे चक्रिकां न्यसेत् ॥ २४ ॥
संनिरुध्यातियत्नेन संधिबन्धे विशोषिते ।
ततः करिपुटार्धेन पाकं सम्यक्प्रकल्पयेत् ॥ २५ ॥
स्वतःशीतं समुद्धृत्य चक्रिकां परिचूर्णयेत् ।
स्थगयेत्कूपिकामध्ये वस्त्रेण परिगालयेत् ॥ २६ ॥
रसोऽयं चक्रिकाबन्धस्तत्तद्रोगहरौषधैः ।
दातव्यः शूलरोगेषु मूले गुल्मे भगन्दरे ॥ २७ ॥
ग्रहण्यामग्निमान्द्ये च विद्रधौ जठरामये ।
नागोदरे तथैवोपविष्टके जलकूर्मके ॥ २८ ॥
स्कन्देनामन्दकृपया त्रिलोकत्राणहेतवे ।
चक्रिकाबन्धनामायं प्रसूतस्त्रीगदापहः ॥ २९ ॥

**अथ वर्धमानः**—पलार्धप्रमिते स्वर्णे ताम्रं दत्वाऽक्षमात्रया ।
निर्वापयेच्छतं वारं निक्षिप्य शुकपिच्छकम् ॥ ३० ॥
ततश्च सारणायन्त्रे सूत्रस्थानसमीरिते ।
सारणातैलसंयुक्तं जीर्णषड्गुणगन्धकम् ॥ ३१ ॥

---

१ च. °कीचूर्णं°। २ घ. पुनर्दिष्टः । ३ घ. °त्वदोषनु°। ४ ग. तन्मध्ये । ५ घ. संरुध्यातिप्रय°। ६ क. स्थापये°। ७ घ. °गालितम् । ८ घ. °या त्रैलोक्यत्रा°। ९ च. °यं सस्रुतिस्त्री°। ग. °यं प्रसूतिस्त्री°। १० घ. °वाराग्निक्षि°। ११ च. शुकपि°। १२ ज. °श्च आर° १३ ज. जारणातिलसं°।

रसं हि द्विपलं क्षिप्त्वा सारणाविधियोगतः ।
सारयित्वा ततः पश्चात्पिष्टं सूतं प्रयत्नतः ॥ ३२ ॥
सूत्रप्रोक्तेष्टिकायन्त्रे स्वेदावेष्ट्य च वाससाम् ।
मातुलुङ्गरसापिष्टं चतुर्निष्कमितं *दनुम् ॥ ३३ ॥
ऊर्ध्वं च विनिधायाथ जारयित्वा चतुर्गुणम् ।
तमादाय रसं सम्यग्विचूर्ण्य परिगाल्य च ॥ ३४ ॥
षष्ठांशेन मृतं वज्रं समं वैक्रान्तकं स्मृतम् ।
निक्षिप्य लिङ्गिकापत्ररसैरापूर्य वासरम् ॥ ३५ ॥
पुटेद्द्वादशवाराणि मध्वा द्वादशकोपलैः ।
बन्धुजीवरसेनाथ लक्ष्मणास्वरसेन च ॥ ३६ ॥
पुनः संचूर्ण्य संपूज्य योगिनीपितृदेवताः ।
पुत्रिण्याः पूर्णिमायाश्च पूजितायाः विधानतः ॥ ३७ ॥
इति कृत्वाऽऽप्नुयाद्गर्भं षण्मासाभ्यन्तरात्खलु ।
आदिवन्ध्यादिका वन्ध्या याश्चान्या दुष्टयोनयः ॥ ३८ ॥
प्राप्नुयुर्जीवपुत्रं हि भाग्यसौभाग्यसंयुतम् ।
पुंसामपि च वन्ध्यत्वं ह्यल्परेतस्त्वमेव च ॥ ३९ ॥
बीजदोषा विचित्राश्च विनश्यन्ति न संशयः ॥ ४० ॥
ब्रह्मज्योतिर्मुनिवरमतो वर्धमानो रसोऽयं
बन्ध्यारोगं हरति सकलं योनिदोषानशेषान् ।
सूतीरोगानपि बहुविधान्दुःखसाध्यान्समस्ता-
न्रोगानन्यानपि बहुविधान्रोगहृद्योगयुक्तः ॥ ४१ ॥

**अथ द्रुतिसारः**—युक्तं हि व्योमजाद्रुत्या तुल्यांशं स्वर्णयुग्मसम् ।
पिष्टीकृत्य चिरं पिष्ट्वा मल्लसंपुटके क्षिपेत् ॥ ४२ ॥
निष्कमात्रं बलिं दत्वा शतवारं पुटेत्ततः ।
सम्यङ्निष्पिष्य संगाल्य करण्डान्तर्विनिक्षिपेत् ॥ ४३ ॥
इत्युक्तो द्रुतिसारनामकरसो वन्ध्यामयध्वंसनः
पुत्रिण्याः खलु सूतिकामयहरो वृष्यश्चिरायुःकरः ।
सम्यक्सिद्धबलिद्रुतिप्रकलितो गुञ्जामितः सेवितः
कुर्यात्तीव्रतरां क्षुधं त्वथ महारोगादिरोगाञ्जयेत् ॥ ४४ ॥

* दनुर्गन्धकः ॥

१ ज. °प्त्वा जार°। २ च. मार° । ज. जार°। ३ ज. वा । ४ च. समम् । ५ ज. °ष्य तुङ्ग-कापत्ररसेनाप्लुत्य वा°। ६ घ. °न्तरे खलु । ७ क. °ग उक्तः ८ ज. युक्तिः। ९ झ. °मजद्रुत्या । घ. मजाद्रुत्या । १० क. °र्णं संयुतम् । ११ झ. पिष्टीकृतं । १२ क. °वारपुटे ततः । १३ क. क्षुधां ।

भैतः सर्वामयध्वंसी रसोऽयं हैरिसूचितः ।
जीवपुत्रप्रदः स्त्रीणां यौवनस्थैर्यदायकः ॥ ४५ ॥
भूतप्रेतपिशाचानां भयेभ्योऽभयदायकः ।
जडानां दोहदार्तानां मन्दबुद्धिमतामपि ॥ ४६ ॥
मण्डूकीरससंयुक्तो दातव्यो वचया सह ।
जन्मवन्ध्याः काकवन्ध्या मृतवत्साः कैचित्स्त्रियः ॥
तासां पुत्रोदयार्थाय शंभुना सूचितः पुरा ॥ ४७ ॥

**अथ वन्ध्यागर्भसंप्राप्तिः**—समूलपत्रां सर्पाक्षीं रविवारे समुद्धरेत् ।
एकवर्णगवां क्षीरैः कन्याहस्तेन पेषयेत् ॥ ४८ ॥
ऋतुकाले पिबेन्नित्यं पलार्धं च दिने दिने ।
क्षीरशाल्यन्नमुद्गं च अल्पाहारं प्रकल्पयेत् ॥ ४९ ॥
उद्वेगं त्वर्थ शोकं च दिवा निद्रां च वर्जयेत् ।
न कर्म कारयेत्किंचिद्वर्जयेच्छीतमातपम् ॥ ५० ॥
एवं सप्तदिनं कुर्याद्वन्ध्या भवति गर्भिणी ।
देवदालीयमूलं तु ग्राहयेत्पुष्यभास्करे ॥ ५१ ॥
निष्कत्रयं गवां क्षीरैः पूर्ववत्क्रमयोगता ।
वन्ध्यां प्रलभते गर्भं दिनं पथ्यं यथा पुरा ॥ ५२ ॥
शीततोयेन संपिष्टं शरपुङ्खीयमूलकम् ।
कर्षं पीत्वा लभेद्गर्भं पूर्ववक्रमयोगतः ॥ ५३ ॥
नो चेदपरमासे तु कारयेत्पूर्ववत्पलम् ।
पतिसंगे लभेद्गर्भं नात्र कार्या विचारणा ॥ ५४ ॥
एवमेव तु रुद्राक्षं सर्पाक्षी कर्षमात्रकम् ।
पूर्ववच्च गवां क्षीरैर्ऋतुकाले प्रदापयेत् ॥ ५५ ॥
महागणेशमन्त्रेण रक्षां तस्यास्तु कारयेत् ।
एवं दिनत्रयं कुर्याद्वन्ध्या भवति पुत्रिणी ॥ ५६ ॥
सुश्वेतकण्टकार्याश्च मूलं तद्वच्च गर्भकृत् ।
पूर्ववत्कुरुते पुत्रवती तासां च कथ्यते ॥ ५७ ॥
पेषयेन्महिषीक्षीरैर्विष्णुक्रान्तां समूलकाम् ।
महिषीनवनीतेन ऋतुकाले तु भक्षयेत् ॥ ५८ ॥

---

१ घ. विदुः । २ घ. नन्दिनोदितः । ३ ग. कुधीन्स्त्रियः । ४ क. क्षीरे । ५ घ. वेद्वन्ध्या प° । ६ क. °र्धताद्दिने दिने । ७ घ द्वेगभयशो° । ८ क. °थवा शोकं दि° । ९ ग. पलार्धं पाययेत्सदा । १० घ. °न्ध्याऽपि ल° । ११ घ. नात्र कार्या विचारणा । १२ च. एकमे° । १३ घ. पूर्वपुत्रवती तासां कर्म तद्वच्च क° ।

एवं दिनं दिनं कुर्यात्पथ्यं युक्त्या च पूर्ववत् ।
गर्भं प्रलभते नारी काकवन्ध्या सुशोभनम् ॥ ५९ ॥
अश्वगन्धीयमूलं तु ग्राहयेत्पुष्यभास्करे ।
पेषयेन्महिषीक्षीरैः पलार्धं पाययेत्सदा ॥ ६० ॥
सप्ताहाल्लभते[1] गर्भं काकवन्ध्या[2] चिरायुषम् ।
गर्भः संभूतमात्रस्तु[3] पक्षान्मासाच्च वत्सरात् ॥ ६१ ॥
म्रियते द्वित्रिवर्षैर्वा यस्याः सा मृतवत्सका ।
तत्र योगः प्रकर्तव्यो यथा शंकरभाषितम् ॥ ६२ ॥
मार्गशीर्षेऽथवा ज्येष्ठे पूर्णायां लेपिते[4] गृहे ।
नूतनं कलशं पूर्णं गन्धतोयेन कारयेत् ॥ ६३ ॥
शोभाफलसमायुक्तं सर्वरत्नसमन्वितम् ।
सुवर्णमुद्रिकायुक्तं षट्कोणे मण्डले स्थितम् ॥ ६४ ॥
तन्मध्ये पूजयेद्देवीमेकान्तां[5] नामविश्रुताम्[6] ।
गन्धपुष्पाक्षतैर्धूपदीपैर्नैवेद्यसंयुतैः ॥
अर्चयेद्भक्तिभावेन[7] मद्यैर्मांसैः समत्स्यकैः ॥ ६५ ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराही च तथा चैन्द्री षट्पत्रेषु च मातृकाः ॥
पूजयेन्मन्त्रलिङ्गेन[8] ओंकारैर्नामसंयुतैः ॥ ६६ ॥
दधिभक्तेन पिण्डानि सप्तसंख्यानि कारयेत् ।
षट्संख्या षट्सु पत्रेषु आहृत्य[9] कल्पयेत्पृथक् ॥ ६७ ॥
उल्लेख्य सप्तकं पिण्डं शुचिस्थाने बहिः क्षिपेत् ।
तैर्भुक्तैर्गृहमागच्छेच्चक्राग्रे[10] योगमाचरेत् ॥ ६८ ॥
कन्यकायोगिनीरामा भोजयेत्सकुटुम्बकम्[11] ।
दक्षिणां दापयेत्तासां देवताग्रे निवेद्य[12] च ॥ ६९ ॥
विसर्ज्य देवतां चाथ[13] नद्यां तत्कलशोदकम् ।
शकुनं वीक्षयेद्धीमाञ्शुभेन शुभमादिशेत् ॥ ७० ॥
विपरीते पुनः[14] कुर्याद्योगं तद्वस्तुसिद्धिदम् ।
प्रतिवर्षमिदं कुर्याद्दीर्घजीवी सुतो भवेत् ॥ ७१ ॥

---

१ क. षण्मासाल्ल॰ । २ ट. ॰कालव॰ । ३ घ. संजातमात्रस्तु । ४ च. लेपयेत् । ५ घ. ॰कान्ता ना॰ । ६ च. विसृता॰ । ७ च. ॰क्तिपूर्वेण॰ । घ. ॰क्तिपूर्णेन । ८ घ. ॰न्त्रलिङ्गे ह्रींका॰ । झ. ॰न्त्रबीजेन ह्रींकारे नामसंयुते । ९ क. आहुत्य । घ. आहूत्य । ट. आद्धृत्य । १० घ. ॰र्भुक्ते गृ॰ । ११ घ. ॰येत्सु- कु॰ । १२ च. न वाऽन्यथा । १३ च. वाऽथ । १४ ॰नः कार्यं योगं तद्वत्सुसि॰ ।

ॐ ह्रां ह्रीं एकान्तदेवतायै नमः ।
अनेन मन्त्रेण पूजा जपश्च कार्यः ॥
प्राङ्मुखः कृत्तिकाऋक्षे वन्ध्याकर्कोटकीं हरेत् ।
तत्कन्दं पेषयेत्तोये कर्षमात्रं पिबेत्सदा ॥ ७२ ॥
ऋतुकाले तु सप्ताहं दीर्घजीवी सुतो भवेत् ॥ ७३ ॥

**अथ गर्भरक्षा**—अकस्मात्प्रथमे मासे गर्भे भवति वेदना ।
गोक्षीरैः पेषयेत्तुल्यं पद्मकोशीरचन्दनम् ॥ ७४ ॥
पलमात्रं पिबेन्नारी त्र्यहाद्गर्भः स्थिरो भवेत् ।
नीलोत्पलं मृणालं च खण्डी कर्कटशृङ्गिका ॥ ७५ ॥
गोक्षीरैर्द्वितये मासि पीत्वा शाम्यति वेदना ।
श्रीखण्डं तगरं कुष्ठं मृणालं पद्मकेसरम् ॥ ७६ ॥
पिबेच्छीतोदकैः पिष्टं तृतीये वेदना न हि ।
नीलोत्पलमृणालानि गोक्षीरैश्च कसेरुकम् ॥ ७७ ॥
पाठामुस्तावयस्थाम्बुसारिवापद्मकैः शृतम् ।
शीतं तोयं निहन्त्याशु गर्भिणीज्वरवेदनाम् ॥ ७८ ॥
छिन्नाश्रीपर्णिकाक्काथः सिताक्षौद्रयुतो हरेत् ।
गर्भिणीनां ज्वरं घोरं लङ्केशमिव राघवः ॥ ७९ ॥
पयस्यासारिवायष्टीबलालोध्रमधूद्भवः ।
दुग्धेन मिश्रितः क्काथो हरेद्गर्भवतीज्वरम् ॥ ८० ॥
दुर्जयः सर्वरोगेषु गर्भिणीनां ज्वरः खलु ।
तापो जूर्तिषु गर्भस्य विक्रियां कुरुतेतराम् ॥ ८१ ॥
वृक्षकत्वग्घनो देवदारुदारुविभावरी ।
गर्भिण्या अतिसारघ्नः क्काथ एषां भवेद्ध्रुवम् ॥ ८२ ॥
श्रीपर्णीयष्टिगोप्यब्ददार्वीक्काथोऽतिसारनुत् ।
बलादुरालभापाठाशुण्ठीमुस्ताकषायवत् ॥ ८३ ॥
जातः पुनर्नवाद्र्भ्यां क्काथः क्षीरयुतो निशि ।
पीतो हरेदुदावर्तं गुल्मार्शः शोफवेदनाम् ॥ ८४ ॥
घृतक्षीरगुडान्वाऽऽर्द्रकाथः सिद्धानुचूर्णितः ।
संयोज्य नित्यं सेवेत शोफपित्तापनुत्तये ॥ ८५ ॥

---

१ घ. ऱ्हीं ऱ्हीं । ग. ऱ्हीं ऱ्हां । अ. ॐ ऱ्हीं । २ ज. ङ्मुखं कृ° । ३ घ. मासि । ४ घ. खण्डं । ५ क. °यस्याम्बु° । ६ घ. सृतम् । ७ ग. °मूर्तिषु । ८ घ. कणां संयोज्य से° ।

[1]पुनर्नवावचाकल्कधान्यैर्लेहोऽतिशोफनुत् ।
गुडाज्यसहितं क्वाथं वर्षाभूमूलसाधितम् ॥ ८६ ॥
उदावर्ते च शोफे च गर्भिणीं पाययेद्भिषक् ।
पित्तार्तिं हन्ति यष्टीकाद्राक्षामलकसाधिता[2] ॥ ८७ ॥
पीता [3]दुग्धयवागूश्च गर्भिणीनामसंशयम् ।
तिक्ताहरीतकीभार्ङ्गीवचाशुण्ठीकषायकम् ॥
सगुडं पाययेद्वैद्यः श्वासकासापनुत्तये ॥ ८८ ॥
मरीचचूर्णं सक्षौद्रसिताज्यं कासनाशनम् ॥ ८९ ॥
लाजै[4]र्लाङ्कोलमज्जाम्बु निपीतं [5]वान्तिनाशनम् ।
बालबिल्वोद्भवः क्वाथो हिक्कां हन्यात्[6]समाक्षिकः ॥ ९० ॥
अजमोदाऽश्वगन्धा च द्वे कणे जीरकं तथा ।
लीढा म[7]धुगुडोपेता निर्ह[8]न्युर्मन्दवह्निताम्[9] ॥ ९१ ॥
बालबिल्वविदारीभिः [10]पृश्निपर्ण्या च साधितम् ।
क्षीरं क्षीरयवाग्वाऽपि पिबेद्वातकृतामये ॥ ९२ ॥
श्वदंष्ट्राबलयोः क्वाथो मूत्ररोगे प्रशस्यते ।
सुरदारु व[11]यस्था च शाकबीजं च यष्टिका ॥ ९३ ॥
बला कृष्णतिलास्ताम्रवल्ली चाश्मन्तकस्तथा ।
नीलोत्पलं व[12]यस्या च गुडूची सारिवा तथा ॥ ९४ ॥
मधुयष्टी च पद्मं च रास्ना सारिवया सह ।
काश्मर्यो बृहती क्षीरी[13] शृङ्गवल्लीत्वचो घृतम् ॥ ९५ ॥
मधुपर्णी बला शिग्रु श्वदंष्ट्रा पृश्निपर्णिका ।
सितामधुकशृ[14]ङ्गीकद्राक्षाबिसकसेरुकाः ॥ ९६ ॥
सप्तश्लोकार्धनिर्दिष्टान्योगान्सप्त पयोन्वितान् ।
पिबेत्क्रमेण मासेषु गर्भस्रावादिवारणान् ॥ ९७ ॥
उशीरयष्टीसंसिद्धं गर्भिणीवातहृत्पयः ।
द्राक्षायष्टिकसिद्धा च यवागूश्च तथा फला ॥ ९८ ॥
बला वासा पृथक्पर्णी नि[15]र्यूहश्चापि पित्तनुत् ।
स पुनश्चिच्छन्नया युक्तो गर्भिणीकामलापहः ॥ ९९ ॥

१ घ. °र्नवत्वचा° । २ च. °धितः ॥ ८७ ॥ ३ च. दुग्धं यवागूत्थं ग° । ४ घ. °लाङ्कोल° । ५ झ. वातना° । ६ झ. °न्यात्पयोन्वितः । ७ झ. °धुघृतोपे° । ८ च. °हन्यान्मन्द° । ९ झ. न्युर्वह्निमान्द्यता° । १० घ. °पृष्ठिप° । ११ ग. °यस्या च । १२ घ. °यस्था च । १३ घ. °री शुङ्गवल्कत्व° । झ. °री° वल्कं श्रृङ्गत्वचो । १४ घ. °शृङ्गादद्रा° । १५ च. निर्व्यूह° ।

कासं श्वासं तथा रक्तपित्तं चाशु विनाशयेत् ।
अघृतः सघृतो वाऽपि सदुग्धो वाऽप्यदुग्धवान् ॥ १०० ॥
एक एव बलाक्वाथो गर्भिणीसर्वरोगनुत् ॥ १०१ ॥

**अथ मूढगर्भायाः**—विलोमवायुना गर्भो जीवन्यदि न निःसरेत् ।
स गर्भसङ्ग इत्युक्तो मूढगर्भो मृते शिशौ ॥ १०२ ॥
स्तब्धाध्मानं शिशिरजठरं सास्यशोषं समूर्छं
गर्भास्पन्दः श्वसनकमहापूतिगन्धो भ्रमार्तिः ।
कृच्छ्रोच्छ्वासोऽसितरुचिवपुः स्तब्धनेत्रे व्यथोग्रा
विण्मूत्रार्तिर्भवति हि मृतापत्यगर्भाङ्गनायाः ॥ १०३ ॥
अकालश्वाससंयुक्ता बद्धभ्रष्टभगान्विता ।
शीताङ्गी पूतितोद्गारा मूढगर्भा न जीवति ॥ १०४ ॥
बीजं करञ्जसंजातं कपित्थतुलसीजटा ।
दुग्धे पिष्ट्वा विलिप्याथ नाभिपत्करलेपतः ॥ १०५ ॥
सुरया वाऽहिनिर्मोकैः सम्यग्योनिप्रधूपनात् ।
सुखं सूते वधूर्मूर्ध्नि स्नुक्पयःक्षेपणादपि ॥ १०६ ॥
हलिनीमूलिका नाभिगुह्यबस्तिप्रलेपिता ।
विशल्यां कुरुते नारीं श्वेतपुष्पा च सा क्षणात् ॥ १०७ ॥
यष्टीलुङ्गजटा पिष्टा पीता सूतिकरी ध्रुवम् ।
लाङ्गलीमधुसिन्धूत्थयोनिलेपात्स्रवेद्वधूः ॥ १०८ ॥
मातुलुङ्ग्याश्च मूले च रम्भाया वा कटिस्थिते ।
सिद्धार्थमागधीकुष्ठगोलोमीमिशिकल्कितः ॥ १०९ ॥
निरूहः स्नेहपट्वयुगपरां पातयेत्तराम् ।
सिद्धं सिद्धार्थकं तैलं पायौ वा स्मरमन्दिरे ॥
अनुवासनतः शीघ्रमपरां पातयेद्ध्रुवम् ॥ ११० ॥
कोरण्टकं कुलत्थं च सौवीरेभिः शृतं जलम् ।
युक्तं शर्करया पीतं सूतिशूलज्वरापहम् ॥ १११ ॥
लोहखण्डयुतं पञ्चमूलिकासाधितं जलम् ।
नाशयेत्सूतिकारोगान्सवातान्विविधान्खलु ॥ ११२ ॥

---

१ क. पित्तरक्तं । २ झ. °सी तदा । ३ घ. दुग्धपिष्टा वि° । ४ घ. °लेपिताः । च. °लेपिता । ५ क. °कानां हि गु° । ६ ज. °लेपनात् । ७ झ. °न्धूत्थैर्योनि° । ८ च. °लेन र° । ९ क. °नुपानेन वा शी° । १० घ. सृतं ।

*भूनिम्बनिम्बभद्राश्वगन्धसप्तच्छदत्वचा ।
तैलं पचेत्तदभ्यङ्गात्सूतिकासर्वरोगनुत् ॥ ११३ ॥

## अथ गर्भिणीज्वरहरा सौभाग्यशुण्ठी ।

अञ्जलिद्वितये तोये कंसमात्रपयोन्विते ।
तुलार्धशर्करां दत्वा गुडपाके कृते क्षिपेत् ॥ ११४ ॥
एलारिङ्गणिकावेल्लव्योषजीरकदीप्यकान् ।
भृङ्गं लवङ्गं बोलं च प्रत्येकं च पलं पलम् ॥ ११५ ॥
मिशिः पञ्चपला धान्यं पलत्रयमितं तथा ।
शुण्ठीमष्टपलां सम्यग्विचूर्ण्य परिमिश्रयेत् ॥ ११६ ॥
एषा सौभाग्यशुण्ठीति शंभुदेवेन कीर्तिता ।
सेविता हन्ति सूताया ज्वरं रोगमनेकधा ॥ ११७ ॥
प्लीहानं मलबन्धं च पाण्डुगुल्मारुचीस्तथा ।
कासश्वासकृमीनग्निमान्द्यादिकगदांस्तथा ।
कायाग्निजननं ह्येतत्सूतिकामृतमुच्यते ॥११८॥ इति सौभाग्यशुण्ठी
निर्गुण्डीपत्रनिर्यासो गुडो जीर्णः सुरासुतः ।
सेवितस्तक्रभक्ताभ्यां योनिशूलविनाशनः ॥ ११९ ॥
निर्गताऽपि विशेद्योनिः कारलीकन्दलेपिता ।
इन्द्रगोपाग्निलेपेन श्लथयोनिर्दृढा भवेत् ॥ १२० ॥
माकन्दमूलकर्पूरमधुभिश्च जरत्स्त्रियः ।
कुरुते संवृतां योनिं कन्यकाया इव ध्रुवम् ॥ १२१ ॥
श्रीपर्णीरसकल्काभ्यां तैलं सिद्धं तिलोद्भवम् ।
तत्तैलं तुलिकेनैव स्तनयोः परिदापयेत् ॥ १२२ ॥
पतितावुच्छ्रितौ स्त्रीणां भवेयातां पयोधरौ ।
गजकुम्भसमाकारावुन्नतौ परिमण्डलौ ॥ १२३ ॥

**अथ पर्पटीरसः—**† मञ्जारीमितवज्रहेमजरसो व्योमार्ककान्तैर्मृतै-
र्भागैनोत्तरवर्धितैः समरसैर्गन्धैर्द्विकर्षोन्मितैः ।
जातः पर्पटिकारसो घृतकणायुक्तो हरेत्सर्वशः
सूतीनां हि महागदान्गदचयं नानानुपानान्वितः ॥ १२४ ॥

---

* पञ्चमूलमत्र महत् । † झ. मञ्जारीति सार्धपादद्वयम् ।

---

१ घ. °लार्धा श° । २ क. °काघृत° । ३ घ. जीर्णसुरायुतः । ४ ज. °लेपनात् । ५ घ. °पाज्यले° । ६ घ. श्लथा यो° । ७ घ. °र्भागैः सूत्त° । च. °र्भागैर्नोत्त° । ८ क. ज्ञातः । ९ घ. °र्वतः । १० झ. मूतानां । ११ झ. मार्जारीति ।

स्वर्णतारघनभानुतीक्ष्णकं तेषु चैकमतिमात्रमारितम् ।
सूतिकासकलरोगनाशनं रोगहारि विहितानुपानतः ॥ १२५ ॥

[ इति गर्भिणीसूतिकाचिकित्सा ।

गर्भनिर्गतबालस्य कणास्वर्णं प्रदापयेत् ।
पाषाणद्वितयं युञ्ज्यात्कांस्यभाजनमुच्चकैः ॥ १२६ ॥
तेन त्रस्तः ससंज्ञः स्याद्योनिनिर्गमपीडितः ।
सुखोष्णैः काञ्जिकैर्बालं संप्रोक्ष्य द्वित्रिवारतः ॥ १२७ ॥
देयः शिरसि बालस्य घृतपिण्डो ज्वरापहः ।
शिरोगतविकारघ्नो मुख्यो रक्षाकरस्तथा ॥ १२८ ॥
भक्षणं रोहिणीकल्के सिद्धं पानानुलेपतः ।
ज्वरं पित्तोत्तरं हन्ति मुस्ताक्काथ इव ध्रुवम् ॥ १२९ ॥
अश्वत्थपल्लवैश्चाम्भः क्षीरं पक्कं निषेवितम् ।
पित्तजातं ज्वरं तीव्रं बालानां हन्ति निश्चितम् ॥ १३० ॥
गन्धोत्पलजटापिष्टा कटुकी नाशयेज्ज्वरम् ।
सहदेवीकणाभृङ्गक्षौद्रं लीढं हरेच्छिशोः ॥
वमिकासज्वरव्याधीन्क्षौद्रेणातिविषा तथा ॥ १३१ ॥
न्यग्रोधजम्ब्वाम्रशिरीषकाणां क्काथो रसो वा नवपल्लवानाम् ।
पित्तातिसारज्वरवान्तिमूर्छातृष्णां निहन्यान्मधुना शिशूनाम् ॥१३२॥
मध्वम्बुशृङ्गीपाठाब्दं रक्तातीसारहृच्छिशोः ।
क्षीरं सबोलं कण्ठोरःशिरःकफहरं शिशोः ॥ १३३ ॥
मधुकं मरिचं पिष्टं गोजलैः परिसेवितम् ।
विनाशयति वेगेन बालानां मूत्रविड्ग्रहम् ॥ १३४ ॥
यष्टीलोध्रकणागन्धबालाशाल्मलिसारिवा ।
सुगन्धामाक्षिकं चेति सिद्धं सर्पिर्निषेवितम् ॥
शुष्यद्गात्रस्य बालस्य बृंहणं बलकारि तत् ॥ १३५ ॥
शङ्खनाभिकणापथ्यारसाञ्जनविनिर्मिता ।
वर्तिर्निहन्ति मधुना बालनेत्राखिलामयान् ॥ १३६ ॥
क्षीरेऽश्वगन्धया ताम्रसूतान्तैः सह साधितम् ।
घृतं पुष्टिकरं वर्ण्यं बलकृत्सुखकारि च ॥ १३७ ॥

---

१ च. °यं युद्ध्वा कांस्य° । झ. °यं रुद्ध्वा कांस्य° । २ च. °र्गतपी° । ३ घ. पित्तकृतं ह° । ४ ग. °ङ्बुभृङ्गी° । ५ च. °गन्धाबा° । ६ म. °न्धबला° । ७ झ. °गन्धिमा° । ८ क. °क्षिका चे° । ९ क. शुष्कगात्र° । १० च. रोहणं ।

श्लेष्मा हृत्तालुमांसस्थः करोति कुपितः शिशोः।
तालुकण्टकमेतेन तालुस्थाने[1] च निम्नता॥ १३८॥
तृष्णा तालुविपाकश्च स्तन्य[2]द्वेषश्च विड्ग्रहः।
[3]भ्रमास्यशोषकण्डूतिर्ग्रीवामू[4]र्धगता वमिः॥ १३९॥
अक्षिरोगादिकं चापि तत्र चोन्नीय तालुकम्।
[5]प्रतिसार्यं यवक्षारक्षौद्राभ्यामतियत्नतः॥ १४०॥
यद्वा विश्वाकणासिन्धुगोमयोत्थरसैस्तथा।
पथ्याकुष्ठवचाकल्कं स्तन्येन मधुना सह॥
पीतं निहन्ति वेगेन बालानां तालुकण्टकम्॥ १४१॥
प्रस्वेदान्मललेपाद्वा रक्तश्लेष्मभवो गुदे।
गु[7]दकीटो भवेद्रोगस्तीव्रव्रणसमन्वितः॥ १४२॥
[8]शृतशीताम्बुशैले[9]यैलुकचूर्णं म[10]धूत्कटम्।
तेनापानव्रणं सम्यग्लेपयेद्भिषगुत्तमः॥ १४३॥
त्रिफलाबदरीपत्रक्वाथेन परिषेचयेत्।
[11]रोगकण्डूमतो रक्तं जलूकाभिः समन्वितम्॥ १४४॥
पित्तव्रणचिकित्सा च सकलाऽत्र प्रशस्यते।
गुदपाके तु कर्तव्या पित्तव्रणहरा क्रिया॥ १४५॥
पानप्रलेपयोः शस्तं विशेषेण रसाञ्जनम्।
अजादुग्धेन सं[12]मिश्र्य जीरकाञ्जनचूर्णकैः॥ १४६॥
जातीपत्ररसोपेतैः पूर्वप्रोक्तरसैरपि।
मुखपाके मुखं लिम्पेद्बोधित्वग्घृतसारधैः॥ १४७॥
जातीपत्राभयायष्टीमधुदार्व्या च लेपयेत्।
नाभिपाके प्रलेप्तव्यं सिक्तं तैलेन भूरिशः॥ १४८॥
रजनीयष्टिकालोध्रप्रियङ्गूणां च कल्कतः।
चूर्णैनैषां सतैलेन नाभिपाकं शमं नयेत्॥ १४९॥
अपुष्पाश्वत्थपञ्चाङ्गक्वाथेनापि च कल्कतः।
[13]सिद्धतैलप्रलेपेन कु[14]ण्डलव्याधिनाशनम्॥ १५०॥

---

१ घ. °नेन नि°। २ च. स्तनद्वे°। ३ घ. श्रमा°। ४ क. °र्धरता वमी। ५ च. पूति°। ६ घ. °नाऽन्वितम्। ७ क. °दकिट्टो भ°। ८ घ. सृत°। ९ क. °यनुक°। १० च. °धूत्थकम्। ११ घ. शिराक°। ञ. रोगक° १२ च. °मिश्रं जी°। १३ च. सिद्धं तैलं प्र°। १४ क. कुड्व्या°।

शङ्खनाभिकणापथ्यारसाञ्जनविनिर्मिता ।
वर्तिर्निहन्ति मधुना बालनेत्राखिलामयान् ॥ १५१ ॥
हिङ्गुशुण्ठीकणापथ्या[1]मिशीपञ्चामृतं मतम् ।
सर्वबालामयान्हन्ति पाचनं दीपनं परम् ॥ १५२ ॥
तिक्ताग्निव्योषमालूरपथ्या[2]रुचकहिङ्गुकम् ।
तुल्य[3]दुग्धं घृतं पक्वं गुल्मानाहविलम्बिकाः ॥ १५३ ॥
कासं श्वासं गुदभ्रंशं विनिहन्ति न संशयः ॥ १५४ ॥
राजीकुष्ठनिशागेहधूमवत्सकतक्रतः ।
लेपो विचर्चिकां सिध्म हन्ति पामां च वेगतः ॥ १५५ ॥
राजीकरञ्जपुन्नाटशिरीषार्कनिशाद्वयम् ।
प्रियङ्गुत्रिफलादारुहिङ्गु[4]व्योषकुचन्दनम् ॥ १५६ ॥

**अथ ग्रहघ्नी गुटी**—मञ्जिष्ठोग्राजमूत्रं च गुटिका ग्रहनाशिनी ।
पाननस्याञ्जनालेपस्नानोद्वर्तनधूपनात् ॥ १५७ ॥

**अथ माहेश्वरो धूपः**—श्रीवेष्टदारुबाह्लीकमुस्ताकटुकरोहिणी ।
सर्षपा निम्बपत्राणि मदनस्य फलं त्वचा ॥ १५८ ॥
बृहत्यौ सर्पनिर्मोककार्पासास्थियवास्तुषाः ।
गोशृङ्गं खररोमाणि बर्हिपिच्छं बिडालविट् ॥ १५९ ॥
छागरोमघृतं चेति बस्तमूत्रेण भावितम् ।
एष माहेश्वरो धूपः सर्वग्रहनिवारणः ॥ १६० ॥
छिन्नाफणिज्झहंसाङ्घ्रिभानुपत्रीरसैः सह ।
सस्तन्यं साधितं तैलं लिप्तं सर्वग्रहार्तिजित् ॥ १६१ ॥
स्फूर्जकं हपुषापुष्पं हंसपादी कुरण्टकम् ।
करञ्जार्क[11]दलस्फूर्ज[12]श्वेतपत्रं च कल्कितम् ॥
तेन संसाधितं तैलं तेनाभ्यङ्गं चरेच्छिशोः ॥ १६२ ॥
निम्बाश्वत्थपलाशानां बिल्वकिंशुकयोर्द[13]लैः ।
[14]सिद्धः पीतस्त्वने[15]कांशबालग्रहनिवारणः ॥ १६३ ॥

---

१ च. °थ्यानिशाप°। २ च. °थ्याचवक°। ३ ग. °दुग्धघृ°। ४ घ. °व्योषं कु°। ५ ग. निम्बुप°। ६ झ. वचा। ७ घ. °पत्रर°। ८ ख. °सैर्गुतम्। ९ झ. स्फूर्तिकं। १० घ. °रण्डक°। ११ च. दलं स्फू°। घ. °दले स्फू°। १२ क. °तपुष्पं च। १३ घ. °र्दले। १४ क. सिद्धं सर्पिस्तथा क्षीरं पानाद्बालग्रहाञ्जयेत्। १५ घ. °कांशो बा°।

शैलेयगुग्गुलु[1]रसैः सपुरप्रचण्डद्रव्यापहृत्सरसकुन्दुरुभिः सकुष्ठैः[2]।
सध्यामकैः सुरभिगन्धरसैश्च धूपः सौभाग्य[3]बुद्धिजयकृद्धिजयी[4] विवादे[5] ॥१६४॥

देवासुरोरगपिशाचपितृग्रहेषु
गन्धर्वयक्षपिशिताशिषु च ग्रहेषु।
जीर्णज्वरेषु विहितश्च विषातुरेषु
धूपोऽयमाजिविजयार्थिषु[6] पार्थिवानाम् ॥ १६५ ॥ २९४१ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये वन्ध्यागर्भिणीसूतिकाबालरोगचिकित्सा नाम द्वाविंशोऽध्यायः ॥ २२ ॥

---

## अथ त्रयोविंशोऽध्यायः।

### [ अथ उन्मादवातादिचिकित्सनम्। ]

आधिव्याधिकृशस्य दुर्बलतनोराहारतो वा भया-
त्पूज्यातिक्रमणाद्विषादुपविषाद्वैवादसामर्थ्यतः।
वैषम्यादपि कर्मणां हृदि मलाद्[7]बुद्धेर्विधायोल्वणं
कालुष्यं हतसौख्यदुःखमथनादुन्मादमातन्वते ॥ १ ॥

संजल्पको धावति हन्ति चैतदुन्मादवातस्य च लक्ष्म बोध्यम्।
अत्रार्कमूर्त्याख्यरसस्य वल्लं धत्तूरबीजेन समं प्रदद्यात् ॥ २ ॥

मरीचचूर्णेन घृतेन वाऽपि पथ्यं[8] च गुर्वन्नमिह प्रशस्तम्।
शुष्कं च शाकं परिवर्जयीत[9] रूक्षं कषायं बहुशीतलं च ॥ ३ ॥

निम्बस्य तैलेन विमर्दयेत कलेवरं शाम्यति तेन रोगः।
निर्गुण्डिकोन्मत्तकतुम्बिनीनां[10] रसैस्तु तैलं परिपाचयीत ॥
कलेवरं तेन विलेपयेत मासार्धतः शान्तिमुपैति रोगः ॥ ४ ॥

कार्पासास्थिमयूरपिच्छबृहतीनिर्माल्यपिण्डीतक-
त्वङ्मांसी[11]वृषदंशविट्तुषवचाकेशाहिनिर्मोचकैः[12]।
नागेन्द्रद्विजशृङ्गहिङ्गुमरिचैस्तुल्यैस्तु[13] धूपः कृतः
स्कन्दोन्मादपिशाचराक्षससुरावेश[14]ग्रहघ्नः परम् ॥ ५ ॥

---

१ ख. °लुरसः सपुरः प्रचण्डपुष्पा च वप्यरसकुन्दरभस्मकु°। २ झ. सुकुष्ठैः। ३ ज. °ग्यवादिज°। ४ च. °जयो वि°। ५ अ. विवाहे। ६ घ. °यार्तिषु। ७ ज. °ला बुद्धे°। ८ घ. °थ्यं सुगु°। ९ ग. °जंयित्वा रू°। १० घ. नी च र°। ११ घ. °त्वग्वांशीवृ°। १२ ज. °चनैः। १३ ख. स्तुल्यैः कृतं धूपनं छन्दो°। १४ झ. °समहावेशग्रहघ्नं प°।

क्रुद्धैर्धातुभिराहते च मनसि प्राणी तमःसंविश-
न्दन्तान्खादति फेनमुद्गिरति दोःपादौ क्षिपन्मूढधीः ।
पश्यन्रूपमसत्क्षितौ निपतति प्रायः करोति क्रिया
बीभत्साः स्वयमेव शाम्यति गते वेगे त्वपस्माररुक् ॥ ६ ॥
रसगन्धशिलातुत्थकान्तहेमाब्धिफेनकम् ।
रजनीतेजनीबीजं कर्षमात्रं पृथग्युतम् ॥ ७ ॥
निम्बुद्रवान्तौ तेनान्तर्लिप्तां ताम्रपलोन्मिताम् ।
पात्रीं न्युब्जां सुभाण्डान्तारुध्वा खर्परिकां धृताम् ॥ ८ ॥
भस्मना पूर्वभाण्डान्तर्धृत्वाऽधो द्विनिशं पचेत् ।
स्वाङ्गशीतं विचूर्ण्याथ रसोऽपस्मारनाशनः ॥ ९ ॥
वल्लमस्योदये दद्याद्वचाव्योषविडङ्गयुक् ।
अनु देयमजामूत्रं ततोऽर्धप्रहरे गते ॥ १० ॥
सार्षपे षोडशपले तैले तल्लेपितां पचेत् ।
नस्यं तैलेन तेनास्य दद्यात्सव्योषकेण तु ॥ ११ ॥
कृष्णधत्तूरपञ्चाङ्गं कृष्णगोनवनीतकम् ।
षड्गुणं नवनीतात्तु माषक्वाथं चतुर्गुणम् ॥ १२ ॥
क्षिप्त्वा वचाघृतं तत्तु पथ्यं शाकोदनादिषु ।
शाके तु काकमाची स्याद्भोजने कृष्णगोपयः ॥ १३ ॥
शतधा मारिचं चूर्णं कूष्माण्डीपुष्पभावितम् ।
कुर्यात्तेनैव चूर्णेन रात्रावञ्जनमाचरेत् ॥ १४ ॥
एवं नित्यं कृते याति तृतीयदिवसे ध्रुवम् ।
अपस्मारस्तथा मासं सेव्यमेतन्महौषधम् ॥ १५ ॥
उद्बद्धमानवगलव्यतिषक्तमग्नौ रज्जुं विदह्य निपुणेन कृता मसी या ।
सा शीतलेन सलिलेन समं निपीता पुंसामपस्मृतिविनाशकरी प्रसिद्धा ॥ १६ ॥
कृष्णं श्वानं स्थितमनशनं स्थापयित्वा विरेकं
पश्चाद्ध्वांसिततिलयुतं भोजनं भोजयित्वा ।
तद्विवोत्थासिततिलजदीपाञ्जनं लोचनस्थं
चापस्मारं हरति विधृतं नैम्बसारे शरावे ॥ १७ ॥

---

१ घ. वृद्धै॰ । २ घ. ॰थक्पृथक् ॥ ७ ॥ ३ क. ॰भस्मानापूर्य भा॰ । ४ ज. ॰ना पूर्वभा॰ । झ. ॰ना पूर्वं भा॰ । ५ ख. ॰त्वा पच्याद्घृतं । ६ क. पथ्यशा॰ । ७ घ. ॰स्मारे तथा । च. ॰स्मारं तथा । ८ ग. उद्बुद्ध॰ । ज. उद्बुध्य मा॰ । झ. उद्बन्धमा॰ । ९ ग. मषी । १० च. ॰ध्रा तिलसितयु॰ । ११ क. तद्भावो॰ ।

हेम्ना शुद्धेन संपिष्टं दशमांशंरसं विषम् ।
स्रोतोजं मर्दितं तोयैः शूलिनीदेवदालिजैः ॥ १८ ॥
गन्धकस्य पचेत्तैले वटिकोन्मादहृन्मता ।
त्रिलोहपिष्टस्रोतोजसृष्टित्रययुतं रसम् ॥ १९ ॥
भक्षयेत्पूर्ववत्सिद्धमपस्मारप्रशुत्तये ।
तथैव पर्पटीसूतं ब्राह्मीरसविमिश्रिम् ॥ २० ॥
सूतैकप्रत्ययाख्योऽसावुन्मादापस्मृती हरेत् ॥ २१ ॥

**अथ पर्पटीरसः**—पर्पटीरसगुञ्जाष्टौ नाकुलीबीजपञ्चकम् ।
गोघृतेन तु संयोज्य खादेदुन्मादनाशनम् ॥ २२ ॥
सघृतं माषमण्डं च पाययेद्घृतदुग्धकम् ।
पर्पटीरसगुञ्जाष्टौ ब्राह्मीरससमन्विता ॥ २३ ॥
खादयेद्रोगिणं वैद्योऽपस्मारस्य प्रशुत्तये ॥ २४ ॥

**अथ सर्वेश्वरः**—रसं नारङ्गमूलं च दन्ती पाठा पृथक्पृथक् ।
पलमेकं फेर्नफलमर्कमूलं तथैव च ॥ २५ ॥
पलं शशविषाणं च त्रिफला च पलत्रयम् ।
एतेषां क्राथसंयुक्तं दिनानि त्रीणि मर्दयेत् ॥ २६ ॥
अम्लवेतससंयुक्तमर्कक्षीररसान्वितम् ।
पञ्चपञ्चदिने तद्वदमरीरससंयुतम् ॥ २७ ॥
त्रिंःसप्तदिवसं तद्वन्मर्दयेत्सिद्धमौषधम् ।
पिष्टं चित्रकनिष्काथे वल्लत्रयनिषेवितम् ॥
उन्मादापस्मृती हन्यादेष सर्वेश्वरो रसः ॥ २८ ॥

**अथ नेत्रामयः**—कृष्णे पञ्च नवैव संधिषु दश त्रीण्येव शुक्लेऽखिले
जाताः षोडश वर्त्मजाः खलु चतुर्विंशो दृशोर्विंशतिः ।
सप्तातङ्कयुताश्चतुर्नवतिरित्यक्ष्णोरशेषामया-
न्यो वेत्ति व्यपहर्तुमेष विदुषामग्रे समर्थो भवेत् ॥ २९ ॥
शिलया निहतं नागं रसराजप्रवेशितम् ।
द्विगुणं तुत्थमीषच्च कर्पूरं द्रोणपुष्पजैः ॥ ३० ॥

---

१ क. °शविषं रसम् । २ झ. °तकः प्र° । ३ क. °ष्टौ बाकुचीबी° । ४ घ. °शकम् । ५ च °न्विताम् ॥ २३ ॥ ६ ज. °द्यो ह्यप° । ७ क. °सं भार° । ८ घ. °नपल° । ९ घ. °र्कक्षार° । १० क त्रिस° । ११ ज. चर्मजाः १२ घ. व्यवह° ।

रसैर्विमर्दयेद्वर्तिरेषाऽभिष्पन्दनाशनी।
कार्पासरसपिष्टेन्दुमधुशुल्बरसाञ्जनम्॥ ३१॥
वाताभिष्पन्दजे ताम्रे तिलपर्ण्यम्बुमर्दितम्।
शुल्बजीमूतलोहं च सीसं च समभागिकम्॥ ३२॥
द्विगुणं चाञ्जनं जातीतिलपर्णीमयूरजैः।
पिष्टं निर्घृष्टदध्न्यर्के[1] श्लेष्माभिष्यन्दनाशनम्॥ ३३॥
रसेन्द्रभुजगौ तुल्यौ ताभ्यां द्विगुणमञ्जनम्।
ईषत्कर्पूरसंयुक्तं दशमांशं च सक्तुकम्[2]॥ ३४॥
बलानागबलाजाजीरसैस्ताम्रे[3] दिनत्रयम्।
मर्दितं स्यादभिष्यन्दे संनिपातात्मके हितम्॥ ३५॥
चूर्णं तीक्ष्णस्य ताम्रस्य रसेन्द्रसमचारितम्।
रसाञ्जनं च द्विगुणं वर्षाभूरसमर्दितम्॥
शर्करामाक्षिकोपेतं पित्ताभिष्यन्दसूदनम्॥ ३६॥
नागपारदधात्रीन्दुरत्नाज्यकणसैन्धवम्[4]।
रसाञ्जनं कणाक्षौद्रं ताम्बूलीपत्रवारिणा॥
ताम्रेण मर्दितं कांस्ये पित्ताभिष्यन्दमन्थनुत्॥ ३७॥
ताम्राहितारसपीतकरोहिणीन्दु-
शौण्डीरसाञ्जननदीजपुराणकांस्यैः।
वर्तिः कृता सकलसंमितहंसपादी-
मूलैर्निहन्ति नयनामयजालमाशु॥ ३८॥
पारदनागरसाञ्जनसमानदृढ[5]शिम्बिमूलकं सरजम्।
सप्तदिनं चिञ्चादलरसपिष्टं ताम्रपात्रपर्युषितम्॥ ३९॥
वर्तिरनातपशुष्काऽधिमन्थतिमिरार्मपिल्लशुक्रघ्नी।
पारदनागरसाञ्जनविद्रुमकासीसलोधताम्राणि॥ ४०॥
वृत्त[6]त्रिकटुकगैरिकसिन्धूद्भवतुत्थफेनवराः।
मौक्तिकगन्धिन्याभागिरिकर्णी[7]पुत्रजीवकनकशिफाः॥ ४१॥
चिञ्चा षड्विधमौर्वेलवणं पिचुमन्दपत्ररसैः।
पिष्ट्वा[8] ताम्रे लिप्ता वर्तिः स्यादधिमन्थपिल्लघ्नी॥ ४२॥

---

१ क. °दध्यर्के°। २ अ. सर्जक°। ३ घ. °स्ताम्रे दि°। ४ क. °रत्नाकरण°। ५ घ. °दृसंधिमू°। ६ च. वृत्रात्रि°। ७ च. °कार्णिपु°। ८ क. पिष्ट्वा।

कर्पूराञ्जनसीसपारदकणातीक्ष्णानि पिष्ट्वासकृ-
न्नन्द्यावर्तरसैर्विशोष्य मधुना पिष्ट्वा पुनर्भाजने ।
शार्ङ्गे स्फाटिक एव वा विनिहितः शुक्रार्मकाचापहं
तैमिर्यं च निराकरोति सहसा नेत्रेऽञ्जनं सर्वदा ॥ ४३॥

**अथ गरुडाञ्जनम्**—कतकसैन्धवतुत्थरसाञ्जनं त्रिकटुकस्फटिकाब्दवराटकम्।
त्रिकटुताम्रमयोहिमरोहिणीजलधिफेनवचान्तकरोटिका ॥ ४४ ॥
उरगपारदटङ्कणमञ्जनं त्रिफलया मधुकेन च संयुतम् ।
करजवल्करसेन सुपेषितं गरुडदृष्टिसमां कुरुते दृशम् ॥ ४५ ॥
रसेन्द्रभुजगौ तुल्यौ ताभ्यां द्विगुणमञ्जनम् ।
ईषत्कर्पूरसंयुक्तमञ्जनं तिमिरापहम् ॥ ४६ ॥
गन्धकाद्द्विगुणः सूतः सौवीरं चाष्टमांशतः ।
कपित्थरससंपिष्टमञ्जनं तिमिरप्रणुत् ॥ ४७ ॥

**अथ पटलहरेन्द्ररसः**—नेपालतुत्थटङ्कणतार्क्ष्यवरात्रिकटुफेनजलजं च ।
जम्बीरनीरपिष्टं काचार्मस्रावतिमिरशुक्रपिल्लघ्नम् ॥ ४८ ॥
रुद्धः कपर्दटङ्कणलाक्षाजम्बीरयोर्द्रवैः ।
मासं धान्ये क्षिप्तः सूतः पटलादिरोगहरः ॥ ४९ ॥
स्वर्णं वराटिका सूतः सारः पूतिकपत्रजः ।
नवनीतेन संयुक्ता वर्तिः पुष्पं चिरन्तनम् ॥ ५० ॥
विषं धात्रीफलरसैर्दिनैकं परिभावितम् ।
अञ्जनं शङ्खसहितं प्रगाढतिमिरप्रणुत् ॥ ५१ ॥
शम्बूकं वा वराटं वा दग्धं सूक्ष्मं विचूर्णयेत् ।
अञ्जयेन्नवनीतेन हन्ति पुष्पं चिरन्तनम् ॥ ५२ ॥
शिग्रुमूलं वचाक्षौद्रैर्घृष्ट्वा नेत्रं प्रपूरयेत् ।
निष्पिष्याऽऽर्द्रां निशां वाऽथ सद्यः शूले सुखावहः ।
श्वेतं पुनर्नवामूलं जलेनाञ्ज्यं च शूलनुत् ॥ ५३ ॥
श्वेतं पुनर्नवामूलं घृतघृष्टं समञ्जयेत् ।
जलस्रावं निहन्त्याशु तन्मूलं च निशायुतम् ॥
अञ्जयेद्वक्ररोमाणि न भवन्ति कदाचन ॥ ५४ ॥

---

१ घ. चाङ्गेर्यादिक एकवारि वि°। २ क. त्रिफलता°। घ. कुनटिता°। ३ क. °दमञ्जनटङ्कणं त्रि°। ४ क. त्रिकटुकाम°। ५ च. भृशम् । ६ क. °मिरापहम् ॥४७॥ ७ क. °जलं च । ८ ग. कर्पटटङ्कणं ला°।९ घ. विषधा°। १० च. चाथ । ११ ज. °वहम् । १२ घ. °नाञ्ज्य च. । ज. °नाभ्यञ्ज्य शू°।

निघृष्य नृकपालं तु नारीस्तन्येन चाञ्जयेत्।
शूलं सतिमिरं हन्ति पुष्पं सर्पाक्षिदुग्धतः॥ ५५॥
चिञ्चादलस्वरसपेषितसिग्रुबीजं
कांस्ये निघृष्य परिशोष्य खरातपेन।
तैलं ततः स्रुतमिदं शशिपादयुक्तं
युञ्ज्याद्व्रणार्मतिमिरे तिलमात्रमक्ष्णि॥ ५६॥
कारवेल्लद्रवैः सार्धं सम्यग्भर्ज्या कपर्दिका।
सूतकं टङ्कणं लाक्षातुल्यं जम्बीरजद्रवैः॥ ५७॥
मर्दयेत्ताम्रपात्रे तु तस्मिन्रुध्वा विनिक्षिपेत्।
धान्यराशिस्थितं मासमञ्जनं पटलं हरेत्॥ ५८॥
भृङ्गराजरसैर्घृष्टं पलैकं रक्तचन्दनम्।
ताम्रपात्रे स्थितं भाव्यं तद्रसेन पुनः पुनः॥ ५९॥
शतधा भावयेद्यत्नात्पेष्य पेष्य पुनः पुनः।
मधुनाऽप्यञ्जनं हन्ति षड्विधं तिमिरामयम्॥ ६०॥
बीजपूररसैर्घृष्टं विषतुल्यं शिलायुतम्।
अञ्जनं कारयेद्रात्रौ काचमान्ध्यं च नाशयेत्॥ ६१॥
शम्बूकं पारदं नागं कांस्यचूर्णं रसाञ्जनम्।
समं सर्वमिदं चिञ्चादलद्रावेण पेषयेत्॥ ६२॥
ताम्रपात्रगतां वर्तिं छायाशुष्कां तु कारयेत्।
शुक्लार्मतिमिरं पिल्लं हन्ति सा मधुनाऽञ्जिता॥ ६३॥
असकृच्छीततोयेन सिञ्चेन्नेत्राभिष्यन्दजित्।
अजस्य कृष्णमांसान्तः पिप्पलीमरिचं क्षिपेत्॥ ६४॥
सेचयित्वा घृतैः पँच्याद्घटिकान्ते समुद्धरेत्।
मध्वाज्यस्तन्यसंपिष्टं रात्र्यन्धस्याञ्जनं हितम्॥ ६५॥
अजापित्तेकृतं व्योषं धूमस्थाने विशोष्य च।
चिरबिल्वरसैर्घृष्टं रात्र्यन्धस्याञ्जनं हितम्॥ ६६॥
मरिचं मत्कुणे रक्ते रात्र्यन्धहरमञ्जनम्॥ ६७॥

**अथ नवनेत्रदात्री वटी**—ताम्राग्र्यलवणशङ्खैस्तुल्या मगधोद्भवाँऽथ वै धात्री
जलपिष्टा गुलिकेयं सायंसमयान्ध्यमपहरति॥ ६८॥

---

१ क. शृत°। २ घ. °पात्रेषु त°। ज. °पात्रं तु। ३ क. किरेत्। ४ क. °पात्रास्थि°। ५ क. °रसे घृष्टं। ६ ग. सेवयि°। ज. सादयि°। ७ ज. पश्चादुघ°। ८ घ. °न्धहरमञ्जनम्। ९ च. °त्तगतं व्योम। १० क. °वायते धा°।

द्विरष्टौ ताम्ररजसो मधुकस्य चतुर्दश ।
कुष्ठस्य द्वादशांशाः स्युर्वचायाश्च दशैव तु ॥ ६९ ॥
रजतस्य च चत्वारो द्वौ भागौ कनकस्य च ।
सैन्धवस्याष्टमो भागः पिप्पल्याश्च षडेव तु ॥ ७० ॥
अजाक्षीरेण संपेष्य ताम्रपात्रे निधापयेत् ।
अभिष्यन्दमधीमन्थं व्रणशुक्रं कुकूणकम् ॥
तिमिरं पटलं काचं कण्डूं हन्ति विशेषतः ॥७१॥ इति नवनेत्रदात्रीवटी
कं[1]णलवणवचायुग्यष्टिताम्रैः क्रमेण
द्विगुणधरणवृद्धैश्छागदुग्धेन पिष्टैः ।
निखिलनयनरोगान्हन्ति वर्तिर्विशिष्टा
रज इव निशि सर्पिः क्षौद्रयुक्तं वैरायाः ॥ ७२ ॥
आर्द्रालिकुचभृङ्गाणां रं[3]जःपिष्टेन कस्यचित् ।
गन्धकेन समांशेन प्राग्वत्ताम्रं च मारितम् ॥ ७३ ॥
ताम्राभ्रकं च तुत्थं च दशनिष्कं पृथक्पृथक् ।
कन्दुकस्थमिदं त्रिंशत्कर्षचूर्णितगन्धकम् ॥ ७४ ॥
दत्वाऽल्पशोऽग्निनाऽल्पेन रुं[4]ध्वा धूमं विसर्जयेत् ।
प्रस्थाम्बुमर्दितस्यास्यं प्रासादं निःसृतं पुतम् ॥ ७५ ॥
तुत्थनीरशिलाजाभ्यां कर्षांशाभ्यां विशोषयेत् ।
ताम्रद्युतिरियं साज्यमानुषीक्षीरमाक्षिकात् ॥ ७६ ॥
काचार्मपिल्लाभिष्यन्दव्रणशुक्रप्रणाशिनी ।
तत्किट्टं दद्रुकिटिभं लेपात्पामादिकाञ्जयेत् ॥ ७७ ॥
शुल्बं गन्धकमभ्रकं च रसकं दिक्सङ्ख्यनिष्कं पृथ-
क्सर्वं रुद्रजटारसेन बहुशो भृङ्गस्य सारेण वा ।
प्रायः श्लक्ष्णतरं सुमर्दितमिदं सम्यक्पुटं कारये-
त्स्थाल्यां तत्पुनरेव शीतलमिदं विन्यस्य तस्यान्तरे ॥७८॥
नि[9]ष्कं निष्कमनन्तरं परिपचे[10]ज्जीर्णे यथा गन्धकं
स्यादेवं शतनिष्कमात्रमसकृत्तद्भस्म शीतं ततः ।
प्रस्थेनोन्मितवारिणा विलुलितं कल्कं विना गालितं
संगृह्याम्बु तदन्तरे शिखिनिभं तुत्थं सुचूर्णीकृतम् ॥ ७९ ॥

१ क. कणाल°। २ घ. निशायाः । ३ घ. रसपि°। ४ ज. °रुद्धधू°। ५ घ. विवर्ज°। ६ ज. °स्य प्रसादनिसृतं पुतम् । ७ °भ्रद्युति । (साधीयान्) ८ घ. °क्रगतिप्रणुत् । ९ ज. निष्के । १० च. °चेच्चूर्णे तथा ।

कर्षांशीशितमञ्जनं विनिहितं कांस्ये परं शोषये-
त्तां ताम्रद्रुतिमामनन्ति निखिलान्नेत्रामयान्नाशयेत् ॥ ८० ॥
आर्द्रकस्य रसे पिष्टं गन्धकेन विमिश्रितम्।
तुत्थं तु निष्कदशकं तन्मानं चाभ्रकं भिषक् ॥ ८१ ॥
दशनिष्केन तन्मानं ताम्रं च शकलीकृतम्।
भर्जयेत्खर्परे क्षिप्त्वा दहेत्तदनु चूर्णयेत् ॥ ८२ ॥
तन्मिश्रं कन्दुकस्थेन चूर्णमेतेन भर्जयेत्।
गन्धकं चूर्णितं कृत्वा कर्षं तु विधिना शनैः ॥ ८३ ॥
भर्जितं तज्जलप्रस्थे नीलं चापि शिलाजतु।
कर्षप्रमाणं निक्षिप्य मर्दयेद्द्रावयेत्पुनः ॥ ८४ ॥
प्रसादं स्रावयेत्पश्चादातपे परिशोषयेत्।
गन्धकद्रुतिरित्येषा सर्वनेत्रामयापहा ॥ ८५ ॥
विशेषाद्व्रणकुष्ठं च पिल्लं काचं कुकूणकम्।
जयेत्तस्य घृतक्षौद्रैः सर्वं तत्परिकल्पयेत् ॥ ८६ ॥
व्रणान्कृच्छ्रान्सुसूक्ष्माग्रानपि शीघ्रं निवर्तयेत्।
तत्किट्टं दद्रुकिटिभपामादीँल्लेपनाज्जयेत् ॥ ८७ ॥ ३०२८ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चय उन्माद-
वातापस्मारनेत्ररोगाणामुपचारो नाम त्रयोविंशोऽध्यायः ॥ २३ ॥

---

## अथ चतुर्विंशोऽध्यायः।

### [ अथ कर्णरोगादिचिकित्सनम्। ]

शूला दोषचयाभिभूतिजनिताः पञ्चप्रतीनाहरु-
कण्डूविद्रधिपालिशोथपरिपोटोत्पातलेह्यर्बुदाः।
शोफार्शःकृमिकूचिकर्णकविदोर्युग्मन्थसत्तन्त्रिका-
नादः पिप्पलिदुःखवृद्धिबधिरास्ते पूतिकर्णेन च ॥ १ ॥
कर्णशूलहरः क्षेप्यो लवणार्द्रकयो रसः।
अब्धिफेनो वचा शुण्ठी सैन्धवं च समं समम् ॥ २ ॥
समतैलार्द्रकद्रावैः पक्वे तस्मिन्पलद्वये।
पूर्वोक्तचूर्णं कर्षांशं क्षिप्त्वोत्तार्य सुशीतलम् ॥
तत्तैलं प्रक्षिपेत्कर्णे ध्रुवं गोमक्षिका व्रजेत् ॥ ३ ॥

---

१ घ. °शासित°। २ च. °प्रासारे स्रा°। ३ झ. दं श्राव°। ४ ज. °चजयाभिभूतज°। ५ च. °भूतज°।

तिलपर्णीद्रवं तैलं कोष्णं कर्णे प्रपूरयेत् ।
अर्कपत्रद्रवं तैलं पूरयेत्कर्णशूलनुत् ॥ ४ ॥
लशुनस्य रसं कोष्णं पूरयेत्कर्णशूलनुत् ।
मेघनादद्रवैः पूर्णे कर्णे पूयः प्रशाम्यति ॥ ५ ॥
मुसलीवाकुचीचूर्णं खादेद्वाधिर्यशान्तये ।
कतकं शिग्रुलवणमारनालेन पेषयेत् ॥ ६ ॥
कर्णमूलस्थितं स्फोटं [1]सोष्णलेपाद्विनाशयेत् ।
पुत्रजीवफलस्यैव मज्जा जलनिपेषिता ॥
लेपात्कर्णे गले कक्षे स्फोटं हन्त्युरुमूलकम् ॥ ७ ॥

**अथ गोमक्षिकानिवारणम्**—[2]तगरब्रह्मवृक्षस्य दन्तैर्मूलानि चर्वयेत् ।
रसेन श्रवणं तस्य पूरयेदतियत्नतः ॥
गोमक्षिका विनिर्याति पूरणस्य विधानतः ॥ ८ ॥
मुसलीकन्दचूर्णं हि महिषीनवनीततः ।
लेपयेद्रोधयेद्भाण्डे धान्यराशौ निधापयेत् ॥ ९ ॥
सप्ताहादुद्धृतं लेप्यं कर्ण[3]पालीं विवर्धयेत् ।
चर्मचेटस्य रक्तेन लेपात्[4]कर्णौ विवर्धते ॥ १० ॥
वराहोत्थेन तैलेन लेपात्कर्णौ विवर्धते ।
वज्रवैक्रान्तविमलतुत्थनागविषान्वितैः ॥ ११ ॥
तुल्यपारदगन्धाश्ममाक्षिकैः कज्जली कृता ।
लशुनार्द्रकसि[5]ग्रूणां[6]मरुण्या मूलकस्य च ॥ १२ ॥
पृथग्[7]रसैः कदल्याश्च सप्तधा परिभावयेत् ।
एवं [8]सुपिष्टा वल्लेन सेविता कर्णरोगनुत् ॥ १३ ॥
कुष्ठशुण्ठिवचाहिङ्गुशताह्वाशिग्रुसैन्[9]धवैः ।
बस्तमूत्रैः [10]शृतं तैलं सर्वकर्णामयापहम् ॥ १४ ॥

**अथ नासारोगाः**—षट्पीनसाश्च मलसंचयरक्तदुष्टैः
पूयास्रदी[11]प्तिपिटिकार्बुदपूतिनासाः ।
आस्रावनाहपरिशोषभृशक्षवाशः
पाकैरपीनसं[12]युतैश्च गदा नसि स्युः ॥ १५ ॥

---

१ क. सोष्णं ले°। २ झ. नागरं ब्र°। च. तगरं ब्र°। ३ ग. °पाली वि°। ४ घ. °त्कर्णं विवर्धयेत् । ५ ग. °ग्रूणां मूरुण्यां मू°। ६ घ. °णामुरु°। ७ ज. °ग्रसे क°। ८ घ. सुपिष्टा । ९ च. °न्धवम् । १० घ. सृतं ।११ च. °दीप्तपि°। १२ क. °सगदैश्च ।

पूयास्रमतिदुर्गन्धि नासायामतितापकृत् ।
कृतं नस्येन हन्याच्चच्छ्वेतजीरं सितायुतम् ॥ १६ ॥
घृताक्तं कुङ्कुमं घृष्टं नस्ये पीनसजिद्भवेत् ।
जलेन पेषयेद्धिङ्गुमञ्जनेन च रञ्जयेत् ॥ १७ ॥
तद्वत्तन्दुलतोयेन ह्याकुलीमूलमञ्जयेत् ।
कामलां हन्ति नो चित्रं नासारोगमसङ्क्षतः ॥ १८ ॥

**अथ मणिपर्पटी**—वज्रं मरकतं पुष्पमिन्द्रनीलं सुचूर्णितम् ।
रसद्विगुणगन्धं च कज्जलीं कारयेद्बुधः ॥
द्रावितां लोहपात्रे तु पर्पट्याकारतां नयेत् ॥ १९ ॥
निर्गुण्डीतुलसीशिग्रुधत्तूररविवह्निजैः ॥ २० ॥
रसैर्व्योषवरारम्भासुरसैरपि भावयेत् ।
आर्द्रकस्य रसेनापि सप्तधा परिभावयेत् ॥ २१ ॥
एवं सिद्धो रसो नाम्ना विख्याता मणिपर्पटी ।
सेविता गुञ्जया तुल्या निहन्यान्नासिकादान् ॥ २२ ॥
पथ्योपचारादिवशात्सर्वव्याधीन्विशेषतः ॥ २३ ॥

**अथ मुखरोगाः**—एको गण्डभवो गदः षडुदिता जिह्वोद्भवास्तालुजा-
श्चाष्टावष्ट च मस्तजाश्च दशनोद्भूता दशौष्ठोद्भवाः ।
सन्त्येकादश च त्रयोदश गदा दन्तस्य मूलोद्भवाः
कण्ठेऽष्टादश चोदिता वदनगाः पञ्चाधिका सप्ततिः ॥२४॥
चूर्णं त्वामलकस्यैव गवां क्षीरेण पाययेत् ।
गलकीलकनुत्त्यर्थं विषतिन्दु सनागरम् ॥ २५ ॥
हरीतक्या च संयुक्तं मुखे धारय संततम् ।
बहुशो भानुदुग्धेन सैन्धवेन प्रलेपनम् ।
भल्लातकरसं दत्वा चूर्णं चोपरि बन्धयेत् ॥ २६ ॥
यः प्रातरुत्तेजयति द्विजाञ्जयाकाष्ठेन वज्रद्विज एष जायते ।
तेनैव तैलोपहितेन मार्जनाज्जिह्वा जहात्युद्धतपूतिगन्धिताम्॥२७॥
मुखपाकापनुत्त्यर्थं मधुना पर्पटीरसम् ।
खादयेत्कृतगण्डूषो वटिकां चानुधारयेत् ॥ २८ ॥
महाराष्ट्रिकचूर्णं च चतुष्कृत्वा विभागयेत् ।
निम्बार्द्रकरसाभ्यां तु गुटिका मुखशोषनुत् ॥ २९ ॥

---

१ क. °साहिङ्गुलग°। २ क. शुद्धो । ३ क. वदनतः । ४ घ. गव्यक्षी°। ५ क. मुखं। ६ घ. °रुच्छे°दय । ७ क. °पहते°। ८ क. °गन्धता°। ९ क. °ण्डूषव°।

श्वेतं पुनर्नवामूलं सर्पाक्षीमूलसंयुतम् ।
उद्वर्तनं हरेत्स्त्रीणां मुखच्छायां सुदुःसहाम् ॥ ३० ॥
महिषीक्षीरसंपिष्टं रजनीरक्तचन्दनम् ।
कृतलेपं निहन्त्याशु श्यामिकां गण्डयोः स्थिताम् ॥ ३१ ॥
मुखच्छायाहरं वङ्गभस्म स्यान्महिषीजलैः ।
गोमयस्य रसं सर्पिर्मातुलिङ्गं मनःशिला ॥ ३२ ॥
मुखवर्णकरं श्रेष्ठं तिलकानां च नाशनम् ।
उभे हरिद्रे मञ्जिष्ठा घृतं गौराश्च सर्षपाः ॥ ३३ ॥
पेष्या गैरिकसंयुक्ता अजाक्षीरेण पाचिताः ।
एतेनैव भवेद्वक्त्रमुदयादित्यसंनिभम् ॥ ३४ ॥
गोमूत्रैः क्वाथयेत्कुष्ठं बालकं सहरीतकम् ।
पिष्ट्वा सर्वं वटीं कुर्यान्मुखदौर्गन्ध्यनाशिनीम् ॥ ३५ ॥
गृहधूमारनालेन क्वाथं समधु सैन्धवम् ।
गोमयैः क्वथिता पथ्या निशि कृष्णा कणान्विता ॥ ३६ ॥
वदनस्य दुरामोदं निहन्ति परिशीलिता ।
लंजा जातीफलं पूगं तुल्यं भक्ष्यं पिबेदनु ॥ ३७ ॥
शीततोयं पलार्धं च आस्यवैरस्यशान्तये ।
निर्गुण्डीमुत्पलं कन्दं चर्वयेदुपजिह्वके ॥ ३८ ॥
ताम्रपात्रे क्षणं पाच्यमभयाचूर्णकं मधु ।
करेण गुटिका कार्या दन्तैर्धार्या क्रमीन्हरेत् ॥ ३९ ॥
कासीसं हिङ्गुसौराष्ट्रीदेवदारु समं जलैः ।
गुटिकां धारयेद्दन्तैः कृमिशूलहरं परम् ॥ ४० ॥
विशालायाः फलं चूर्ण्य तप्तलोहोपरि क्षिपेत् ।
तद्धूमाद्घृष्टदन्तानां कीटपातो भवत्यलम् ॥ ४१ ॥
जातीकोरण्टपत्रं च चर्वयेत्प्रातरुत्थितः ।
स्थिराः स्युश्चलिता दन्तास्तत्काष्ठैर्दन्तधावनात् ॥ ४२ ॥
मूलबीजं मुखे धार्यं दन्तदार्ढ्यकरं परम् ।
किञ्चिल्लवणसंयुक्तमारनालं विपाचयेत् ॥ ४३ ॥

---

१ घ. संघृष्टं रजतं र°। २ च. °क्त्रममलादि°। ३ क. पालकं। घ. पालिकं। झ. वालकं। ४ घ. क्वथिता। ५ घ. मिर्शी। ६ क. लञा। ८ घ. °तोयपलार्धं तु आ°। ८ घ. °ह्वनुत् ॥ ३८ ॥ ९ घ. °याः पलं चूर्णं त°। १० क. °लोहे प°। ११ क. वा। १२ क. मूलीबी°। घ. चूल°।

तेन गण्डूषमात्रेण मुखवैरस्यनाशनम्।
ताम्बूलचूर्णदग्धस्तु गण्डूषस्तिलतैलतः॥ ४४॥
काञ्जिकैर्लवणाक्तैर्वा गण्डूषः सुखदायकः।
अश्वगन्धाजमोदा च वचा कुष्ठं कटुत्रयम्॥ ४५॥
[1]शतपुष्पं ब्रह्मबीजं सैन्धवं च समं समम्।
एतदर्धं वचार्धं च चूर्णितं मधुसर्पिषा॥ ४६॥
भक्षयेत्कर्षमात्रं तु जीर्णान्ते क्षीरभोजनः।[2]
सहस्रग्रन्थधारी स्यान्मूकौ[3] वा वाक्पतिर्भवेत्॥ ४७॥
पारदं [4]विमलं ताप्यं[5] त्रिकटुं ताम्रसैन्धवम्।
[6]तुल्यं गवां जलैः पिष्टं सुखोष्णं लेपयेन्मुहुः॥ ४८॥
त्र्यहेण कण्ठशालूकं गलग्रन्थिं च नाशयेत्।
[7]लेपयेद्भानुदुग्धेन सैन्धवं गलकीलनुत्॥ ४९॥
[8]तथाऽभ्रतुत्थकुनटीराजावर्तशिलाजतु।
गुग्गुलुर्हरवीर्यं च मुखरोगनिबर्हणम्॥ ५०॥
महिषीमूत्रसंपिष्टं लोहकिट्टं [9]क्षणं पचेत्।
तेन लेपो निहन्त्याशु गलरोगं सुदुःसहम्॥ ५१॥
जलेन [10]लेपयेत्तुल्यं काञ्चनीचित्रकं विषम्।
सप्ताहं लेपयेत्तेन [11]ह्यदृश्या गण्डमालिकाः॥ ५२॥
स्फुटन्ति नात्र संदेहः स्फोटलेपमिमं शृणु।
निजद्रावेण [12]संघृष्टं मुण्डीमूलं प्रलेपनात्॥ ५३॥
गण्डमालाः क्षयं यान्ति तद्द्रवं च पिबेज्जलम्।
ब्रह्मदण्डीयमूलं तु पिष्टं तन्दुलवारिणा॥
स्फुटितां हन्ति लेपेन गण्डमालां न संशयः॥ ५४॥
गन्धकं सूतकं तुल्यमर्कक्षीरेण सैन्धवम्।
पिष्ट्वा च काञ्चनीमूलं लेपोऽयं[13] गण्डमालिकाम्॥ ५५॥
अदृश्याः स्फोटयन्त्याशु मुण्डीद्रावेण पेषितम्।
तन्मूलं लेपयेत्तत्र [14]त्रिःसप्ताहं प्रशान्तये॥
पिष्ट्वा जेपालपत्राणि स्वरसेन ततो [15]वटीम्॥ ५६॥

---

१ घ. शतपुष्पा। २ घ. जनम्। ३ क. °कोऽपि सुकविर्भ°। ४ घ. विमला। ५ घ. °प्यं ताम्रं त्रिकटु सै°। ६ घ. तुत्थं। ७ क. °पयित्वा तु दु°। ८ घ. ताप्याभ्र°। ९ घ. समं। १० घ. पेषयेत्तुल्यं। ११ ज. °ह्यपच्या ग°। १२ ज. संपिष्टमुण्डीमूलप्र°। घ. संघृष्टमुण्डीमूलप्र°। १३ घ. °यं कण्ठमा°। १४ घ. त्रिसप्ताहं। १५ अ. वटी।

छायाशुष्कां तयालेपाद्दण्डमालां विनाशयेत् ।
हेमतारयुतं सूतं तालकं क्षीरमर्दितम् ॥ ५७ ॥
क्षौद्रे तिलानां तैलेन प्रस्विन्नं दन्तदार्ढ्यकृत् ।
दन्तदार्ढ्यप्रसिद्ध्यर्थं गुटिकां देहि सर्वदा ॥ ५८ ॥
रसस्य धातुबद्धस्य चालनं घर्षणं तथा ।
रूप्यादिचूर्णमादाय पिष्टिं साधय यत्नतः ॥ ५९ ॥
निम्बुमध्ये विनिक्षिप्य दिनानां पञ्च धारय ।
तालचूर्णं समादाय भानुदुग्धेन भावयेत् ॥ ६० ॥
तन्मध्ये गुलिकां क्षिप्त्वा पचस्व तिलतैलके ।
दोलायन्त्रे निबध्यैनां यत्नेन दिवसत्रयम् ॥ ६१ ॥
मलापकर्षणं कृत्वा मधुभाण्डे निधापयेत् ।
मुखे धारय दन्तानां दार्ढ्याय गुटिकामिमाम् ॥ ६२ ॥

**अथ शिरोरोगाः**—शिरस्तोदाश्चतुर्धोक्ता दोषैः सर्वास्रजन्तुभिः ।
कम्पश्चार्धावभेदश्च सूर्यावर्तोऽपि शङ्खकः ॥ ६३ ॥
गिरिकर्णीफलं मूलं सदलं नस्यमाचरेत् ।
मूलं वा बन्धयेत्कर्णे निहन्त्यर्धशिरोव्यथाम् ॥ ६४ ॥
गुडं करञ्जबीजं च नस्यमुष्णजलैर्हितम् ।
मरिचं भृङ्गजैर्द्रावैर्लेपोऽयं हन्ति तां रुजम् ॥ ६५ ॥
मृतसूताभ्रकं तीक्ष्णं कान्तं ताम्रं मृतं समम् ।
स्नुहीक्षीरैर्दिनं मर्द्यं पिण्डं तन्माषमात्रकम् ॥ ६६ ॥
सप्ताहात्सूर्यवर्तादीञ्शिरोरोगान्विनाशयेत् ।
कुङ्कुमं मधुयष्टी च सिताघृतगुणोत्तरम् ॥ ६७ ॥
सप्ताहेन कृते नस्ये दाहं हन्ति शिरोरुजाम् ।
शिग्रुपत्ररसैर्मर्द्यं मरिचं चार्धशूलनुत् ॥ ६८ ॥
कुङ्कुमं घृतसंयुक्तं नस्याद्धन्ति शिरोरुजम् ।
पारदं मर्दयेन्निष्कं कृष्णधत्तूरजैर्द्रवैः ॥ ६९ ॥
नागवल्लीदलैर्वाऽथ वस्त्रखण्डं प्रलेपयेत् ।
तद्वस्त्रं मस्तके वेष्ट्य धार्यं यामत्रयं बुधैः ॥ ७० ॥

---

१ ज. शुष्कात°। २ झ. युतः सूतास्तिलार्कक्षीरमर्दितः । ३ क. क्षौद्रीशिला° ग. क्षौद्रं ति°। ४ घ. पिष्टं साध्य प्रय°। ५ ज. समासाद्य । ६ घ. सजलं । ७ घ. पीतं । ८ क. °चं मूर्ध°। घ. °चं मूर्ध्नि शू°। ९ क. बद्ध्वा । घ. षेष्यं ।

यूकाः पतन्ति निःशेषाः सलिक्षा नात्र संशयः ॥ ७१ ॥
कण्टकारीफलरसैस्तैलं तुल्यं विपाचयेत् ।
जंयापुष्पद्रवैर्वाऽथ तल्लेपो दारुणप्रणुत् ॥ ७२ ॥
द्विनिशानवनीतेन लेपाद्वा खण्डकेशनुत् ॥ ७३ ॥
जातिपुष्पं फलं मूलं कृष्णगोमूत्रपेषितम् ।
लेपोऽयं सप्तवारेण दृढकेशकरः परम् ॥ ७४ ॥
शृङ्गाटत्रिफलाभृङ्गीनीलोत्पलमयोरजः ।
सूक्ष्मचूर्णं समं कृत्वा पचेत्तैले चतुर्गुणे ॥ ७५ ॥
तल्लेपेन दृढाः केशाः कुटिलाः सरला अपि ।
किटिभक्षतकेशान्तस्थाने स्वर्णेन घर्षयेत् ॥ ७६ ॥
यावत्सुतप्ततां याति ततो लेपमिमं शृणु ।
भल्लातकं च बृहती गुञ्जामूलं फलं तथा ॥
मधुना सह लेपेन चाम्पारोगचयप्रणुत् ॥ ७७ ॥
गुञ्जामूलं फलं चूर्णं कण्टकार्याः फलद्रवैः ।
तेन लेपेन हन्त्याशु चाप्यरोगं सुदुःसहम् ॥ ७८ ॥
अभ्रजीर्णरसस्तीक्ष्णं स्नुहीक्षीरं सुरायसम् ।
शुल्बं च सूर्यावर्तादीञ्शिरोरोगान्निवर्तयेत् ॥
कटुतैलकृतं नस्यं पलितारूंषिकापहम् ॥ ७९ ॥
स्नुह्यर्कक्षीरभृङ्गाम्बुगोमूत्रहलिनीविषैः ।
गुञ्जाविशालामरिचैः कटुतैलं विपाचितम् ॥
खलतिं शमयत्यम्लपिष्टमष्टगुणं विषात् ॥ ८० ॥

**अथ व्रणाधिकारः**—दोषैर्द्वन्द्वैः समस्तैश्च सास्रैस्तैरसृजाऽपि च ।
व्रणभेदा इति प्रोक्ता वैद्यशास्त्रविशारदैः ॥ ८१ ॥
शुल्बचूर्णं रसे जीर्णे मदयन्तीपुनर्नवे ।
मेषशृङ्गीरसश्चैतद्व्रणशोधनरोपणम् ॥ ८२ ॥
पटोलनिम्बपत्रं च मधुयष्टीनिशातिलाः ।
त्रिवृद्दन्तीरसैः पिष्ट्वा पूरयेद्व्रणरोपणम् ॥ ८३ ॥

**अथ जात्याद्यं घृतम्**—निम्बपत्रं तिलं पिष्ट्वा पूरयेन्मधुसर्पिषा ।
जातीपत्रं पटोलं च निम्बोशीरकरञ्जकम् ॥ ८४ ॥

---

१ क. जपापु°। २ क. जातीपुष्पफ°। घ. जातीपुष्पं दलं मू°। ३ क. सप्तरात्रेण । ४ क. °मयोर°। ५ झ. कीटभक्षितकेशान्तं धान्यस्व°। ६ ग. °स्थानं स्व°। ७ क. °तैलविषं न°। घ. °तैलं विषं न°। ८ क. °ष्टनष्ट°।

मञ्जिष्ठा मधुयष्टी च तुत्थपत्रकसारिवा:[1] ।
प्रत्येकं चूर्णयेत्कर्षं गैव्याज्यं[2] द्वादशं पलम् ॥ ८५ ॥
घृताच्चतुर्गुणं तोयं पाच्यमाज्यावशेषितम् ।
तेनाभ्यक्तो मर्मजातान्व्रणान्नाडीव्रणानपि ॥
स्रवन्ति सूक्ष्मरन्ध्राणि पूरयेन्नात्र संशयः ॥ ८६ ॥ इति जात्याद्यं घृतम्।
अपामार्गस्य पत्रोत्थरसेनाऽऽपूरयेद्व्रणम् ।
किंवा तद्बीजचूर्णेन[3] व्रणं दुष्टं प्ररोहयेत् ॥ ८७ ॥
पुरातनगुडैस्तुल्यं टङ्कणं सूक्ष्मचूर्णितम् ।
तद्वर्त्या पूरयेद्गूढं व्रणं शीघ्रतरं महत् ॥ ८८ ॥
पारदस्य त्रयो भागाः कमलस्यैकविंशतिः ।
जम्बीराम्लेन तत्पिष्टं माणिमन्थस्य सप्ततिः ॥ ८९ ॥
नवभिर्गन्धकस्यांशैर्भृङ्गसारेण मर्दयेत् ।
सप्ताहमातपे तीव्रे धारितं शस्त्रवल्लिखेत् ॥ ९० ॥

**अथ भङ्गः**—भङ्गो द्विधा निजागन्तुबाह्याभ्यन्तरभेदतः ।
भङ्गेष्वैरण्डतैलेन प्रयुञ्ज्यात्पर्पटीरसम् ॥ ९१ ॥
वज्रीं पिष्ट्वा वालकस्य[4] प्रणुत्त्यै मेषीदुग्धं कान्तपाषाणतुल्यैः ।
तुल्यं लेपादस्थिभङ्गं निहन्ति बाह्याभ्यन्तःसंस्थितं तत्क्षणेन ॥ ९२ ॥
गुदस्य पार्श्वे पिटिकार्तिकारी शोफादियुक्तः स भगन्दरः स्यात् ॥ ९३ ॥
वृषणासनयोर्मध्ये प्रदेशो भग उच्यते ।
तमेव दारयत्यस्माद्भगन्दर इति स्मृतः ॥ ९४ ॥
आदौ सर्वप्रयत्नेन पाकं रक्षेद्भगन्दरे ।
स्राव्यं रक्तं व्रणे जाते जलूका वा प्रयोजयेत्[5] ॥
लाङ्गलीकृष्णधत्तूरविषमुष्टिं प्रलेपयेत् ॥ ९५ ॥
रसगन्धकसिन्धूत्थतुत्थनागाः सजीरकाः ।
तिक्तकोशातकीसारः पिष्टा[6] घ्नन्ति भगन्दरम् ॥
गुल्मोक्तचक्रिकाबद्धो भगन्दरहरः परम् ॥ ९६ ॥
शुद्धसूतं द्विधा गन्धं कुमारीरसमर्दितम् ।
त्र्यहान्ते गोलकं कृत्वा हण्डिकान्ते निरोधयेत् ॥ ९७ ॥

---

१ च. °रिवा । २ घ. गवाज्यं । ३ क. °जपूर्णे । ४ क. बालकस्य । ५ क. प्रवाहयेत् । झ. प्रदापयेत् । ६ ज. पिष्ट्वा ।

शुद्धेन ताम्रपात्रेण तयोस्तुल्येन यत्नतः।
तद्भाण्डं भस्मना पूर्यं चुल्ल्यां तीव्राग्निना पचेत्॥ ९८॥
द्वियामान्ते तदुद्धृत्य चूर्णयेत्स्वाङ्गशीतलम्।
जम्बीरस्य द्रवैः पिष्ट्वा रुद्ध्वा सप्तपुटैः पचेत्॥ ९९॥
गुञ्जैकं मधुराहारं दिवा स्वापं च मैथुनम्।
वर्जयेच्छीतलाहारं रसेऽस्मिन्रविताण्डवे॥ १००॥
ताम्रचूर्णं सप्तभागं भागमेकं तु पारदम्।
सैन्धवं सप्तभागं च गन्धकं नवभागिकम्॥ १०१॥
भृङ्गीद्रावैः सजम्बीरैः सप्ताहं घर्ममर्दितम्।
तेन लिप्तं स्फुटत्याशु यदि पक्वं भगन्दरम्॥ १०२॥
न शस्त्रैश्छेदयेत्प्राज्ञः स्फोटयेल्लेपनादिभिः।
हरिद्रानिम्बसिधूत्थं पिष्ट्वा लिप्त्वा स्फुटत्यलम्॥ १०३॥
नरास्थितैललेपेन स्फुटितं शुष्यति[1] व्रणम्।
ताम्रभस्म दिनं *घर्ममदयन्तीपुनर्नवान्॥ १०४॥
मेषशृङ्गीद्रवैस्तेन व्रणशोधनरोपणम्।
त्रिफलाक्काथसंयुक्तमार्जारास्थिप्रलेपनात्॥ १०५॥
क्षालयेत्रिफलाक्काथैर्हन्याद्दुष्टभगन्दरम्।
भूतलोत्थं पिबेच्चूर्णं खररक्तेन संयुतम्॥ १०६॥
श्वानास्थिलेपनात्क्काथाच्छीघ्रं हन्याद्भगन्दरम्।
मेदोमांसास्रगाः कुर्युर्वृत्तं ग्रन्थितमुन्नतम्॥ १०७॥
दोषाः शोफादिकं तत्र ग्रथनाद्ग्रन्थिमाहतम्[2]।
अरिमेदपलाशानां[3] ग्रन्थिभस्म विमर्दयेत्॥ १०८॥
भस्मना तेन दत्तः सन्मेदोग्रन्थिविनाशनः।
गुडूचीसूरणं निष्कत्रयमुष्णाम्बुमर्दितम्॥ १०९॥
मेदोवृद्धिरसात्तेन हन्ति रोगं च पूर्वजम्।
गण्डमालां जयत्याशु गुल्मोक्तोदयभास्करः॥ ११०॥
पुत्रजीवस्य मज्जां तु जलैः पिष्ट्वा प्रलेपनात्।
कालस्फोटं विषस्फोटं सद्यो हन्यात्सवेदनम्॥ १११॥

* मर्धं मदयन्तीपुनर्नवे। साधीयान्।

1 ङ. शुध्यति। 2 ङ. ग्रन्थना°। 3 घ. हरि°।

ग्रन्थ्यादिनिखिलान्रोगान्सर्वरोगाश्रयान्हरेत् ॥ ११२ ॥
सन्धिग्रन्थिस्तापयुक्तो यदि स्यात्क्षीरं रात्रोदनं संनिदध्यात् ।
पादाङ्गुष्ठस्याग्रदेशेषु रक्तस्रावं कुर्यात्तेन शीघ्रं सुखी स्यात् ॥ ११३ ॥
कक्षग्रन्थिं गलग्रन्थिं कटिग्रन्थिं च नाशयेत् ।
अन्यं च स्फोटकं तीव्रं पुत्रजीवो विनाशयेत् ॥ ११४ ॥
गुञ्जापत्रं शिलां यष्टिं गवां क्षीरेण पाययेत् ।
तलस्फोटं निहन्त्याशु मज्जा वा पुत्रजीवजा ॥ ११५ ॥
विष्णुक्रान्ता च पेटारी काञ्जिकेन तु पेषिता ।
कालस्फोटं हरेल्लेपाद्दुष्टग्रन्थिषु का कथा ॥ ११६ ॥
पुनर्नवार्काभयशिग्रुमुष्टिकरञ्जसिन्धूत्थमहौषधं च ।
गोमूत्रपिष्टं च सुखोष्णलेपाद्ग्रन्थ्यर्बुदं हन्त्यपचीं च सद्यः ॥ ११७ ॥
[1]मेदोमदोषं मासोत्थग्रन्थिरूपं ततो महत् ।
अर्बुदं दुष्टरुधिरं स्रवेत्तच्छोणितार्बुदम् ॥ ११८ ॥
तन्दुलीयकवर्षाभूनागकन्यावरारसे ।
गोमूत्रे च रसः पिष्टः पुटपक्वोऽर्बुदादिजित् ॥ ११९ ॥
लिप्तं यवक्षारविडङ्गबीजं गन्धोपलस्यानशनैः कृतैर्यत् ।
रक्तेन मिश्रैः सरसस्य ‾ ‾ तदर्बुदं शाम्यति नान्यथैतत् ॥ १२० ॥
मेदोत्थामलकक्षवंक्षणतले मन्याद्दशोः कुर्वते
वार्ताकीफलकोपमान्सकठिनान्गण्डान्सकण्डून्मलाः ।
पच्यन्तेऽल्परुजः स्रवन्ति नितरां रुह्यन्ति नश्यन्त्यलं
दूर्वेव क्षयवृद्धिभागिनि नृणां सा गण्डमालापची ॥ १२१ ॥
सुरवारुण्या मूलं गोमूत्रयुतं महेन्द्रकन्या च ।
अपकरोति गण्डमालां पित्तं श्लक्ष्णेन परिघृष्टम् ॥ १२२ ॥
अर्कक्षीरजयापुष्पतैलला[2]क्षारसैः समैः ।
गण्डमाला शमं याति प्रलिप्ता सप्तभिर्दिनैः ॥ १२३ ॥
पुष्ये गृहीतं गिरिकर्णिकाया मूलं सिताया गलके निबद्धम् ।
गव्येन लीढं यदि वा घृतेन निहन्ति घोरामपचीं तदेव ॥ १२४ ॥
छुछुन्दरीसाधिततैललिप्ता त्रिभिर्दिनैर्नश्यति गण्डमाला ॥ १२५ ॥

---

१ झ. ड. मेदोऽत्र दोषमा°। २ झ. ड. °न्याबळार°।

मूलिका सहदेव्युत्था रवौ ग्राह्याऽथ धारिता ।
गण्डमालाहरा कर्णे महादेवेन भाषिता ॥ १२६ ॥

गुञ्जाटङ्कणशिग्रुमूलरजनीशम्याकभल्लातकैः
स्नुह्यर्काग्निकरञ्जसैन्धववचाकुष्ठाभयालाङ्गली ।
वर्षाभूशरभूशिरीषलवणव्योषाश्वमाराविषं
गोमूत्रैः शमयेद्विलिप्तमपचीग्रन्थ्यर्बुदश्लीपदम् ॥ १२७ ॥ ३१९९ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये कर्णरोगनासारोगमुखरोगगलरोगमुखपाकमुखच्छायाजिह्वादन्तकण्ठरोगगण्डमालाशिरोरोगयूकादारुणकेशरोगव्रणरोगभङ्गरोगभगन्दरापचीग्रन्थ्यर्बुदकालस्फोटादिचिकित्सितं नाम चतुर्विंशोऽध्यायः ॥ २४ ॥

---

## अथ पञ्चविंशोऽध्यायः ।

### [ अथ क्षुद्ररोगादिचिकित्सनम् ।]

व्यङ्गः कच्छपनीलिकाकुनखविद्धोत्कोठकोठालसैः
कक्षारुद्धगुदप्रसुप्तिविवृताविस्फोटवल्मीकरुक् ।
विस्फः स्यात्कदराजगल्लिजतुमण्यन्धालजीराजिका-
क्षुद्रालाञ्छनशर्करेति च यवप्रख्याग्निरोहिण्यपि ॥१॥

जालाश्मगर्दभविदारिमसूरिकाभिः
सत्पद्मकण्टकरुजा सह गर्दभी च ।
स्याच्छर्करार्बुदमषाननदूषिकैश्च
गण्डाह्वया पनसिका त्विरिवेल्लिकेति ॥ २ ॥

सर्पिषा निम्बचूर्णेन प्रयुक्ता पर्पटी हरेत् ।
मसूरिकाक्षुद्ररोगानन्यानपि च दुस्तरान् ॥ ३ ॥

तत्कालशस्त्रमहतः शशो यस्तस्यासृजा नश्यति लिप्यमानम् ।
व्यङ्गं मुखे जातिफलस्य बाह्यत्वचाऽथवा संततमेव लिप्तम् ॥४॥

इङ्गुदीफलसमुद्भवमज्जा पेषिताऽतिशिशिरेण जलेन ।
एकविंशतिदिनप्रविलिप्ता व्यङ्गमाननभवं परिमार्ष्टि ॥ ५ ॥

उद्धृत्य कुनखं क्षीरं रेनुकपर्णी टङ्कणं समम् ।
सम्यङ्निरुद्धदाहं च मूले कृत्वा नखी भवेत् ॥ ६ ॥

---

१ क. °ल्लातका । २ क. °ङ्गलीः । ३ क. °शठभू° । ४ क. °षवरणं व्यो° । ५ क. °पदान् । ६ घ. °स्नुकुपर्णी । ७ ग. °ङ्कनिबन्धदा° । ८ ग. °रुक्च दा° ९ ग. सुखी ।

व्रणपूतिपूयजुष्टं नखविवरं मङ्क्षु रोपयत्यभया।
नानाविधैः किमेतैरास्फोतारविकुरण्टकक्षीरैः ॥ ७ ॥
सकुष्ठं जीरकं तोयैः पिष्ट्वा लेपेन नाशयेत्।
पुत्रजीवस्य वा मज्जां तोयैः पिष्ट्वा प्रलेपयेत् ॥ ८ ॥
शिग्रुमूलं निशातोयैः कक्षाग्रन्थिहरं लिपेत्।
विषं पुनर्नवामूलं जललेपेन तं जयेत् ॥ ९ ॥
सर्वेषां स्तनरोगाणां रक्तमोक्षः प्रशस्यते।
पूयपक्वः स्तनो यः स्याल्लेपस्तस्यावपाटने ॥ १० ॥
एकवीरस्य मूलं तु अजामूत्रेण लेपयेत्।
तत्क्षणात्स्फुटते पक्वं शस्त्रैर्वा स्फोटयेद्भिषक् ॥ ११ ॥
यष्टीनिम्बहरिद्रा च निर्गुण्डीधातकीसमम्।
चूर्णं स्तनव्रणे देयं रोपणं कुरुते हितम् ॥ १२ ॥
मध्वाज्यैर्देवदारुं च पिष्ट्वा वर्तिं प्रलेपयेत्।
पूयपक्वे स्तने क्षिप्त्वा रोपणं कुरुते क्षणात् ॥ १३ ॥
लिङ्गव्याधौ लोहितं स्रावयित्वा पश्चाद्भोलं भक्षयेत्तस्य नुत्त्यै ॥ १४ ॥
उदुम्बरवटाश्वत्थसाम्रजम्बूत्वचः शृतम्।
जलैः क्वाथं च तेनैव क्षालयेल्लिङ्गपाकनुत् ॥ १५ ॥
कुमारीरससंपिष्टं जीरकं लेपयेद्भिषक्।
तेन दाहश्च पाकश्च शममाप्नोति निश्चितम् ॥ १६ ॥
महाशङ्खं जलैर्घृष्ट्वा तेन लिङ्गं प्रलेपयेत्।
घोण्टापूगं च वा तोयैः सारं वा खदिरोत्थितम्।
जलैः पिष्टं प्रलेपोऽयं लिङ्गरोगहरं पृथक् ॥ १७ ॥
सुगन्धकघृतैर्लेपः पक्वलिङ्गे सुखावहः।
निम्बखादिरमञ्जिष्ठाचूर्णं चापतनं जयेत् ॥ १८ ॥
यवचिञ्चारसैर्घृष्टं सैन्धवं रोपयेद्व्रणम्।
ग्रन्थिः कक्ष्यां च जघने शममाप्नोति नान्यथा ॥ १९ ॥
शिग्रुमूलं त्वचस्तोयैः पिष्ट्वा लेपेन तं जयेत्।
कुष्ठजीरकयोर्लेपस्तोयैर्ग्रन्थिप्रशान्तये ॥ २० ॥

---

१ घ. कसारैः। २ ग. °मूलनि°। ३ घ. पक्वश्चाद्भै°। ४ घ. व्रणं क्षिप्रं रो°। ५ घ. क्षिप्ता। ६ घ. श्चाद्भालं। ७ ग. शृतम्। ८ घ. जले घृष्ट्वा। ९ घ. °रोहकरं। १० घ. °लिङ्गसु°। ११ घ. वरीरसैश्च संघृष्टं। १२ घ. वा°। १३ च. °मूलत्व°।

अश्वत्थस्य त्वचो भस्म चूर्णेन सह मिश्रितम्।
नवनीतं द्वयोस्तुल्यं मर्द्यं तेन[1] विलेपनात् ॥ २१ ॥
आसन्ने[2] गुदपार्श्वे च कक्ष्यां च पिटिकां जयेत् ॥ २२ ॥
गोमूत्रे क्षालयेत्तां च लेपो बाकुचिबीजकैः।
कृत्वा कण्डूं निहन्त्याशु[3] चित्रकं वा गवां जलैः ॥
नरमूत्रेण सर्पाक्षीं पिष्ट्वा लेपेन तां जयेत् ॥ २३ ॥
लवङ्गजानां लवकं[4] कर्पूरं चणसंमितम्।
दरदं तोलमानं च सर्वं खल्वे विचूर्णयेत् ॥ २४ ॥
ब्रह्मवृक्षं कोकिलाक्षैः सर्वं यत्नेन मर्दयेत्।
यावत्कज्जलसंकाशं श्यामतां च तथैव च ॥ २५ ॥
चतुर्दशसमा कार्या पूडिका बन्धयेद्भिषक्।
रविवारे समादेया ह्यङ्गारे छगणोद्भवे ॥ २६ ॥
तां निक्षिप्याथ संगोप्य नासिकां विवृतां नयेत्।
मुखमाच्छाद्य श्वासेन यातायातेन ग्राहयेत् ॥ २७ ॥
वीटिकापूर्णवदनो द्विवारं कारयेत्सदा।
एवं सप्तदिनं कृत्वा पश्चात्स्नानादिकं चरेत् ॥ २८ ॥
पथ्यं निर्लवणं देयं जलं शीतं निषेवयेत्।
अनेन योगराजेन लिङ्गव्याधिः प्रशाम्यति ॥ २९ ॥ इति धूमः।
लेपयेत्काञ्चनीमूलं नरमूत्रेण पेषितम्।
कण्डुपामाः[5] शर्मं यान्ति सर्वाङ्गीणा[6] न संशयः ॥ ३० ॥
शाखोटस्य त्वचस्तोयैः पक्त्वा क्वाथं समाहरेत्।
पिबेद्गोमूत्रसंतुल्यं पामार्तः सुखमाप्नुयात् ॥ ३१ ॥
पादकण्डुहरं कुर्यान्नवनीतेन भक्षणम्[7]।
हयारिपत्रधूपेन स्वेदनं तदनन्तरम् ॥ ३२ ॥
पाददाहहर[8]क्वाथे तिला[9]द्विगुणबाकुची।
चूर्णिता मधुसर्पिर्भ्यां द्विकर्षं तत्प्रशान्तये ॥ ३३ ॥
पादकण्डूविनोदार्थं नवनीतेन मृक्षणम्[10]।
पथ्या[11] घृतेन संचूर्ण्य मर्दनं करपादयोः ॥ ३४ ॥

---

१ घ. तेनावलेपयेत्। २ घ. °सन्ने गु°। ३ घ. °शु श्वित्रं वाऽथ ग°। ४ ग. नवकं। ५ घ. क. कण्डूपामा शमं याति सर्वाङ्गा नात्र संशयः। ६ ट. °र्वाङ्गानामसं°। ७ घ. मृक्षणम्। ८ च. °हरं का°। ९ झ. तिलद्विगु°। १० ग. भक्षणम्। घ. मृक्षणे। ११ पथ्यं घृतस्य सारेण म°।

स्फुटितत्वनिवृत्त्यर्थं यवचिञ्चार्धपक्वया ।
शिलादिना कृते भेदे षड्गुणं च द्रवं क्षिपेत् ॥ ३५ ॥
गुडगुग्गुलुसिन्दूरमुशीरं गैरिकं मधु ।
मदनं घृतसंयुक्तं पादस्फोटे प्रलेपयेत् ।
सप्ताहात्स्फुटितौ पादौ स्यातां पङ्कजसंनिभौ ॥ ३६ ॥
मदनं सिक्थकं तुल्यं सामुद्रं लवणं तथा ॥ ३७ ॥
महिषीनवनीतेन [1]युतं प्रालेपनाद्भवेत् ।
सप्ताहात्स्फुटितौ पादौ जायेते कमलोपमौ ॥ ३८ ॥
[2]रसं गन्धं समं [3]मर्द्यं द्वाभ्यां तुल्यं च काञ्चनम् ।
दिनैकं चित्रकद्रावैः पिष्ट्वा लेपं [4]प्रलेपयेत् ॥ ३९ ॥
[5]कण्डुगण्डं खुडं हन्ति गुल्फयोरन्तरुत्थितम् ।
धात्रीफल[6]रसक्षीरैः [7]पानं स्यात्स्व[8]रभङ्गनुत् ॥ ४० ॥
देवदारुकणाव्योषश[9]ताह्वापत्रकं शिला ।
वचासैन्धवशिग्रूत्थमूलं पेष्यं समं समम् ॥ ४१ ॥
कर्षैकं मधुसर्पिर्भ्यां मासमात्रं सदा लिहेत् ।
मासैकं कर्षकर्षं च किंनरैः सह गीयते ॥ ४२ ॥
सैन्धवेन्द्रयवं रात्रौ मरिचं चोष्णवारिणा ।
पाययेत्कर्षमात्रं तु गलदाहप्रशान्तये ॥ ४३ ॥
करञ्जबीजमज्जां तु द्विनिष्कां चोष्णवारिणा ।
गलदाहहरं खादेत्पथ्या वा क्षौद्रसंयुता ॥ ४४ ॥
बला[10]नागबलाकुष्ठत्वचां चूर्णं च लेपयेत् ।
महिषीनवनीतेन स्तनौ पीनौ स्थिरौ भवेत् ॥ ४५ ॥
श्यामानिशाब[11]लाराजीलवणं क्वाथयेत्समम् ।
तोयैरष्टगुणैरेव पादशेषं समाहरेत् ॥ ४६ ॥
तिलतैलं क्वाथपादं तैलार्धं माहिषं घृतम् ।
स्नेहशेषं पचेत्तेन [12]नस्येन मासमात्रके ॥ ४७ ॥
[13]बालादिवृद्धनारीणां यौवनं कुरुतेऽद्भुतम् ॥ ४८ ॥

---

१ ज. °तप्ते ले°। २ घ. रसग°। ३ घ. कार्यं। ४ घ. प्रकारये°। ५ घ. कडौ गण्डखुरं हन्ति गुल्फयोरास्थितं ध्रुवम्। ६ ग. °रसः क्षी°। ७ ग. पाने। ८ घ. °रभेदनु°। ९ घ. °लाशतब°। १० घ. °कुष्ठं वचा चू°। ११ घ. °लालाजाल°। १२ घ. °नस्यं तेन समाचरेत् ॥ ४७॥ १३ घ. बला°।

कु[1]रु[2]बत्वक्ककषायेण त[3]त्कल्केन च साधितम् ।
तैलं तु वनितानां च कुचकुम्भव्रणापहम् ॥ ४९ ॥
शुल्बचूर्णं रसे [4]जीर्णं मदयन्ती पुनर्नवा ।
मेषशृङ्गीरसश्चैता व्रणशोषणरोपणम् ॥ ५० ॥
कुम्भीपुष्पाणि चाऽऽदाय गिलयेद्रविवासरे ।
यावत्संख्यानि पुष्पाणि तावद्वर्षाणि स्नायुकम् ॥
न निर्याति न संदेहः सिद्धयोग उदाहृतः ॥ ५१ ॥
येन भस्म भवन्त्याशु भक्षितान्यखिलान्यपि ।
वस्तूनि स क्षुधारूपो व्याधिर्भस्मक उच्यते ॥ ५२ ॥
[5]कफोत्तरा रक्तचलाश्रिता मलाः पादेष्वधःकायमुपाश्रिताः शनैः ।
कुर्वन्ति शोफं घनमाहश्लीपदं तत्कर्णनासादिषु पादवद्भवेत् ॥ ५३ ॥
ता[6]म्रचूर्णसमं सूतं शुद्धं मर्द्यं दिनत्रयम् ।
नागवल्लीमेघनादपाठापौनर्नवद्रवैः ॥ ५४ ॥
गोमूत्रे मर्दयेद्गाढं चक्रयन्त्रे दिनं पचेत् ।
[7]मासिकं[8] भक्षयेत्क्षौद्रैः श्लीपदी च पिबेदनु ॥ ५५ ॥
खादिरं शल्लकीकाष्ठं क्षौद्रं चाशनकाष्ठकम् ।
गवां मूत्रैः समं पिष्ट्वा पिबेच्छ्लीपदनाशनम् ॥ ५६ ॥
गुडूचीकटुकाशुण्ठीदेवदारुविडङ्गकम् ।
पिष्ट्वा गोमूत्रसंयुक्तो लेपः श्लीपदनाशनः ॥ ५७ ॥
ब्राह्मीपलाशयोः क्काथे रीतिपत्रं विनिक्षिपेत् ।
दिनद्वयं ततस्ता[9]नि वपुस्तेनैव घर्षयेत् ॥ ५८ ॥
लघुभाण्डे समादाय चूर्णं कूष्माण्डवारिणा ।
मह्यत्रिवारं कुर्वीत पुटं करभवारिणा ॥ ५९ ॥
मर्दयित्वा पुटं दद्यादजामूत्रेण भावयेत् ।
ततोऽप्येकं पुटं दत्वा तिस्रस्त्रिकटुभावनाः ॥ ६० ॥
अमर्यजाविड[10]ङ्गाम्भिगोजलैरथ भावितः ।
प्रतिमेषः सुसंसिद्धो रसो[11] वल्मीकमृद्रसैः ॥ ६१ ॥
वल्लत्रयमितो देयो वल्मीके तस्य मृत्स्नया ।
वल्मीकं संविलिप्यैतत्क्रमिसंघप्रशान्तये ॥ ६२ ॥

---

१ कुरबस्य क°। (साधीयान्)। २ ज. °रुत्व°। ३ घ. तत्काळेन । ४ घ. जीर्णे । ५ घ. कम्पोत्त°। ६ ग. °म्रपर्ण°। घ. °म्रवर्ण स°। ७ घ. मा‍षैकं । ८ घ. °कं लेहयेत्क्षौद्रे श्ली°। ९ क.° नि पुनस्ते°। १० घ. °ङ्गानि गो°। ११ ग. °सो वृद्धिक°।

रसैरुत्तरवारुण्याः सभ्रमं हन्ति मारुतम् ।
वासानीरानुपानेन जयेत्कफसमीरणम् ॥ ६३ ॥
विडङ्गं नागरं क्षारं काललोहरजो मधु ।
यवामलकचूर्णं च योगोऽतिस्थौल्यदोषजित् ॥ ६४ ॥
वरासन[1]नाम्रयः पत्रै[2]निशाक्वाथं मधुप्लुतम् ।
द्विरदस्थूलदेहोऽपि पिबे[3]न्मासात्कृशो भवेत् ॥ ६५ ॥
विप[4]रीते रते प्राप्ते लिङ्गे दाहः प्रजायते ।
कार्श्यं च सर्वगात्रेषु तत्प्रतीकार उच्यते ॥ ६६ ॥
प्रत्य[5]ग्रस्तन्निबध्यैव लिङ्गे[6] चोषणमाचरेत् ।
क्षणे त्वेतस्य संजाते क्षालयेच्छीतलाम्बुना ॥ ६७ ॥
कोलनिर्यासमादाय पाययेत्तं सशर्करम् ।
शाल्मलीदूर्वयोर्मूलीरसपायसमाशयेत्[7] ॥ ६८ ॥
पुरुषव्याधिमुक्त्यर्थं रक्तस्रावो हि पृष्ठके ।
भक्षणं बोलबद्धस्य मत्स्याक्षीमूललेपनम् ॥ ६९ ॥
जानु[8]रुग्ग्रन्थिमुक्त्यर्थं यवचिञ्चाः प्रलेपयेत् ।
सामुद्रकाञ्जिकाभ्यां हि लेपं विधेहि सत्वरम् ॥ ७० ॥
सर्वरक्तविकारेषु बोलबद्धस्य सेवनम् ।
मेषीक्षी[9]रं द्रवं चूर्णं कटुतु[10]म्बे विनिक्षिपेत् ॥ ७१ ॥
[11]प्रलेपनेन सातत्यादस्थिभङ्गः प्रशाम्यति ।
स्नायुकस्यापमुक्त्यर्थं मत्स्यशारिप्रवेशनम् ॥ ७२ ॥
दैवेनातिरते स्त्रीणां विषमोत्कटकासनात् ।
जायन्ते व्यापदो योनौ दुष्टबीजात्[12]वात्मतः ॥ ७३ ॥
पिष्टीतारार्कयोरेका तैले गन्धस्य पाचिता ।
सेविता मधुसर्पिर्भ्यां गुह्यरोगान्नियच्छति ॥ ७४ ॥
[13]निम्बुद्रावैः सुसंपिष्टं निम्बैरण्डस्य बीजकम् ।
योनिशूलहरं क्षिप्त्वा गोलकं योनिमध्यगम् ॥ ७५ ॥
सोमराजीदेवदारुनिम्बदारुनिशास[14]नम् ।
तक्रपिष्टं प्रलेपोऽयं योन्याम[15]यहरो भवेत् ॥ ७६ ॥

---

१ घ. °सन्नाम्र° । २ घ. °त्रवराक्वा° । ३ घ. पिबन्मा° । ४ घ. °रीतरतप्राप्ते लिङ्गदा° । ५ च. °त्यग्रस्त° । ६ घ. लिङ्गचो° । ७ च. °मानयेत् । ८ च. जातरु° । ९ घ. °क्षीरद्र° । १० घ. °तुम्ब्या वि° । ११ घ. °लेपात्तेन सांतत्या° । १२ °वान्मलम् ॥७२॥ च. वान्मतः । १३ च. निम्बद्रा° । १४ ग. °समम् । १५ घ. °यभयं हरेत् ।

लशुनं गृहधूमं तु विशाला सविडङ्गकम् ।
कण्टकारीफलं तोयैः[2] पिष्ट्वा योनौ[1] प्रलेपयेत् ॥ ७७ ॥
कृमिशूलहरं ख्यातं सप्ताहान्नात्र संशयः ।
मञ्जिष्ठा तगरं कुष्ठं त्रिफला शर्करा वचा ॥ ७८ ॥
[3]मेदा यष्टी हरिद्रे द्वे दीप्यकं कटुरोहिणी ।
पयस्या हिङ्गु काकोली वाजिगन्धा शतावरी ॥ ७९ ॥
प्रत्येकं चूर्णयेत्कर्षं द्वात्रिंशत्पलकं घृतम् ।
घृताच्चतुर्गुणं क्षीरं घृतशेषं विपाचयेत् ॥ ८० ॥
योनिशूले शुक्रदोषे गर्भिणीनां च पाययेत् ।
त्रियोनिरसगुञ्जैकं त्रिनिष्कमभयागुडम् ॥ ८१ ॥
पुष्प[4]रोधहरं खादेत्पलैकं तिलजीवनम् ।
ततः शीतोदकं क्षिप्त्वा पुष्पं स्रवति तत्क्षणात् ॥ ८२ ॥
लाङ्गलीकन्दचूर्णं[5] वा मूलं वाऽप्यपामार्गजम् ।
इन्द्रवारुणिमूलं वा योनिस्थं पुष्परोधनुत्[6] ॥ ८३ ॥
तिलमूलकषायं तु ब्रह्मदण्डीयमूलकम् ।
यष्टीत्रिकटुकं चूर्णं क्वाथयुक्तं च पाययेत् ॥ ८४ ॥
पुष्परोधे रक्तगुल्मे स्त्रीणां सद्यः प्रशस्यते ॥ ८५ ॥
चणकानां रसं चैव श्रृतं क्षीरं घृतेन वा ।
शर्करामधुसंयुक्तं रक्तदोषहरं पिबेत् ॥ ८६ ॥
तिलक्वाथो गुडं[7] व्योषं[8] तिलभार्ङ्गीयुतं पिबेत् ।
क्वाथं रक्तभवे गुल्मे नष्टपुष्पेऽथ पाययेत्[9] ॥ ८७ ॥
ग्राह्यं कृष्णचतुर्दश्यां धत्तूरस्य तु मूलकम् ।
कटीं बध्वा रमेत्स्वेच्छं[10] न गर्भः संभवेत्क्वचित् ॥ ८८ ॥
मुक्ते न लभते गर्भं पुरा नागार्जुनोदितम् ।
तन्मूलचूर्णं योनिस्थं न गर्भः संभवेत्क्वचित् ॥ ८९ ॥
ऋतौ जाते क्षिपेद्योनौ तिलतैलाक्तसैन्धवम् ।
[11]द्रवते तत्क्षणादेव तच्छुक्रं पुष्पितामपि ॥ ९० ॥
देवालये तु त[12]च्चूर्णं कर्षैकं तोयपेषितम् ।
पिबेद्गर्भवती नारी गर्भः स्रवति तत्क्षणात् ॥ ९१ ॥

---

१ घ. योनिं । २ घ. यवाः ॥ ७७ ॥ ३ घ. गोदा । ४ घ. °रोगह° । ५ घ. °र्णं च समूलं वाप° । ६ ट. °निस्थपु° । ७ घ. गुडव्यो° । ८ घ. व्योम । ९ घ. नष्टे पुष्पे च पा° । १० घ. रमेत्स्वस्थं । ११ घ. द्रवेत । ज. द्रवेत्तत्तत्क्ष° । १२ च. यच्चूर्णं ।

काण्डमेरण्डपत्रस्य योनावष्टाङ्गुलं क्षिपेत् ।
चतुर्मासोद्भवो गर्भः स्रवत्येव हि तत्क्षणात् ॥ ९२ ॥
निर्गुण्डीद्रवसंपिष्टं चित्रमूलं मधुप्लुतम् ।
कर्षं भुक्त्वा पतत्याशु गर्भो रण्डाकुलोद्भवः ॥ ९३ ॥
मूलं तु शरपुङ्खायास्तन्दुलाम्बुप्रपेषितम् ।
पाययेत्कर्षमात्रं तदतिरक्तप्रशान्तये ॥ ९४ ॥
स्त्रीणां रक्ते पूयके वा प्रवृत्ते सैसं चूर्णं पेटकारीभवं च ।
दद्यात्प्रातर्मल्लखण्डेन सार्धं दत्वा सूतं त्वर्कमूर्तिं घृतेन ॥ ९५ ॥
योनौ शूले निम्बवातारिपिष्टिं कुर्याद्वा नागकर्णोत्थमूलैः ।
तैलं क्वाथं व्योषयष्टिप्रयुक्तं दद्यात्स्त्रीणां रक्तदोषापनुत्त्यै ॥ ९६ ॥
पाठा जम्ब्वाम्रयोरस्थि शिलोद्भेदं रसाञ्जनम् ।
अम्बष्ठाशाल्मलीं पिष्ट्वा समङ्गावत्सकत्वचम् ॥ ९७ ॥
वाह्लीकबिल्वातिविषालोध्रतोयदगैरिकम् ।
शुण्ठीमधुकमार्द्वीकं रक्तचन्दनकट्फलम् ॥ ९८ ॥
कट्वङ्गवत्सकानन्ताधातकीमधुकाञ्जनम् ।
पुष्ये गृहीत्वा संचूर्ण्य सक्षौद्रं तन्दुलाम्बुना ॥ ९९ ॥
पिबेदर्शःस्रवतीसारे रक्तं यश्चोपवेशयेत् ।
दोषा गन्तुकृता ये च बालानां तांश्च नाशयेत् ॥ १०० ॥
योनिदोषं रजोदोषं श्यावं श्वेतारुणं विषम् ।
चूर्णं पुष्यानुगं नाम हितमात्रेयपूजितम् ॥ १०१ ॥
यत्कन्दमूलादिषु जायते तत्तो विषाद्विषं स्थावरमुग्रवीर्यम् ।
सर्पादिकं जङ्गममुच्यतेतद्द्रवैरनेकैः कृतकं च यत्तत् ॥ १०२ ॥
घननादजटा हन्ति विषं स्थावरजङ्गमम् ।
ज्येष्ठाम्बुसूतराजेन पीता भीरुशिफा तथा ॥ १०३ ॥
सुरभिशकृद्रसभावितशशिराजीचूर्णसंयुतः सूतः ।
स्थावरजङ्गमकृत्रिमविषजिद्गुञ्जामितोऽभ्यस्तः ॥ १०४ ॥
अभ्रकं तालकं तार्प्यं शिलाजित्कुनटीरसः ।
देवदालीरसो व्योषं लेपनाद्विषनाशनम् ॥ १०५ ॥

---

१ घ. °तिरिक्त°। २ घ. °मूतिर्घृं°। ३ ट. शिलाभेदर°। ४ घ. शुण्डीमधूकमृद्वीका र°। ५ घ. यश्चोप°। ६ च. श्यावश्वेतारुणाशितम् । ७ घ. पुष्पानु°। ८ घ. °नागज°। ९ घ. °तशिशिराजीर्ण°। १० ग. °रसं व्यो°। च. °रसव्यो°। ११ घ. °षनाशनः ॥ १०४ ॥

रसेन चक्रमर्दस्य पुटितः पुटपाचितः ।
एरण्डस्नेहसंयुक्तः सूतोद्भूताविकारजित् ॥ १०६ ॥
जलेन नागदमनीमूलं नस्ये प्रयोजितम् ।
महासर्पस्य विषमं विषं नश्यति तत्क्षणात् ॥ १०७ ॥
जलपिष्टं शिरीषस्य पञ्चाङ्गं यः पिबेन्नरः ।
स नागराजदष्टोऽपि मानुषो निर्विषो भवेत् ॥ १०८ ॥
अश्वगन्धाभवं कन्दं वन्ध्यां वाऽप्यथ यः पिबेत् ।
तस्य देहान्तरं याति विषं स्थावरजङ्गमम् ॥ १०९ ॥

व्योषैरण्डस्रावपक्वं तु तैलं लेपायोक्तं वृश्चिकानां सदैव ।
सूतं गन्धं टङ्कणं हेमयुक्तं घर्षेद्यामं मेघनादीरसेन ॥ ११० ॥
गोलं कृत्वा कान्तपाषाणमूषा मध्येक्षिप्त्वा भूधरे तं पुटेत ।
पश्चाद्धर्षेन्मेघनादीरसेन सूतः सिद्धस्त्वेष तार्क्ष्यो विषारिः ॥ १११ ॥
तार्क्ष्यं वन्ध्या भक्षयेद्रक्तिमानं सूतं तस्माद्यान्ति नाशं विषाणि ॥ ११२ ॥

ससिन्दुवारतगरं मृतं संजीवनं विषम् ।
शिरीषकुसुमं पत्रं विषमाखुविषापहम् ॥ ११३ ॥
देवदारु नतं मांसी द्राँमिली बाकुची विषम् ।
कुष्ठं च पानलेपाभ्यां समस्तविषनाशनम् ॥ ११४ ॥
सर्पादिविषनाशाय टङ्कणस्य रजोऽम्भसा ।
पानाभ्यञ्जननस्याद्यैरतिगुह्योपदंशिना ॥ ११५ ॥
मनोह्वा सैन्धवं हिङ्गु मालतीपल्लवानि च ।
गोशकृद्रसपिष्टानि गुलिका वृश्चिकापहा ॥ ११६ ॥
अर्कपयसा दिवा ब्राह्मतरोर्भावितैर्मुहुर्बीजैः ।
गुलिका कृता प्रयत्नाद्वृश्चिकविषमाशु नाशयति ॥ ११७ ॥

कनकसारसुतीक्ष्णनिदिग्धिका हपुंषासिद्धकलांशनिषेवणात् ।
जयति साधु युवाधनकाङ्क्षया गणिकया परिदत्तगरौषधम् ॥ ११८ ॥

पुराणवृक्षाम्लयुतं कटुत्रयं नरेण भुक्तं त्वशनावसाने ।
असारवृत्ताबलयाऽर्थकाङ्क्षया सहान्नदत्तं विषमाशु नाशयेत् ॥११९॥३२७४॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रससरत्नसमुच्चये क्षुद्ररोगगुह्यरोगस्थावरजङ्गमविषप्रतीकारो नाम पञ्चविंशोऽध्यायः ॥ २५ ॥

---

१ च. °तो भूतविकारनुत् । २ च. °गदवनीमू° । ३ ग. पचेत । ४ घ. वन्ध्यां । ५ ज. सिन्दुवारं च तगरं मृतसं° । ६ घ. लवली । ७ घ. रजो भजेत् । ८ ग. °सा ब्रह्म । ९ घ. °पुषसि° । १० घ. °वृक्षाम्बु यु° ।

अथ षड्विंशोऽध्यायः ।

[ अथ जरारोगचिकित्सनम् । ]

दीर्घमायुः स्मृतिं मेधामारोग्यं तरुणं वयः ।
प्रभावर्णस्वरौदार्यं देहेन्द्रियबलोदयम् ॥ १ ॥
वाक्सिद्धिं वृषतां कान्तिमवाप्नोति रसायनात् ।
पन्थाः शीतं कदन्नं च वयोवृद्धाश्च योषितः ॥ २ ॥
मनसः प्रातिकूल्यं च जरायाः पञ्चहेतवः ।
हलिनीरससंपिष्टौ तुल्यांशौ रसगन्धकौ ॥ ३ ॥
हस्तिपर्णीलवलिकामत्स्याक्षीकल्कवेष्टितौ ।
त्रिः पक्वौ मूकमूषायां सव्योषौ वार्धकापहौ ॥ ४ ॥
आवर्तितरसपलं क्षिप्त्वा द्विपलगन्धके ।
आर्द्रकद्रवमुष्टीनां विंशत्या मर्दितं पचेत् ॥ ५ ॥
मृद्रूढताम्रमूषायां तं गुञ्जाप्रमितं रसम् ।
ससर्पिर्नागरं भुक्त्वा तप्ताम्बुप्रह्रेतं पिबेत् ॥ ६ ॥
रसोऽयमुदयादित्यः स्याज्जरारजनीहरः ।
मूषां तिन्दुकविस्तारामायामे षोडशाङ्गुलाम् ॥ ७ ॥
भाण्डपादस्थपादांशं वालुकाभिः परिक्षिपेत् ।
तस्यां निवेश्य द्विगुणं गन्धगर्भगतं रसम् ॥ ८ ॥
याममात्रं पचेच्चुल्ल्यां क्षिपेद्गन्धस्य तूद्गमे ।
वायसीनागिनीमत्तमेघनादरसं क्रमात् ॥ ९ ॥
स रसः सर्वरोगघ्नो वलीपलितजिद्भवेत् ।
रसगन्धकमध्वाज्यशिलाजत्वम्लवेतसम् ॥ १० ॥
द्विमाषप्रमितं वेगान्मासमात्राज्जरां जयेत् ।
विष्णुक्रान्तारुणागस्तिक्षीरिणीतन्दुलीयकैः ॥ ११ ॥
रसगन्धकयोः पिष्टी स्त्रीस्तन्येन च मर्दिता ।
यवास्तिलाघृतक्षौद्रमेषामुद्वर्तनं जयेत् ॥
कार्श्यं जरां च षण्मासाद्विधत्ते वृद्धिमायुषः ॥ १२ ॥

---

१ घ. °तिते र°। २ घ. °सृतिं। ३ घ. भाण्डबाह्यस्थपादांशां वा°। ४ घ. प्रपूरयेत्। ५ घ. °गुणग°। ६ घ. °मत्रयं प°। ७ घ. °जित्परम्।

शिलाजतुक्षौद्रविडङ्गसर्पिर्लोहाभयापारदताप्यभक्षः ।
आपूर्यते दुर्बलदेहधातुस्त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ १३ ॥
हेम धात्रीफलं क्षौद्रं गोलितं रसमर्दितम् ।
लिहन्ननु पिबेत्क्षीरं दृष्टरिष्टोऽपि जीवति ॥ १४ ॥
मधुमागधिकाविडङ्गसारत्रिफलाहेमघृतं सितां च खादन् ।
जरयानवलीढदेहकान्तिः समधातुश्च समाः शतं च जीवेत्॥१५॥
ज्योतिष्मतीनामलता पीता पीतफलोज्वला ।
आषाढे पूर्वपक्षे स्याद्गृहीत्वा बीजमुत्तमम् ॥ १६ ॥
आहरेत्तिलवत्तैलं मुष्टिना चापि तत्त्यजेत् ।
क्षीरतुल्यं चतुर्थांशमाक्षिकं तैलशेषितम् ॥ १७ ॥
ततस्तत्कोलकर्पूरत्वग्जातीफलमिश्रितम् ।
स्निग्धभाण्डगतं धान्येष्वनुगुप्तं निधापयेत् ॥ १८ ॥
पिबेत्सूर्योदये तैलात्पलं याति विसंज्ञताम् ।
ततः संज्ञां शनैर्लब्ध्वा ततः क्रन्दति रोदिति ॥ १९ ॥
एवं मासे श्रुतिधरः परस्मिन्सूर्यसंनिभः ।
तृतीये पूज्यते देवैश्चतुर्थे नैव दृश्यते ॥ २० ॥
खेचरः पञ्चमे षष्ठे सिद्धैर्मिलति सप्तमे ।
विष्णोः समदिनं जीवेज्जीवन्मुक्तोऽष्टमे भवेत् ॥ २१ ॥
भूमावरत्निमात्रायां ताम्रं तैलेन पूरयेत् ॥ २२ ॥
षण्मासात्पातयेदूर्ध्वं मृदुना तुषवह्निना ।
पीत्वा माषादिनिष्कान्तं तत्त्रिवर्षान्महाकविः ॥ २३ ॥
तैलप्रस्थं घृतप्रस्थं चतुष्प्रस्थं पयः पचेत् ।
द्विप्रस्थशेषं तत्पीत्वा मासं त्रिपुरुषायुषः ॥ २४ ॥
तैलं पिबेद्घृतक्षौद्रक्षीरान्यतममिश्रितम् ।
कुर्याच्चतैलमध्वाज्यैर्नस्यं क्षीरघृताशिनः ॥
भुक्त्वा शतायुः षण्मासात्सहस्रायुर्भवेन्नरः ॥ २५ ॥
मधुकेन तुंगाक्षीरी पिप्पली क्षौद्रसर्पिषा ।
विडङ्गपिप्पलीभ्यां च त्रिफला लवणेन च ॥ २६ ॥

---

१ ग. °भक्ष्यः । २ घ. गायत्रीरसभावित । ३ ग. °तं च नित्यखा° । ४ ग. तत्पचेत् । ५ ग. °र्थांशं मा° । ६ ग. स्विन्नभा° । ७ घ. यावद्दिसं° । ८ घ. सदा दिने जी° । च. सप्तदि° । ९ घ. पिब घृत° । १० ग. °ताशनः । ११ च. तु गोक्षीरैः पिप्पल्या क्षौ° ।

संवत्सरप्रयोगेण स्मृतिमेधाबलप्रदा ।
भवत्यायुःप्रदा पुंसां जरारोगनिबर्हणी ॥ २७ ॥
खदिरासनभृङ्गसातलाक्रमिशत्रूदकभाविता मुहुः ।
गुडमाक्षिकसर्पिरन्विता त्रिफला हन्ति जरां च वत्सरात् ॥२८॥
त्रिफलामसनोदकेन पिष्ट्वा रजनीपर्युषिता[1]मयःकपाले ।
मधुरां[2] मधुना लिहन्निहनस्ति स्थविमानं जरसं गदांश्च सर्वान् ॥२९॥
कान्ताभ्रकशिलाधातुविषसूतकमाक्षिकम् ।
शीलितं मधुसर्पिर्भ्यां व्याधिवार्धैक[3]मृत्युजित् ॥ ३० ॥
गन्धं लोहं भस्म मध्वाज्ययुक्तं[4] सेव्यं वर्षं[5] वारिणा त्रैफलेन ।
शुभ्रे केशे कालिमा दिव्यदृष्टिः पुष्टिर्वीर्यं जायते दीर्घमायुः ॥३१॥
नीलज्योतिः कान्तचूर्णं रुदन्तीधात्रीपत्रैर्वारिणा त्रैफलेन ।
मध्वाज्याभ्यां वत्सरार्धप्रयोगात्कुष्ठं शुभ्रं रोगजातं निहन्ति ॥३२॥
देहे दार्ढ्यं दिव्यदृष्टिः सुपुष्टिर्वीर्यं शौर्यं जायते दीर्घमायुः ॥ ३३ ॥
ज्योतिष्मत्यास्तैलमाज्यं सगन्धं गुञ्जावृद्ध्या सेवये[6]न्मासमात्रम् ।
यावच्च स्याद्यस्तु सः प्राप्यमूर्तिर्मेधायुक्तो दिव्यदृष्टिर्नियक्ष्मा ॥ ३४ ॥
कान्ताभ्रत्रिफलाविडङ्गरजनीताप्या[7]ब्ददेवद्रुम-
व्योषैर्लाङ्घ्रि[8]पुनर्नवा[9]द्रिगिरिजाङ्कोलैः समं गुग्गुलुम् ।
पिष्ट्वा भृङ्गजलेन सूक्ष्मगुलिकां खादेद्यथासात्म्यतो
मेदःश्लेष्मसमीरणोल्बणगदेष्वन्येषु वा पूरुषः ॥ ३५ ॥
कान्तं तुल्याभ्रसत्त्वं चरणपरिमितं हेमतस्तुल्यमर्कं[10]
वैक्रान्तं ताप्य[11]रूप्यं क्रिमिहरकटुकैस्तुल्यभागैः[12] समेतम् ।
लीढं [13]देवद्रुतैलैः प्रविशति[14] नृणां देहसिद्धिः समृद्धा
पथ्यं कल्पोक्त[15]भक्तं हरति च स कलान्रोगपूगाञ्जवेन ॥३६॥
तदेतत्सर्वरोगघ्नं रम्यं कान्तरसायनम् ।
स्थैर्यं[16] वृष्यं सुपुत्रीयं मङ्गल्यं[17] दीपनं परम् ॥ ३७ ॥
रात्रौ कान्तशरावके *सुचणका भिन्ना जलैः स्वादुभिः
प्रातर्मुष्टिमिताः खलु प्रतिदिनं षण्मासमासेविताः ।
हन्युः पित्तकफामयान्बहुविधं कुष्ठं प्रमेहांस्तथा
पाण्डुं यक्ष्मगदं च कामलगदं पथ्यं च तक्रं तथा ॥ ३८ ॥

---

* सुचणका इति पाठो मयैव तर्कितः । यतः सर्वेष्वपि पुस्तकेषु किंचिदपि न ज्ञायतेऽत्र ।

---

१ घ. °षितं पयःप्रभाते । २ झ. °धुरान्मधुराली° । ३ घ. °धैक्यम्° । ४ घ. °क्तं सर्वं विषं वा° । ५ ज. वृष्यं । ६ घ. °येन्माषमा° । ७ घ. °प्याभ्रदे° । ८ घ. °लाग्निपु° । ९ घ. °नवाङ्घ्रिगि° । १० घ. °मर्कैः° । ११ घ. °प्यरुक्मं क्र° । १२ ग. °भागं स° । १३ ग. देवेन्द्रतुल्यैर्विरचयति नृणां देहसिद्धिं समृद्धां प° । १४ घ. °विचरति । १५ ग. °क्तभुक्तं । १६ घ. सेव्यं । १७ घ. माङ्गल्यं ।

त्रिफलामस्तुसयुक्तं कान्तं सर्वरसायनम् ॥ ३९ ॥
एतत्स्यादपुनर्भवं हि भसितं कान्तस्य दिव्यामृतं
सम्यक्सिद्धरसायनं त्रिकटुकीवेल्लाज्यमध्वन्वितम् ।
हन्यान्निष्कमितं जरामरणजव्याधींश्च सत्पुत्रद-
मुक्तं श्रीगिरिशेन कालयवनोद्भूत्यै पुरा तत्पितुः ॥ ४० ॥
सिद्धमभ्रं समं कान्तं मर्दयेदार्द्रवारिणा ।
कलांशं हेमचूर्णस्य बीजपूररसे पुनः ॥ ४१ ॥
मर्दयेत्खल्वमध्यस्थं यावत्सप्तदिनावधि ।
अटरूषरसेनैव तथा मुण्डीरसेन च ॥ ४२ ॥
तालमूलीरसेनैव दशमूलीरसेन वा ।
तत्तद्रोगहरैः क्वाथैर्भावयेत्सप्तधा भिषक् ॥ ४३ ॥
त्रिफलाव्योषचूर्णं च मध्वाज्याभ्यां प्रयोजयेत् ।
पञ्चकर्म विशुद्धेन सेव्यमेतद्रसायनम् ॥ ४४ ॥
पाण्डुशोफोदरानाहग्रहणीशोषकासजित् ।
संततं सततं चैव पुराणं विषमं ज्वरम् ॥ ४५ ॥
निहन्यात्सर्वकुष्ठानि प्रमेहान्विंशतिं जयेत् ।
कान्ताभ्रकमिदं श्रेष्ठं रसायनमनुत्तमम् ॥ ४६ ॥
पालाशोलूखले तन्मलयुजिविमर्द्योघृतैराढकांशै-
र्मिश्रं ब्राह्मीरसैस्तैर्विधिवदिह पचेत्प्रस्थमात्रं गवाज्यम् ।
पाठाधात्रीहरिद्रात्रिवृदुपरचितेनापि कल्केन सिद्धं
यो वा कीटारिकृष्णासलवणजटिलाभिर्विलीढः सदा स्यात् ।
सौकर्यः सप्तरात्रान्मतिमतिविशदां पक्षतो माससात्रा-
च्चातुर्यं सत्कवित्वं वरसकलकलाभिज्ञतां प्राप्नुयात्सः ॥४७॥
ताप्याभ्रकत्रिकटुतुत्थशिलाजकान्तमङ्कोल्ललोहमलटङ्कणसैन्धवं च ।
भृङ्गीरसेन वटकांश्च मसूरमात्रा न्खादेद्रसायनवरं सकलामयघ्नम् ॥४८॥
लोहाभ्रौ बलिसूतहाटकपविस्तुल्यं कुमारीरसे
पक्वैरण्डदलैर्निबध्य सुदृढं सद्धान्यराशौ त्र्यहम् ।
क्षिप्त्वोद्धृत्य विचूर्णितं मधुवरायुक्तं यथासात्म्यतः
कृष्णात्रेयविनिर्मितं गदजराविध्वंसि सौख्यप्रदम् ॥ ४९ ॥

---

१ ग. °मधुसं । २ घ. °मभ्रस° । ३ घ. °येद्भूर्तवा° । ४ घ. अट° । ५ ग. °षजलैनै° । ६ ज. °न निलमे° । ७ ग. °राणविषमज्व° । ८ ट. °पचरिते° । ९ ग. °माषान् खा° । १० घ. °दरजावि° ।

आज्ञासिद्धमिदं रसायनवरं सर्वप्रमेहप्रणु-
स्कासं पञ्चविधं तथैव तनुगं पाण्डुं च हिक्कां व्रणम् ।
श्लेष्माणं पैवनं हलीमकमहाशूलं समन्दानलं
कण्डूकुष्ठविसर्पविद्रधिमुखापस्मारमुख्याञ्जयेत् ॥ ५० ॥
गोप्याद्गोप्यतरः सुखेन सुलभः सर्वत्र सिद्धो रसो
नाम्नाऽयं कमलाविलासमहतां वैद्यान्यशस्कारकः ॥ ५१ ॥

[ इति लक्ष्मीविलासः ।

**अथ लक्ष्मीविलसः**—वेदेन्दुनेत्राङ्गरसाङ्कभागाभूसूतगन्धोषणतिन्दुटङ्काः ।
धुत्तूरार्द्रगुञ्जाजवनीनवाभिर्भाव्यं त्रिशः स्वेद्यमदोऽर्कपत्रे ॥
लक्ष्मीविलासः स विशाललक्ष्मीं तनौ तनोति क्षयिणः प्रयोगैः ॥ ५२ ॥

**अथ नारिकेरपाकः**—वाराहीमुसलीकन्दकनकाहिखरस्तथा ।
वानरीफलसंयुक्तं चूर्णयित्वा पृथक्पृथक् ॥ ५३ ॥
कार्पासमज्जदुग्धेन उत्कलय्य यथाक्रमम् ।
भावनासप्तकं दत्वा सूर्यतापे विशोषयेत् ॥ ५४ ॥
नारिकेरं च संभृत्य द्वारं रुद्ध्वा यथाविधि ।
गोदुग्धेन तु तत्कल्पषोडशद्वयमात्रतः ॥ ५५ ॥
दर्व्या संवर्तितं भाण्डे यथा दार्ढ्यं न याति च ।
शीतं चूर्णीकृतं पक्वमाज्येन प्रपचेन्नरः ॥ ५६ ॥
जातीफलं लवङ्गं च एलाचूर्णं विनिक्षिपेत् ।
निष्पन्नं शाणमात्रं तु गृहीत्वा प्रपिबेत्पयः ॥ ५७ ॥
वातरोगान्प्रमेहांश्च बलक्षयमथोल्बणान् ।
सप्तरात्रप्रयोगेण प्रशमं यान्ति सर्वतः ॥ ५८ ॥
वृद्धोऽपि तरुणत्वं स प्रहर्षेति सदा नरः ।
सौगृताख्यं नारिकेलं गुरुणा परिकीर्तितम् ॥ ५९ ॥ ३३३३ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्न-
समुच्चये रसायनविधिर्नाम षड्विंशोऽध्यायः ॥ २६ ॥

---

१ घ. तनुजं । २ ग. धवनं । ३ घ. °कगदं हन्याच्च म° । ४ घ. °रमलं जये° । ५ घ. °भाव्य-त्रिशः । ६ घ. °मज्जां दु° । ७ ग. °विधिः । ८ ग. तु नुत्काथ्य षो° । ९ ग. °णान् । १० घ. याति ॥ ११ घ. °रुणोत्थस्य प्र° ।

अथ सप्तविंशोऽध्यायः ।

[ अथ वाजीकरणम् । ]

वाजीकरणमन्विच्छेत्सततं विषयी पुमान् ।
पुष्टिस्तुष्टिरपत्यं च गुणवत्तत्र [1]संस्थितम् ॥ १ ॥
वाजीवातिबलो येन यात्यप्रतिहतोऽङ्गनाः ।
तद्वाजीकरणं विद्धि देहस्योजस्करं परम् ॥ २ ॥
शुक्रं तु चिन्ताव्यायामव्याधिभिर्देहकर्षणात् ।
क्षयं गच्छत्यनशनात्स्त्रीणां चातिनिषेवणात् ॥ ३ ॥
तस्मात्प्रयोगान्वक्ष्यामि दुर्बलानां बलप्रदान् ।
सुखोपयोगाद्बालानां भूयश्च बलवर्धनात् ॥ ४ ॥
शुद्धकाये यथाशक्ति वृष्ययोगान्प्रयोजयेत् ॥ ५ ॥
कर्षं मधुकचूर्णस्य घृतक्षौद्रसमन्वितम् ।
पयोनुपानं यो लिह्यान्नित्यवेगः सदा भवेत् ॥ ६ ॥
कुलीरशृङ्ग्या यः कल्कमालोड्य पयसा पिबेत् ।
सिताघृतपयोन्नाशी स नारीषु वृषायते ॥ ७ ॥
स्वयंगुप्तेक्षुरकयोर्बीजचूर्णं सशर्करम् ।
धारोष्णेन नरः पीत्वा पयसा रासभायते ॥ ८ ॥
बस्ताण्डसिद्धे पयसि भावितानसकृत्तिलान् ।
यः खादेत्ससितान्गच्छेत्स स्त्रीशतमपूर्ववत् ॥ ९ ॥
गन्धकेन समं सूतं श्वेताङ्कोल्लजटारसैः ।
त्रिदिनं मर्दितं तेन रसेन गुटिकीकृतम् ॥ १० ॥
रक्तचित्रकवाराहीपत्रनिर्यासपेषिते ।
सद्योहताजमांसस्य पिण्डे न्यस्तं विपाचितम् ॥ ११ ॥
तप्ततैले मज्जयीत यावत्सिन्दूरसंनिभम् ।
भक्षयेन्मधुसर्पिर्भ्यां गोक्षीरं च पिबेदनु ॥ १२ ॥
[3]स्त्रियः सेवेत तत्त्यागे यतः स्फुटति लोचनम् ।
न क्रामति रसं चास्मिन्क्रान्ते [4]नै खलु मन्मथः ॥ १३ ॥
मुसलीकदलीकन्दवाजिगन्धाकसेरुकैः ।
मर्दितं हेमसूताभ्रं मूषास्थं पुटपाचितम् ॥ १४ ॥

---

१ झ. संस्थिते । २ घ. °नान् ॥ ४ ॥ ३ क. स्त्रियं । ४ क. स ।

शाल्मलीचूर्णसंयुक्तं वासराण्येकविंशतिः ।
भक्षयित्वा चतुर्माषं गव्यं क्षीरं पिबेदनु ॥ १५ ॥
सर्वाङ्गोद्वर्तनं कुर्यात्सयवैः शाल्मलीरसैः ।
अन्वहं मधुराहारः सहस्रं रमते स्त्रियः ॥ १६ ॥

**अथ कामदेवः**—हेमपादयुतः सूतो[1] मर्दितः शाल्मलीरसैः ।
कदलीकन्दनिर्यासे क्षीरेक्षुरसगोघृते ॥ १७ ॥
माक्षिके चासकृत्स्विन्नेशाल्मलीक्षीरगोक्षुरैः[2] ।
शर्करामलकद्राक्षामुसलीमाषमाक्षिकैः[3][4] ॥ १८ ॥
युक्तो रम्भाफलं[5] दत्वा कामदेव इति स्मृतः ।
सेवनादूर्ध्वलिङ्गो[6] वा द्रावयेद्वनिताशतम् ॥ १९ ॥

**अथ मदनसुन्दरः**—गन्धकेन रसः पिष्टः कह्लाररसमर्दितः ।
विपक्वो वालुकायन्त्रे वृष्यो मदनसुन्दरः ॥ २० ॥

**अथ पूर्णचन्द्रः**—कामदेव इह सोच्चटारसो रक्तपुष्पमुनिसारभावितः ।
पूर्णचन्द्र इति विश्रुतो रसः प्राणिनां चरमधातुपूरकः ॥ २१ ॥
रहस्यं कुसुमास्त्रस्य शृङ्गारस्याधिदैवतम् ।
कार्मणं सुदृशामूचे रसत्रयमिदं हरः[7] ॥ २२ ॥

**अथ मदनमुन्मदरसः**—माषार्धमात्रं हरजं विमर्द्य[8] रसेन मोचस्य रसेन तेन ।
त्रिःसप्तसंख्यानि दिनानि गन्धं[9] तंत्संमितं[10] गोघृतमध्यपक्वम् ॥२३॥
विभाव्य तेनैव विशोष्य[11] युञ्ज्यात्काचस्थयोर्नागलतादलेन ।
तयोर्विमर्द्याथ निषेव्य दुग्धं [12]पिबेन्निशायां कदलीफलं[13] तत् ॥२४॥
मदनं मदयेन्मदमुज्ज्वलयेत्प्रमदानिवहानतिविह्वलयेत् ।
सुरतैः सुखदैर्गत[14]विच्यवनैर्भवसारजुषामयमेव सुहृत् ॥ २५ ॥

**अथ कुसुमायुधः**—सूतस्य द्विपलं चतुष्पलमितो गन्धो मृतं[15] काञ्चनं
पादन्यूनपलं सुवर्णविमलाताप्यं[16] रसेनोन्मितम् ।
लोहं कान्तमलस्तथा सितघनं[17] कर्षोन्मितावेकशो
हन्तव्यं दरदेन लोहमखिलं चूर्णं ततो मर्दितम् ॥ २६ ॥
मूषायां[18] विगतावृतौ सिकतया यन्त्रे कृते स्थापये-
द्ब्राह्मीवारि दिनं निधेहि तदनु प्रत्येकमेकात्र्यहम् ।
बासाकुञ्जरशुण्ठिका[19]त्रिकटुकं [20]मेषी च निर्गुण्डिका
ताली कुञ्जर[21]शुण्डिका हुतवहस्तोयानि दत्वा पचेत् ॥२७॥

---

१ क. घृतः ।२ स्विन्नः शा°। ३ च. °लीमांससा°। ४ क. मासमा°।५ क. °फलद्रुत्या का°। ६ घ. °लिङ्गः स्याद्द्राव°।७ च.हरिः। ८ क. विमृद्य । ९ घ. गन्धत°। १० क. ताम्रान्वितं । ११ क. °ष्य गुञ्जा°। १२ क. पिबन्नि° ।१३ च. °लीपलं । १४ ट. °र्गतिवि°। १५ घ. मृतः । १६ घ. °ताप्या र°। १७ °नं घर्मोन्मि° घ. °नं धर्मोन्मि°। १८ मूषाया । १९ घ. °शुण्डिका°। २० घ. मेथी । २१ घ. °रमुण्डि°।

ततस्तं निखिलाम्भोभिर्विमर्द्य पुटयेल्लघु ।
निर्यासैः शाल्मलैर्ग्राह्यो वल्लत्रयमितो रसः ।
वलीपलितनाशाय त्रिवारं मधुराशनः ॥ २८ ॥
सुरतेषु सुलोचनाशतैर्गतवीर्यच्यवनैर्मनो यदि ।
तदमुं रसमाश्रयाश्रयं कुसुमास्त्रस्य चिराय धन्विनः ॥ २९ ॥
यदि सन्ति सहस्रशः स्त्रियश्चतुराश्लेषमनोहराः प्रसन्नाः ।
सुकवेरिव गुम्फना गिरां सुरसोऽनेन युवा रसेन भूयात् ॥ ३० ॥

अथ सूतेन्द्रः—मुक्ताफलं प्रवालं च सुवर्णं रौप्यमेव च ।
रसगन्धकतः सर्वं तोलैकैकं प्रकल्पयेत् ॥ ३१ ॥
रक्तोत्पलैः पत्ररसैर्मर्दयेत्तत्तलीकृते ।
मर्दयेत्तत्पुनर्दत्वा गन्धं माषचतुष्टयम् ॥ ३२ ॥
तन्मध्ये गन्धकं दत्वा मर्दयेत्तदनन्तरम् ।
भीक्ष्या काचघटी मध्ये संनिरुध्य प्रयत्नतः ॥ ३३ ॥
वालुकायन्त्रमध्यस्थां कृत्वा काचघटीं ततः ।
पाकस्तत्र तथा कार्यो भवेद्यामत्रयं यथा ॥ ३४ ॥
काचपात्रे समाकर्षेत्सिद्धं सूतं ततः परम् ।
भक्षयेद्रक्तिकाः पञ्च रोगैराक्रान्तयुद्गलः ॥ ३५ ॥
भोजनं पूर्वरोगोक्तं यत्नतः कारयेद्भिषक् ।
दुर्बलं वपुरत्यर्थं बलयुक्तं करोत्यसौ ॥ ३६ ॥
शुक्रवृद्धिं करोत्येष ध्वजभङ्गं च नाशयेत् ।
मासेनैकेन सूतेन्द्रो रोगनाशाय कल्पते ॥ ३७ ॥
शालयो मुद्गयुक्ताश्च गोधूमा भोजने हिताः ।
घृतं गव्यं तथा क्षीरं स्निग्धं पथ्यं प्रयोजयेत् ॥
पारापतस्य मांसं च तित्तिरेर्लावकस्य च ॥ ३८ ॥
शुद्धं सूतं वाजिगन्धां च यष्टीं पक्त्वा दुग्धं तच्च कार्श्ये ददीत ।
एवं चौप्यं वापयित्वा च दद्याद्द्राक्षां यष्टिं मागधीं वाजिगन्धाम् ॥३९॥
मध्वाज्याभ्यां शाल्मलीसत्त्वयुक्तां शम्बूकैर्वा भर्जितैर्वाप्यमिश्रैः॥ ४० ॥

१ घ. °तस्ताभिर्विं° । २ घ.ट. °र्गतिर्वा° । ३ घ. °वने मनो° । ४ क. गिरा । ५ झ. °गन्धं च तत्स- ने । ६ झ. °येत्पतत्लीकृतम् । ७ झ. तथा । ८ झ. °पात्रं स° । ९ झ. °जभागं च । १० झ. वाप्यं ।

**अथ मदनकामदेवः**—गोलं गन्धकसूतयोस्त्रिकटुकक्काथेन बध्वाऽथ भू-
कूष्माण्डान्तरवस्थितं विपिहितं तेनैव लिप्त्वोपरि ।
माषैर्व्यङ्गुलमाज्यपक्वमथ तत्कूष्माण्डमध्याद्धरे-
त्तच्चूर्णेन[1] च संमिते सुरकृताचूर्णस्य मुष्टिद्वयम् ॥ ४१ ॥
जयाशतावरीकृष्णा कपिकच्छूफलं तिलाः ।
प्रत्येकं[2] पलसंमाना यवाः पञ्चपलोन्मिताः ॥ ४२ ॥
तावन्मोचफलं द्वौ च यष्टी मुष्टिद्वयं शुभा ।
निक्षिप्य सप्त सप्तात्र भावनाः क्रमशश्चरेत् ॥ ४३ ॥
महाबलाबलानागबलाभिर्द्राक्षयाऽपि च ।
कृष्णाधात्रीक्षुभिश्चापि दन्तपात्रे निवेश्य च ॥ ४४ ॥
मत्स्यण्डिकायुतं वल्लद्वयमानं भजेन्निशि ।
अनुपानमिह प्रोक्तं धारोष्णं सुरभेः पयः ॥ ४५ ॥
दोषमार्तवजं हत्वा कुर्याद्वीर्य[3]प्रवर्धनम् ।
ध्वजोत्साहं तथा स्त्रीषु वाजीकरणमुत्तमम् ॥ ४६ ॥
अलं मलयवायुना कुमुदबान्धवेनाप्यलं
मधु[4]र्व्रतसखायिमेकलितपञ्चमाः केपिकाः ।
[5]अमुं भज विशङ्कितं रतिसरोजिनी भास्करं
मनोजपरिदैवतं मदनकामदेवं रसम् ॥ ४७ ॥

**अथ कामधेनुः**—हेमाभ्रसत्त्वकान्तार्काः प्रत्येकं पलमात्रकाः ।
एकत्र द्राविताः सर्वे कर्षभूनागसत्त्वकाः ॥ ४८ ॥
पलविंशतिसूतेन तैश्च [6]पिष्टिं प्रकल्पयेत् ।
शतधा पातयेत्सूतं [7]पिष्टीं कृत्वा पुनश्च तैः ॥ ४९ ॥
शिष्टं द्विपलिकं सूतं संन्यासाद्भस्मतां नयेत् ।
भस्मीभूते रसे तस्मिञ्शिष्टे [8]चैव पले ततः ॥ ५० ॥
वज्रं निष्कमितं चाभ्रसत्त्वं षट्पलिकं क्षिपेत् ।
द्विपलं गन्धकं शुद्धं द्विदिनं मर्दयेत्ततः ॥ ५१ ॥
तत्सर्वं लोहजे पात्रे क्षिप्त्वा च मृदुवह्निना ।
शाल्मलीमूलजं क्वाथं चत्वारिंशत्पलोन्मितम् ॥ ५२ ॥

---

१ क. °र्णे लवसं । २ क. °कं फल° । ३ क. °प्रसाधन° । ४ झ. °धुर्वतसखापि मे° । ५ झ. अतो । ६ क. पिष्टं । ७ क. पिष्टिं । ८ क. चैकप° ।

जारयेद्रसराजस्य दत्वा दत्वाऽल्पमल्पकम्।
स्वाङ्गशीतं रसं कृत्वा सुगाढं परिमर्दयेत् ॥ ५३ ॥
नीलिपातेन तत्क्वाथं रजोदग्धं प्रदापयेत्।
ततः करण्डके क्षिप्त्वा यत्नेन स्थापयेत्खलु ॥ ५४ ॥
सोऽयं गुञ्जामितघृतयुतः सेवितो हन्ति रोगां-
स्तत्तद्दोषप्रभवकुटिलान्दुःखसाध्यान्समस्तान्।
दद्यादीप्तिं जठरशिखिनं स्त्रीशतं सेव्य वृष्य-
स्थैर्यं कुर्यादपि च वपुषो नामतः कामधेनुः ॥ ५५ ॥

**थोमापतिः**—कृष्णाभ्रकस्य धान्याभ्रं कृत्वा भृङ्गाम्बु निक्षिपेत्।
तस्मिंश्च तुत्थकं देयं सूक्ष्मं ताप्यभवं रजः ॥ ५६ ॥
टङ्कणं चाग्निना भृष्टं तावदेव विनिक्षिपेत्।
छागास्थिसंभवं चूर्णं चतुर्थांशेन निक्षिपेत् ॥ ५७ ॥
रसभस्माष्टमांशं च गुडगुञ्जापुरस्तथा।
पञ्चाज्येन विनिष्पिष्य गोलीकृत्य विशोष्य च ॥ ५८ ॥
ततो नूतनभाण्डस्य जलघृष्टेन पाण्डुना।
विलिप्य वटिकाः सर्वा हरेत्सर्वं पुरोक्तवत् ॥ ५९ ॥
महाभ्रसत्त्वमेतत्स्यादेकमप्यखिलार्तिनुत्।
त्रिफलाक्वथितैः सार्धं पुटितश्च शतावधि ॥ ६० ॥
इत्थं महाभ्रसत्त्वं तन्मृतं शाणचतुष्टयम्।
एकषाणमितं सम्यग्रसराजस्य भस्म च ॥ ६१ ॥
एकशाणमितं गन्धं त्रिफला च त्रिशाणिका।
कान्तपात्रे क्षिपेदेतत्सर्वं घृतसितायुतम् ॥ ६२ ॥
मर्दयेदतियत्नेन यावत्स्यात्प्रहराष्टकम्।
तत्कल्कं निक्षिपेत्कान्तलोहजातकरण्डके ॥ ६३ ॥
संसिद्धोऽयमुमापतिर्वररसो गुञ्जामितः सेवितो
मासेनैव महामयान्प्रशमयेत्पथ्यादियुक्तिं विना।
नित्यं क्षीरघृताशनेन च पुनः संसेवितो नाशये-
दब्देनैव जरां वलीपलितकैर्दद्याच्छताब्दं वयः ॥ ६४ ॥
उमापती रसः सोऽयमुमापतिरिवापरः ॥ ६५ ॥

---

१ क. हत्वा। २ क. नाली°। ३ च °त्क्वाथर°। ४ घ. °खिनः स्त्री°। ५ घ. वृष्यः स्थै°। ६ क. पञ्चाजेन। ७ घ. तत्पूतं। ८ क. °कशाण°। ९ च. युक्तं वि°।

**अथ महाकनकसुन्दरः**—कान्तकाञ्चनगन्धाश्ममारितं जारितं रसम् ।
चतुर्निष्कमितं चाथ स्वर्णं निष्कमिदं मृतम् ॥ ६६ ॥
निक्षिप्य कान्तपात्रे तु पञ्चाशन्निष्कसंमितम् ।
जारयेद्गन्धकं शुद्धं गन्धेन वडवाग्निना ॥ ६७ ॥
निष्कतुल्यमिदं चूर्णं श्लक्ष्णीकृत्य प्रयत्नतः ।
निक्षिपेन्मधुसंपूर्णे घृतसुस्निग्धभाण्डके ॥ ६८ ॥
अमुनैव प्रकारेण पथ्यानां षष्टिसंयुतम् ।
त्रिशतं साधयेद्यत्नाच्छास्त्रदृष्टविधानतः ॥ ६९ ॥
त्रिधा विभज्य तत्रैकां समादाय हरीतकीम् ।
एकपादं दिनाभ्यां च द्वितीयं दिवसैस्त्रिभिः ॥ ७० ॥
तृतीयं च ततः पादं चतुर्भिर्दिवसैर्भजेत् ।
एकैकां च ततः पथ्यां भजेदावत्सरं नरः ॥ ७१ ॥
जीवेद्वर्षशतं साग्रं वलीपलितवर्जितः ।
सर्वव्याधिविनिर्मुक्तो नित्यं स्त्रीशतसेवितः ॥ ७२ ॥
बलवान्वीर्यवांश्चैव पूर्णसर्वेन्द्रियोदयः ।
जायते नात्र सन्देह आज्ञेयं पारमेश्वरी ॥ ७३ ॥
हन्यादक्षिगदांश्च कुष्ठमखिलं मासान्तमासेवितः
पाण्डुं च ग्रहणीं प्रमेहगुदजान्गुल्मांश्च शूलामयान् ।
स्थूलत्वं च तथा महाग्निसदनं रोगांस्तथैवापरा-
न्कुर्याद्दीपनपाचनं खलु नृणां भाव्यामयारोधनम् ॥ ७४ ॥
अयं रसायनो दिव्यो महान्कनकसुन्दरः ॥ ७५ ॥

**अथामृतार्णवः**—कृत्वा कण्टकवेध्यानि पलस्वर्णदलान्यथ ।
अष्टांशरसलिप्तानि निक्षिपेदुपले त्र्यहम् ॥ ७६ ॥
हिङ्गुहिङ्गुलगन्धाश्मताप्यनीलाञ्जनैः शनैः ।
कृतं चूर्णमधश्चोर्ध्वं पत्राणां विनिधाय च ॥ ७७ ॥
शतवारं पुटेत्सम्यङ्निरुत्थं भस्म जायते ।
तद्भस्माद्द्विगुणं सूतं तस्माद्द्विगुणहिङ्गुलः ॥ ७८ ॥
तस्माच्च द्विगुणं ताप्यं सर्वमेकत्र मर्दयेत् ।
रसेन मातुलुङ्गस्य निरन्तरदिनद्वयम् ॥ ७९ ॥

---

१ घ. मतम् । २ क. शुद्धमन्धे° । ३ घ. मन्थने । ४ क. °मित चू° । ५ घ. °पेत्घृतसं° । ६ क. वा । ७ घ. °सेवकः । ८ च. पूर्णः स° । ९ घ. °हाकन° । १० घ. पलं स्व° । ११ घ. कृतचू° । १२ क. त्रिगुणं ।

तुषैः पुटत्रयं दद्याद्गोकरीषैः पुटत्रयम् ।
पुटानि दश विंशत्या छगणानां प्रकल्पयेत् ॥ ८० ॥
त्रिंशद्भिश्छगणैर्दद्यात्पुटानामथ[1] विंशतिम् ।
तस्मिन्वैक्रान्तजं भस्म क्षिपेत्तत्पादमात्रया ॥ ८१ ॥
सर्वमेकत्र संचूर्ण्य भृङ्गराजनिजद्रवैः ।
भावयेत्सप्तवाराणि सिध्यत्येवमयं रसः ॥
श्रीमता नन्दिना प्रोक्तो रसोऽयममृतार्णवः ॥ ८२ ॥
गुञ्जाबीजमितः सिताघृतकणासंयोजितः सेवितः
कुर्याद्[2]वृष्यमनेकशो वरव[3]धूसंतोष[4]संपोषणः ।
यक्ष्मव्याधिविधूननो गरहरः पर्याप्तदीप्तानलो
मूलव्याधिनिवारणः किमपरं सर्वामयध्वंसनः ॥ ८३ ॥
रम्भापक्वफलं घृतं दधि पयः क्षैरेयकं मण्डका
बालं तालफलं सिता च पललं संतानिका मोदकाः ।
खर्जूरं वरपानकं च वटकाः पुण्ड्रेक्षवः सारसं
गुर्वन्नं पनसं तथा शिखरिणी पथ्यं रसेऽस्मिन्मतम् ॥ ८४ ॥

**अथ मदनसंजीवनः**—त्रिपलं पारदं शुद्धं गन्धकं च चतुष्पलम् ।
मृतमभ्रकसत्त्वं च स्वर्ण[5]कान्तं च कार्षिकम् ॥ ८५ ॥
द्विपलं हेमविमलं भूनागायाः पलत्रयम् ।
एभिः सर्वैश्च संपेष्य प्रकुर्यान्नष्टपिष्टिकाम् ॥ ८६ ॥
वालुकायन्त्रविन्य[6]स्तलोहपात्रे क्षिपेत्तदा ।
अधस्ताज्ज्वालयेदग्निं कारयेत्तदनन्तरम् ॥ ८७ ॥
मण्डूकं[7] ब्राह्मिकायाश्च मुसल्याश्चित्रकस्य च ।
हस्तिशुण्ड्यास्तथा कृष्ण[8]निर्गुण्ड्या गोक्षुरस्य च ।
रसं कुडवमानेन क्षिपेत्खल्वे[9] मुहुर्मुहुः ॥ ८८ ॥
तत आकृष्य संपिष्य मधुना सह यत्नतः ।
मल्लमूषोदरे क्षिप्त्वा विनिरुध्य विशोष्य च ॥ ८९ ॥
दशभिश्छगणैर्देयं पुटं संपूज्य भैरवम् ।
करण्डे क्षेपयेत्पिष्ट्वा समभ्यर्चितकन्य[10]कः ॥ ९० ॥

---

१ क. °नामेकविं°। २ घ. °यांद्वृश्यम°। ३ घ. °वधूः सं°। ४ घ. °संतोष°। ५ ग. स्वर्ण का°। ६ ग. °न्यस्य लो°। ७ ग. मण्डका ब्रा। घ. मण्डूकब्रा°। ट. मण्डकब्रा°। ८ घ. कृष्णानि°। ९ च. °त्खल्वं मु°। १० क. °न्यका ॥ ८९ ॥

रसः ख्यातो नाम्ना भुवि मदनसंजीवन इति
द्विवल्लाभ्यां तुल्यो घृतमधुसितादुग्धसहितः ।
निपीतः सप्ताहं प्रचुरमधुराहारसहितो
नरं कुर्यान्नारीशतसुरतसुप्रीतिहृदयम् ॥ ९१ ॥
हन्यादुन्मादमुग्रं क्षयगदमरुचिं कामलामम्लपित्तं
सर्वान्पित्तोर्ध्वरोगान्रुधिरभवगदान्रक्तपित्तज्वरांश्च ।
रक्तार्शः पित्तगुल्मं सततमतिमहानाहमन्तर्विदाहं
पाण्डुं मेहांश्च मोहं प्रदरगदमपि स्त्रीजनस्योग्रमाशु ॥ ९२ ॥

**अथ मदनमोदकः**—त्रैलोक्यविजयापत्रं घृतेनाभर्जितं कियत् ।
त्रिकटुत्रिफलामुस्ताकुष्ठसैन्धवधान्यकम् ॥ ९३ ॥
सटीतालीसपत्रं च कट्फलं नागकेसरम् ।
अजमोदा यवानी च यष्टी मधुकमेव च ॥ ९४ ॥
मेथी जीरकयुग्मं च सबीजं भर्जितं तथा ।
यावदेतानि चूर्णानि तावदेव तदौषधम् ॥ ९५ ॥
तदेव सितया ग्राह्यं यावदायाति बन्धनम् ।
घृतेन मधुना युक्तं मोदकं परिमिश्रितम् ॥ ९६ ॥
त्रिसुगन्धिसमायुक्तं कर्पूरेणापि वासयेत् ।
स्थापयेद्घृतभाण्डेऽस्मिञ्श्रीमन्मदनमोदकान् ॥ ९७ ॥
भक्षयेत्प्रातरुत्थाय वातश्लेष्मविनाशनम् ।
कासघ्नं सर्वशूलघ्नं वलीपलितनाशनम् ॥ ९८ ॥
आमवातविकारघ्नं मेहकुष्ठगलव्रणान् ।
सदा निषेवयेद्धीमान्रुच्यमग्निविवर्धनम् ॥ ९९ ॥
नारदप्रमुखाः सर्वे वासुदेवे जगत्पतौ ।
तेन लक्ष्यं वरस्त्रीणां स्त्रियमेकां सुनन्दनम् ॥ १०० ॥

**अथ लिङ्गलेपः**—शशिसूतकटङ्कणमागधिकं घृतसूरणमाक्षिकहेमरसम् ।
मुनिपत्ररसप्लुतलेपवरं युवतीमदपातनवश्यकरम् ॥ १०१ ॥

**अथ द्रावणम्**—योषागर्भरजः सूतं मधुना सह लेपयेत् ।
अवश्यं द्रावयेन्नारीं शुष्ककाष्ठोपमामपि ॥ १०२ ॥

---

१ घ. °त्तोत्थरो°। २ च. °मपि म°। ३ ङ. ज. °त्रं सबीजं भ°। ४ झ. तथैव च ॥ ९४ ॥
५ झ. °दनाशन°। ६ झ. °रसं सू°। ७ झ. लेहये°।

**अथ पुष्पधन्वा रसः**—रम्भाकन्दे हेमताराऽर्कपिष्टी पक्का यन्त्रे भूधरे तं पचेत ।
गन्धं दत्वा षड्गुणार्धं क्रमेण पश्चात्कान्तं तेन तुल्यं क्रमेण ॥ १०३ ॥
दत्वा खल्वे शाल्मलीयष्टितोयैः पक्षैकं तन्मर्दयेन्नागवल्ल्याः ।
नीरैर्यामं पुष्पधन्वा रसः स्याद्वल्लं दद्यादस्य पूर्वोक्तयुक्त्या ॥ १०४ ॥
पुष्टिं वीर्यं दीपनं सोऽत्र दद्याद्धन्याद्रोगान्रोगयोग्यानुपानैः ॥ १०५ ॥

**अथ लिङ्गलेपः**—सिन्दूरमधुनो लेपं लिङ्गस्य कुरुते यदि ।
अत्यर्थं रमते नारीं द्रावयेद्वशमानयेत् ॥ १०६ ॥

**रसेन्द्रचूडामणिः**—सूतहेमभुजगाभ्रवङ्गकाः कान्ततार्प्यविमलाः समाक्षिकाः ।
भागवृद्धिमिलिता विमर्दिता धूर्तपत्रविजयासलिलेन ॥ १०७ ॥
सप्तसप्त चपलामृतवल्ली — — —सुररतांजलतोयैः ।
वारिवाहमृतयष्टिकावरीवानरीभुजगदष्टचुदकेन ॥ १०८ ॥
अर्धभागमहिफेनकं न्यसेन्मर्दयेत्सुरसपुष्परसेन ।
चन्दनार्ककरहाटपिप्पली श्रावणीकृतरसौ पृथगेव ॥ १०९ ॥
कुङ्कुमेन च ततो विभावयेन्नाभिजद्रवयुतं विभावयेत् ।
सिद्धिमेति रसराडयं शुभः कामिनीमदविधूननदक्षः ॥ ११० ॥
शर्करामधुयुतो द्विमाषकः स्तम्भकृन्निधुवने वनितानाम् ॥ १११ ॥
संसेव्य सूतं न च रात्रिभोज्यं कुर्वीत पेयं पय एव केवलम् ।
तृतीययामे रससेवनं तु कृत्वा निशायाः प्रहरे व्यतीते ॥ ११२ ॥
सेवेत कान्तां कमनीयगात्रां घनस्तनीमुज्ज्वलचारुवस्त्राम् ।
रत्युत्सुकां कातरलोलनेत्रां विलोलहारावलिमादधानाम् ॥ ११३ ॥
किं कामे तनुकामिनां मलयजेनावश्यजेनाशु किं ।
किं चन्द्रेण परोपतापजनिना पुंस्कोकिलेनापि किम् ॥ ११४ ॥
सहस्रशः सन्ति यदा तरुण्यो मदालसाः पीनपयोधरा दृढाः ।
तदा रसेन्द्रः परिषेवणीयो विकारकारी भवतीह नान्यथा ॥ ११५ ॥

**अथ कामेश्वरो मोदकः**—सम्यङ्मारितमभ्रकं कटुफलं कुष्ठाश्वगन्धा वचा
मेथी मोचरसो विदारिमुसलीगोक्षूरकोलूरकम् ।
रम्भाकन्दशतावरी ह्यजमुदा माषास्तिला धान्यकं
यष्टीनागबलार्कचूरमदनं जातीफलं सैन्धवम् ॥ ११६ ॥

---

१ घ. भाव्यं । २ घ. °धुना ले° । ३ झ. मृता । ४ झ. °रकेक्षुर° । ५ झ. °कचोरदमनं ।

भार्ङ्गी कर्कटशृङ्गिका त्रिकटुकं द्वे जीरके चित्रकं
वातुजातपुनर्नवागजकणाद्राक्षा[1]सैनावत्सकम् ।
शाल्मल्यङ्घ्रिफलत्रिकं कपिभवं बीजं समं चूर्णये-
च्चूर्णांशा विजया सिता द्विगुणिता मध्वाज्यमिश्रं[2] तु तत् ॥ ११७ ॥
[3]कर्षार्धां गुलिकां विलेह्यमथवा कृत्वा[4] च तत्सेवये-
त्पेयं रक्ष सितानुवीर्यकरणे स्तम्भो[5]ऽप्यलं कामिनाम् ।
रामावश्यकरः सुखातिसुखदः प्रौढाङ्गनाद्रावकः
क्षीणे पुष्टिकरः क्षयक्षयकरो नानामयध्वंसकः ॥ ११८ ॥
नित्यानन्दकरो विशेषकविताबाचाविलासोद्भवं
धत्ते सर्वगुणं महास्थिरधियां ध्यानावसाने दृढम् ।
अभ्यासेन निहन्ति मृत्युपलितं कामेश्वरो वत्सरा-
त्सर्वेषां हितकारको निगदितः श्रीनित्यनाथेन वै ॥ ११९ ॥

**अथ पूर्णचन्द्रः**—कृकवाकूग्रपिच्छं तु[6] मुद्रिकाकारकं कृतम् ।
[7]ऊर्णनाभेः सुजालेन वेष्टयित्वाऽथ धारयेत् ॥ १२० ॥
वामहस्तकनिष्ठायां नरो वीर्यं न मुञ्चति ।
कर्पूरं टङ्कणं सूतं मुनिपुष्परसं मधु ॥ १२१ ॥
मर्दयित्वा लिपेत्तेन लेपो यावत्तु तिष्ठति ।
लिङ्गं[8] तु पुण्डरीकस्य चूर्णीकृत्य प्रयोजयेत् ॥
मधुना तिलकं कृत्वा[9] रेतस्तम्भकरो[10] ह्यलम् ॥ १२२ ॥
सूतं गन्धं चाश्वगन्धागुडूचीयष्टीतोयैर्वासरैकं विघृष्य ।
क्षुद्रं शङ्खं मुक्तकं लोहकिट्टं भस्मीभूतं सूत[11]तुल्यं च दद्यात् ॥ १२३ ॥
कूष्माण्डैर्वा वासरैकं विघृष्य गोलं कृत्वा भूधरे तं पुटेत ।
चूर्णं कृत्वा नागवल्लीरसेन दद्यादेवं मर्दयित्वा दिनैकम् ॥ १२४ ॥
मध्वाज्याभ्यां पूर्णचन्द्रं रसेन्द्रं पुष्टिं वीर्यं दीपनं चैव कुर्यात् ।
योज्यश्चायं पित्तरोगे ग्रहण्यामर्शोरोगे पित्तजे बोलयुक्तः[12] ॥ १२५ ॥
स्त्रीणां तापे शाल्मलीनीरयुक्तं योज्यं[13] भोज्यं वासितां वा[14] विपकम् ॥ १२६ ॥
शुद्धं गन्धं वाजिगन्धां च यष्टिं मागन्ध — — — — माजिगन्धाम् ।
मध्वाज्याभ्यां शाल्मलीसत्त्वयुक्तां शम्बूकैर्वा भुज्यते वाऽज्यमिश्रैः ॥ १२७ ॥

---

१ झ. °सटीवालक°। २ घ. °श्रं ततः ॥ ११६ ॥ ३ झ. कर्षार्धा गुटिका विलेह्यम°। ४ झ. °त्वा सदा सेवयेत्पीत्वा क्षीररसि°। ५ झ. °स्तम्भत्यलं। ६ झ. तु मृद्वीकाकारतां कृ°। ७ घ. गुणेनाभस्तु नाले°। ८ झ. लिङ्गं। ९ झ. °त्वा रत°। १० झ. °रोत्यल°। ११ झ. लोहतुल्यं°। १२ झ. °युक्तम् ॥ १२४ ॥ १३ झ. °ज्यं वाऽऽज्यं ना सि°। १४ झ. वाऽति प°।

**अथ मदनसंजीवनः**—कर्पूररससंयुक्तं सौभाग्यरससंयुतम् ।
लेपाय क्रियते नित्यं नाम्ना मदनजीवनः ॥ १२८ ॥

**अथ महाकल्कः**—धान्याभ्रकं विनिक्षिप्य मुसलीरसमर्दितम्
स्थाल्यां क्षिप्त्वा निरुध्याथ पिधान्या मध्यरन्ध्रया ॥ १२९ ॥
स्थाल्यधो ज्वालयेद्वह्निं यामपर्यन्तमुद्धतम् ।
ततः क्षिपेत्पिधान्यां हि व्योम्नस्त्वष्टगुणं पयः ॥ १३० ॥
जीर्णे पयसि पिष्ट्वा तत्तालमूलीरसैः पुनः ।
इत्थं हि साधयेद्व्योम त्रिवारमतियत्नतः १३१ ॥
अजादुग्धैः पुटैः पश्चाद्वाराणि खलु विंशतिः ।
कम्पिल्लकरसेनापि विष्णुक्रान्तारसेन च ॥ १३२ ॥
कदलीकन्दतोयेन तालमूलीरसेन च ।
शतवारं पुटेदेवं भवेद्व्योम रसायनम् ॥ १३३ ॥
तद्व्योमभसितं ताप्यभस्म ताम्रस्य भस्म च ।
शुल्बभस्म च तत्सर्वं समांशं परिकल्पयेत् ॥ १३४ ॥
भावयेत्सप्तधा निम्बरसैर्लोध्ररसेन च ।
केतक्या मार्कवस्यापि कदल्यास्त्रिफलस्य च ॥ १३५ ॥
कोरकस्यापि सारेण तावद्वाराणि यत्नतः ।
इति निष्पन्नकल्केऽस्मिंस्तत्समां त्रिफलां क्षिपेत् ॥ १३६ ॥
भस्मसूतं सिताव्योषं चित्रकं च पृथक्पृथक् ।
मधुना गुटिकाः कार्याः शाणेन प्रमिताः खलु ॥
महाकल्क इति ख्यातो दस्राभ्यां परिकीर्तितः ॥ १३७ ॥

**अथ दिव्यामृतरसः**—एकां गोलीं समारभ्य तथैकैकां विमर्दयेत् ।
चतुर्गोलकपर्यन्तं मण्डले मण्डले खलु ॥ १३८ ॥
सेवितो द्वादशाब्दं तु जरामृत्युविवर्जितः ।
सर्वव्याधिविनिर्मुक्तो दृढदीपनपाचनः ॥ १३९ ॥
भीमतुल्यबलः श्रीमान्पुत्रसंततिसंयुतः ।
वर्वारोग्यमयो भीमसमानभुजविक्रमः ॥ १४० ॥
सर्वायाससहिष्णुश्च शीतातपसहस्तथा ।
अमन्दसंमदोपेतः प्रौढस्त्रीरतिरञ्जनः ॥ १४१ ॥

---

१ च. भुक्त्वा । २ क. °क्रान्तर° । ३ क. °मसासि° । ४ घ. °व्योपाचि° । ५ क. °कैकं वि° ।
६ क. °दृक्कायोऽग्निदीपनः । ७ घ. शीतताप° । ८ ट. °मन्दः सं° ।

दृढसर्वेन्द्रियो भूत्वा जीवेद्वर्षशतत्रयम् ।
श्वासं कासं क्षयं पाण्डुं तथैवाष्टौ महागदान् ॥ १४२ ॥
मण्डलार्धेन शमयेज्ज्वरादीनां तु का कथा ।
सर्वगोरससंयुक्तं पथ्यं कार्यं रसायने ॥ १४३ ॥
रोगोचितमथान्यच्च दद्दीत खलु रोगिणे ।
संसारसुखमिच्छद्भिः सुखं जीवितुमिच्छुभिः ।
नित्यं रसो निषेव्योऽयं दिव्यामृतसमो मृतैः ॥ १४४ ॥ ३४७७ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये वाजीकरणनिरूपणं नाम सप्तविंशोऽध्यायः ॥ २७ ॥

---

## अथाष्टाविंशतितमोऽध्यायः ।

### [ अथ लोहकल्पः । ]

अल्पमात्रोपयोज्यत्वादरुचेरप्रसङ्गतः ।
क्षिप्रमारोग्यदायित्वादोषधिभ्योऽधिको रसः ॥ १ ॥
लोहं मृतं कन्दविषं चूतं चेति निगद्यते ।
कार्यः पानकषायोऽस्मिन्षोडशांशावशेषितः ॥ २ ॥
अथ पञ्चमृदा लिप्तं हेम्नः पत्रं पुटानले ।
विपचेन्नागमावाप्य रूप्यस्योर्ध्वाग्निना पचेत् ॥ ३ ॥
स्नुह्यर्कक्षीरलवणक्षाराम्लकृतलेपनम् ।
तप्तताम्रस्य निर्गुण्ड्या रसे सिञ्चन्पुनःपुनः ॥ ४ ॥
वङ्गनागं रसे तस्मिंस्तन्मूलेनावचूर्णकम् ।
यत्पात्राध्युषिते तोये तैलबिन्दुर्न सर्पति ॥ ५ ॥
तारेणाऽऽवर्तते यत्तत्कान्तलोहं तु तत्स्मृतम् ।
अयसामुत्तमं सिञ्चेत्तप्तं तप्तं वरारसे ॥ ६ ॥
एवं शुद्धानि लोहानि पिष्टान्यम्लेन केनचित् ।
मृतसूतस्य पादेन प्रलिप्तानि पुटानले ॥ ७ ॥
पचेत्तुल्यस्य वा ताप्यगन्धाश्महरतेजसः ।
अथवा मृतनागेन स्नुहीक्षीरेण काञ्चनम् ॥ ८ ॥

---

१ घ. °मिच्छति । २ घ. °तरसो मृ° । ३ ज. °मो भृतैः । ४ ग. °शेषतः । ५ क. °षितम् ॥२॥
६ घ. तत्पा° । ७ घ. °रेण व° । ८ घ. °त्काललो° ।

रूप्यं स्नुक्क्षीरताम्राभ्यां ताम्रं मूत्राम्लगन्धकैः ।
हरितालपलाशाभ्यां वङ्गं नागं मनोह्वया ॥ ९ ॥
पारिभद्रस्य च रसेनाथवा भर्जयेत्त्रपु ।
चिञ्चाक्षभिक्षुवीरद्रुबोधिवृक्षैरहिं पुनः ॥ १० ॥
अहिमाराहिदमनीवासावज्रलतार्जुनैः ।
स्त्रीस्तन्ये हिङ्गुलेनायः पचेल्लिप्त्वा पुटेऽनले ॥ ११ ॥
सर्वमेव[4] मृतं लोहं सोत्थानं यदि सेवनात् ।
शूकवर्णाभकण्ठत्वं स्फोटकांश्च विबन्धकृत् ॥ १२ ॥
पक्कं यावन्निरुत्थानं सेव्यं वारितरं हितम् ।
कान्ते पुनः कलाभागतांप्ये[11] सक्षौद्रसर्पिषि ॥ १३ ॥
क्षिप्तमावर्तितं तारं स्वप्रमाणं भवेद्यदि ।
जानीयात्तन्निरुत्थानं सोत्थानं च मुहुर्मुहुः ॥ १४ ॥
त्रिफलाक्काथसंपृक्तं विपचेत्पुटपावके[12] ।
हेम्नो रूप्यस्य वा भस्म वरीशृङ्गाम्बुभावितम्[13] ॥ १५ ॥
गुञ्जाप्रमाणं त्रिफलासितामध्वाज्यमिश्रितम् ।
बृंहणं वृष्यमायुष्यं कामलापाण्डुकुष्ठजित् ॥ १६ ॥
गन्धकेन समांशेनप्राग्वत्ताम्रं च मारितम् ।
धान्याभ्रकं च तुत्थं च दशनिष्कं पृथक्पृथक् ॥ १७ ॥
भावितं मातुलुङ्गाम्लेनाऽऽर्द्रकस्य रसेन च ।
ताम्रं सोष्णोदकं गुल्मप्लीहशूलामवातजित् ॥ १८ ॥
आर्द्रालकुचभृङ्गाणां रसपिष्टेन कस्यचित् ।
गन्धकेन समांशेन प्राग्वत्ताम्रं च मारितम् ॥ १९ ॥
कञ्चुकस्तमिह त्रिंशत्कर्षं चूर्णितगन्धकम् ॥ २० ॥
दत्वाऽल्पशोऽग्निनाऽल्पेन दत्वा धूमं विभर्जयेत्[14] ।
प्रस्थाम्बुमर्दितस्यास्य प्रदानान्निःसृतं[15] युतम् ॥ २१ ॥
तुत्थनीलशिलाजाभ्यां कर्षांशाभ्यां विशोषयेत् ।
ताम्रद्रुतिरियं साज्यमानुषीक्षीरमाक्षिका ॥ २२ ॥

---

१ घ. °तालाभ्यां । २ क °ञ्चाभिक्षुवीरतरुभो° । ३ घ. °क्षभिक्षु° । ४ घ. °मेवं मृ° । ५ घ. °कपूर्णो° । ६ झ. °कण्ठं च स्फो° । ७ च. °ण्ठत्वस्फो । ८ च. °न्धनुत् । ९ ज. °लाकण्ठत्वक्स्फोटारुचिविबन्धकृत् । पक्कं यावन्निरुत्थानं सेव्यं वारितरं हि तत् । कान्ते पुनः कृष्णभागास्ताप्ये° । १० ग. °ताप्यं स° । ११ °र्पिषः ॥ १३ ॥ १२ क. °वकैः । १३ क. °रीभृङ्गा° । १४ क. विमर्दये° । १५ क. प्रसादान्निः° ।

काचार्मपिल्लाभिष्यन्दव्रणशुक्रगतिप्रणुत् ।
तत्किट्टं दद्रुकिटिभपामादींल्लेपनाज्जयेत् ॥ २३ ॥
मारितं त्रपुसं सीसं हारिणं शृङ्गमाकुली ।
कार्पाससैंवासितं तक्रं माँहिषं च प्रमेहजित् ॥ २४ ॥
नवनवति त्रिफलाया मृतस्य नागस्य शततमो भागः ।
दार्व्याकुलीफलत्रयकनकजलप्रस्थपेषितं निखिलम् ॥ २५ ॥
शतगुलिकाप्रमितं तत्पिष्टीतक्रेण मेहहरम् ।
पिबतः कषायमभयादार्व्यक्षसमांशपाठायाः ॥ २६ ॥
कृष्णलोहेन योक्तव्यो बालेनोपचितो हि सः ।
कुमारयूनमध्ये तु वरमध्यावरे क्रमात् ॥ २७ ॥
एकद्वित्रिगुणात्कालादुपयुक्तं गुणावहम् ।
एरण्डवह्निशम्बूकवर्षाभूव्योषसैन्धवम् ॥ २८ ॥
अन्तर्धूमविदग्धायाश्चूर्णं सोष्णाम्बु शूलजित् ।
त्रिफलामृतनिर्गुण्डीमेघनादपुनर्नवा ॥ २९ ॥
कासमर्दालिधत्तूरवज्रिणीनां रसैरिदम् ।
भावितं गुडमध्वाज्यैर्जलतक्रानुपायिनः ॥ ३० ॥
स्वल्पक्षीररसांशस्य हन्याज्जीर्णज्वरं क्षयम् ।
कुष्ठास्थिस्रावपाण्ड्वर्शःपक्तिशूलप्लिहामयान् ॥ ३१ ॥
बाकुचीनिम्बपञ्चाङ्गं वेल्लचित्रकवत्सकम् ।
पथ्यानागरशम्याकगुडूचीकटुकीफलम् ॥ ३२ ॥
खदिरासनसारेण भावितं लोहभस्म च ।
कर्षमात्रं समध्वाज्यं क्षयकुष्ठनिषूदनम् ॥ ३३ ॥
गुडस्य कुडवे पक्वं लोहभस्म पलोन्मितम् ।
कोलप्रमाणं रोगेषु तैस्तैर्योगैः प्रयोजयेत् ॥ ३४ ॥
व्योषादिनवकस्यांशस्तथांऽशो लोहभस्मतः ।
अंशोऽश्मजतुनः खण्डस्याष्टौ सर्वं समाक्षिकम् ॥ ३५ ॥
कान्तपात्रगतं यक्ष्मज्वरापस्मारघस्मरम् ।
निम्बसारत्रिमधुरत्रिफलालोहगन्धकम् ॥ ३६ ॥
चूर्णमर्जुनपत्र्या वा सभृङ्गत्रिफलायसम् ।
सेवितं मधुसर्पिर्भ्यां जरावैरूप्यनाशनम् ॥ ३७ ॥

१ झ. °सं वारि°। २ क. °र्पासावा°। ३ ग. °सपिशितं। ४ घ. माक्षिकं। झ. माहिष्यं। ५ झ. शशगु°। ६ झ. तत्पीतं त°। ७ घ. °ण्डबर्हिश°। ८ घ. °लिपत्तू°। ९ झ. °लायुतम्।

मधुकं मृतलोहं च धात्री च त्रिगुणोत्तरम्।
रसेन भावितं छिन्नरुहायाः साज्यमाक्षिकम्॥ ३८॥
सेवितं भोजनस्यादौ वातपित्तामयाञ्जयेत्।
मध्ये प्रविष्टमन्तेऽम्लपित्तं शूलं च पक्तिजम्॥ ३९॥
भल्लातकसहस्राभ्यां त्रिफलामुस्तचित्रकैः।
हस्तिपिप्पल्यपामार्गसहदेवीकुटेरकैः॥ ४०॥
कणामूलामृताचव्यैर्द्रोणेऽपां कुडवोन्मितैः।
पक्के पदस्थे लोहस्थे तुलार्धं तीक्ष्णलोहतः॥ ४१॥
मानिकां च घृतात्पक्त्वा विडङ्गं चित्रकं त्वचम्।
त्रिफला पञ्चलवणं त्र्यूषणं च पृथक्पलम्॥ ४२॥
पलानि सूरणस्याष्टौ वाराह्या वृद्धदारुकात्।
चतुष्पलं पुष्परसस्यार्धप्रस्थं च निक्षिपेत्॥ ४३॥
प्रातर्भोजनकाले वा लीढमेतद्रसायनम्।
निहन्ति च ग्रहण्यर्शःशूलगुल्मकृमिक्षयान्॥ ४४॥

**अथ खण्डखाद्यम्**—वासाभाङ्ग्र्यमृताभीरुवचाखदिरपुष्करैः।
मुसलीभिक्षुकोरण्टैः सूर्पचापां च मुष्टिकैः॥ ४५॥
पक्केऽष्टशिष्टे ताम्रस्थे प्रस्थांशे खण्डसर्पिषी।
ताप्येन रुक्मलोहस्य हतस्याप्यञ्जलित्रयम्॥ ४६॥
पक्केऽस्मिँल्लोहतां याते कुस्तुम्बुरु शिलाजतु।
शृङ्गीविडङ्गत्रिफलाजातीफलकटुत्रिकम्॥ ४७॥
चातुर्जातं च शुक्त्यंशं प्रस्थार्धं[10] मधु च क्षिपेत्।
खण्डखाद्यमिदं लीढं कर्षमात्रं रसायनम्॥ ४८॥
क्षीरानुपस्य क्षपयेत्क्षयकासारुचिक्लमान्।
शीतपित्ताम्लपित्तास्रवातपित्तास्रकामलाः।
कुष्ठ[12]मेहप्लिहानाहकार्श्यं शूलं च पक्तिजम्॥ ४९॥
अथोष्णवारिपिष्टेन कान्तलोहं ससिन्धुना॥ ५०॥
कफे कुठार[13]च्छिन्नेन[14] पित्ते गर्भे[15] गलाम्बुना।
उभयेन वयस्तम्भे ताप्येन गलरुक्षु च॥ ५१॥

---

१ घ. °मन्नेऽम्ल°। २ ग. °त्र्यकत्व°। ३ ग. °वणत्र्यू°। ४ ग. च। ५ घ. °लमवमि°। ६ ख. °लीमिक्षु°। ७ घ. °ण्टैः शूर्प°। ८ क. हस्तस्या°। ९ झ. स्मिल्लोह°। १० झ. °र्धं च मधु क्षि°। ११ झ. °चित्रमा°। १२ झ. कुष्ठं हलीमकाना°। १३ झ. कुमार°। १४ घ. °रच्छन्ने°। १५ क. गर्ते। ज. वाते।

कण्डूं मनोह्वया स्रोतोविं[1]बन्धे मरिचाङ्घ्रिणा ।
क्षिप्तं पक्वेष्टकायस्त्रे द्रावितं[2] जलसंनिभम् ॥ ५२ ॥
निषिक्तं त्रिफलाक्वाथे पर्पटीभूतमाय[3]से ।
संचूर्ण्य तेन क्वाथेन पिष्ट्वा स्थाल्यां विपाचितम् ॥ ५३ ॥
षोडशाङ्गुलगर्तान्तः संपुटेचापरीक्षणात् ।
आर्द्रकाभीरुमुसलीविदारीभृङ्गहस्तिजैः ॥ ५४ ॥
रसैस्तथा मुहुस्ताम्रं धान्याभ्रं काञ्जिके प्लुतम् ।
तेन पिष्टं घृतं क्षौद्रे मत्स्याक्षीमेघनादयोः ॥ ५५ ॥
जयन्त्यास्तीक्ष्णशार्ङ्गेर्यो[4]र्मुसलीमाणिमन्थयोः ।
वज्रिणीसातलावाद्यावर्षाभूणां रसेन च ॥ ५६ ॥
क्षीरेण च पृथक्कुर्यात्पेषणादिक्रियात्रयम् ।
कज्जलाभं द्वयं चैतद्यथाक्वाथं विभावयेत् ॥ ५७ ॥
दन्तीत्रिवृच्चित्रकहस्तिकर्णीव्योषाष्टवर्गत्रिफलाविडङ्गम् ।
पलाशबीजाम्बुदजीरकैला व्याघ्री च दन्त्यादिरिह प्रदिष्टः ॥५८॥
पलानि पञ्च कान्तस्य सर्वत्राभ्रकचूर्णयोः ।
सार्धे द्वे सप्त सा[6]र्धानि वाते पित्ते पुनः क्रमात् ॥ ५९ ॥
पञ्च पादेन युक्तानि पञ्च प[7]ञ्च कफे पुनः ।
तत्र कान्ताभ्र[8]के क्षिप्त्वा त्रिफलाक्वाथमाढकम् ॥ ६० ॥
प्रस्थितानि[9] गुणस्याष्टौ क्वाथस्य पयसस्तथा ।
पलानि षोडशाज्यस्य सिञ्चेत्पाकवशात्पुनः ॥ ६१ ॥
वाताद्यपेक्षया पङ्कोत्कारिकावालु[10]कानिभे ।
अ[11]फेने वर्णगन्धाढ्ये क[12]टूष्णे पीतसर्पि[13]षि ॥ ६२ ॥
दन्त्यादिचूर्णमावाप्य स्थापितेनेतरेण वा ।
घृतेन पेषितं भाण्डे घृतस्निग्धे निधापयेत् ॥ ६३ ॥
कुर्यात्तत्कल्पनापाको श्लेष्मणीव रसायने ।
स्वस्थः शरन्निदाघाभ्यां[14]मन्यथाकृतशोधनः ॥ ६४ ॥
घृतमाक्षिकमात्रा वा [15]लौहे लोहेन मर्दितः ।
रसायनं द्वौ दिवसौ द्वे द्वे गुञ्जे ततः परम् ॥ ६५ ॥

---

१ च. °विड्बन्धे । २ झ. °टीसूत° । ३ क. °यये । ४ झ. °लीमाणि° । ५ ग. °क्वाथे वि° । ६ च. सप्तानि । ७ झ. पक्वं । ८ झ. °भ्रकं क्षि° । ९ घ. °तानुमु° । १० घ. °लुके नि° । ११ च. कफेन । १२ च. °टूष्णोपित्तस° । १३ च. °पिषः ॥ ६२ ॥ १४ ग. °मन्यथा° । १५ क. लोहे ।

द्वन्द्ववृध्या दिने द्वे द्वे परं विंशतिवासरान्।
प्रातर्विंशतिगुञ्जानां भागौ[1] द्वौ भागमेव च॥ ६६॥
प्राग्भक्तम[2]र्धमर्धं वा भक्षयेदुक्तकालयोः।
एवं मात्राविभागेन व्याधिक्षीणोऽपि सर्वदा॥ ६७॥
लोहादष्टगुणं क्षीरं धारोष्णं शृतमेव वा।
वयःस्तम्भे[3]ऽनुपातव्यं व्याधौ क्वाथो[4] यथोदितः॥ ६८॥
आस्वाद्य चानु मुस्तानां निर्यासं दन्तपीडितम्।
मूलानि भक्षयेत्तासामास्यवैरस्यनुत्तये॥ ६९॥
क्रूरकोष्ठस्तु दीप्ताग्निरनुलोमयितुं मलान्।
तप्तं क्षीरं पिबेद्भूयस्ताम्बूलं भक्षयेन्मुहुः॥ ७०॥
स्नान[5]मर्दनविष्टम्भि विदाह्यम्लमजाङ्गलम्।
सप्त सप्ताहमथवा त्रिःसप्ताहं परित्यजेत्॥ ७१॥
शालिमुद्गरसं सर्पिर्वेत्राग्रं बृहतीद्वयम्।
दीर्घे पटोलवार्ताके तालकं मूलकन्दकम्[6]॥ ७२॥
शातावर्या[7] सजीवन्तीशृङ्गाट[8]सुनिषण्णकम्।
तन्दुलीयकधान्याकं सराजक्षववास्तुकम्॥ ७३॥
जाङ्गलं शफराः कृष्णमीना रोहितमद्गुरौ।
द्राक्षादाडिमखर्जूर[9]रम्भाकोलं च शस्यते॥ ७४॥
जीर्णौषधस्तु दीप्तेऽग्नौ प्रातः पित्ताद्बुभुक्षितः।
अर्धमात्रं पिबेत्क्षीरं सार्धमात्रं कृशो नरः॥ ७५॥
दिवसाः सप्त सप्तास्मिन्दिने द्वित्रिगुणाः क्रमात्।
जघन्यमध्यप्रवरः सेवाकालो विधीयते॥ ७६॥
पूर्वक्रि[10]येयं द्विगुणा सोत्तरा नात्र यन्त्रणा।
यथाकालं मलोत्सर्गः[11] शरीरोदरलाघवम्॥ ७७॥
हृदयोद्गारशुद्धिश्च जीर्णलोहस्य जायते।
लोहाप्रवृत्तौ[12] सामत्वं लोहकिट्टप्रशान्तये॥ ७८॥
उष्णाम्बु सयवक्षारं त्रिदिनात्त्रिदिनात्पिबेत्।
रसेनागस्त्यपत्राणां विडङ्गं चान्तरान्तरा॥ ७९॥

१ ग. भागो। २ झ. प्राग्भुक्त°। ३ च. °म्भे तु पा°। ४ झ. क्वाथे। ५ ग. स्नानं म°। ६ क. °न्दकः॥ ७२॥ ७ क. °वर्याः स°। ८ घ. °ङ्गाटं सविषाणक°। ९ घ. °र्जूरं र°। १० क. पूर्णक्रि°। ११ ग. मद्योत्सर्गः। १२ क. °वृत्तो सा°।

क्काथमश्वत्थपत्राणां प्रसङ्गे छर्दिशूलयोः ।
सामान्यसिद्धिमावाप्य[1] भावनापुटपाचनैः ॥ ८० ॥
यथायोग[2]युतं पक्कं त्रिफलाक्काथसर्पिषा[3] ।
साधितं भक्षयेत्कान्तमेकं वा केवलाभ्रकम् ॥ ८१ ॥
इह नानुपिबेत्क्षीरं न कुर्यात्तेन भोजनम् ।
मुद्गयूषं पिबेत्तोये कोष्णं[4] च नियतो भवेत् ॥ ८२ ॥
एतल्लोहरसायनाख्यममृतं पक्कं यथोक्तं क्रमा-
द्भुञ्जानः प्रतिवत्सरं नववपुः सार्धं तु वर्णेन्द्रियैः[5] ।
दीर्घायुर्नवयौवनोन्नतकुचप्रौढाङ्गनावल्लभो[6]
[7]माद्यार्दन्त[8]बलो जराविरहितः पुत्रावृतः स्यान्नरः ॥ ८३ ॥
अङ्कोललोहमणिटङ्कणमाणिमन्थताप्यार्द्रकत्रिकटुतुत्थशिलाजतूनाम् ।
भृङ्गोदकेन वटिकां च मसूरमात्रां खादेज्जयाय जरसः सकलामयानाम् ॥८४॥
अङ्कोल्ल[9]वेल्लाभ्रककान्तताप्यशिलाजतुव्योषफलत्रयाणाम् ।
चूर्णं मुसल्याः समभागमेतत्कुष्ठानि लीढं मधुना धुनोति ॥८५॥
कान्ताभ्रत्रिफलाविडङ्गरजनीताप्याभ्रदेवद्रुम-
व्योषैलाग्निपुनर्नवाङ्घ्रिगिरिजांकोल्लैः[10] समं गुग्गुलुम् ।
पिष्ट्वा भृङ्गजलेन सूक्ष्मगुलिकां खादेद्यथा[11]सात्म्यतो
मेदःश्लेष्मसमीरणोल्बणगदेष्वन्येषु वा पूरुषः ॥ ८६ ॥
व्योषं कृष्णतिलासनस्य कुसुमं मण्डूरसैरेयकं
[12]दोषाशेलुसितात्रिवृत्कृमिहरं भृङ्गाणि भल्लातकम् ।
श्रेष्ठावाकुचिकान्तलोह[13]जरसस्तत्कान्तपात्रे स्थितं
खादेत्कुष्ठहरं रसायनवरं मध्वाज्यसंयोजितम् ॥ ८७ ॥
मण्डूर[14]त्रिफलासितेतरतिलाजाती[15]विडङ्गाकुली-
वाकुच्यभ्रककान्तगन्धकनिशामाधूकसारं रजः ।
पिष्ट्वा भृङ्गरसेन तस्य वटकान्खादेत्पयःपाचिता-
न्सर्वव्याधिहरान्रसायनवरान्मृत्योश्च मृत्युप्रदान् ॥ ८८ ॥

---

१ क. °वाप भा°। २ क. °योगयु°। ३ क. °पिषाम् । ४ क. कोष्ठं । ५ ग. °न्द्रियः । ६ घ. °भोमया°। ७ घ. मद्याइन्त°। ८ झ. °दन्तिब°। ९ घ. °ङ्कोलवे°। १० ग. °जात्कोलैः स°। ११ ग. °थाशक्तितो । १२ व्योषं शे°। ( साधीयान् )। १३ ग. °हरजस°। घ. °हहरजस्त°। १४ घ. °ण्डुकत्रि°। १५ ग. °जातात्रि°।

बध्वा न्यस्तमहर्द्वयं[1] कमलिनीपत्रे[2] सधात्रीरसे
धौतं भृङ्गरसेन चुम्बकरजोयुक्तं[3] द्विभागोत्तरम्।
स्थाल्यां षड्गुणसारमारिषरसे[4] यद्दारुदर्व्यां धृतौ[5]
संचाल्याम्भसि कल्कशेषितमिदं[6] शीते क्षणाद्गालयेत्॥८९॥
तस्मादादाय मूषायां स्वल्पायां द्रावयेद्घनम्।
कान्तनागोऽयमुदकेनाञ्जनं नयनामृतम्॥
कान्तपात्रे शृतं[7] क्षीरं रसायनमनुत्तमम्॥९०॥

**अथ मृत्युहारि रसः**—अयःपात्रं तिलोत्सेधप्रतप्तं चतुरङ्गुलम्।
एकविंशतिपर्यायं धात्र्या निर्वापयेद्रसे[8]॥९१॥
ततः शतपलं स्थाल्यां क्षिप्त्वा धात्रीरसोत्तमम्।
कृत्वा ततः सुपिहितं भस्मराशौ विनिक्षिपेत्॥९२॥
मासि मासि समुद्धृत्य लोहदण्डेन घट्टयेत्।
तस्मिन्विशुष्यति[9] प्राग्वद्रसं धात्र्या विनिक्षिपेत्॥९३॥
द्रवीभवति[10] तत्सर्वं वत्सरात्पत्रमायसम्।
ततः समन्ततोऽङ्गुष्ठपर्वमात्रमुखेन तु॥९४॥
आयसेन स्रुवेणायःपात्रे कल्कीकृतं ततः।
शृतं पृथक्समांशेन सेवेत मधुसर्पिषा॥९५॥
जीर्णे साज्यं रसक्षीरयूषान्यतममिश्रितम्।
षष्टिकोदनमश्नीयादुपयुज्येत वत्सरम्॥९६॥
वर्षमन्यच्च शिष्टान्नो[11] यन्त्रितात्मा कुटीं वसेत्।
अगम्यो रुग्जरामृत्युशस्त्राग्निविषैतोऽरिभिः[12]॥
जीवेद्वर्षसहस्रं वै सर्वभावेष्वतीन्द्रियः॥९७॥ इति मृत्युहारिरसः।
ताम्ररौप्यसुवर्णानामयमेव पृथग्विधिः[13]।
द्विगुणं तद्गुणोत्कर्षाज्जानीयादुत्तरोत्तरम्॥९८॥
हेमधात्रीरसं[14] क्षौद्रं गायत्रीरसभावितम्[15]।
लिहन्ननु[16] पिबेत्क्षीरं दृष्टरिष्टोऽपि जीवति॥९९॥

---

१ ज. °हरुद्वयहं क°। २ ज. °पत्रैः स°। ३ घ. युक्ताद्वि°। ४ ज. °णरक्तमा°। ५ च. धृतो। ६ घ. कल्पशे°। ७ घ. सृतं। ८ ग. °द्रसम्। ९ च. °न्विशुद्ध्यति। १० च. द्रवीभ°। ११ ग. °ष्टा-न्नो य°। १२ च. °षवारिभिः। १३ क. °ग्विधः। १४ ज. °त्रीफलं क्षौ°। १५ ज. °समर्दितम्। १६ ज. तेन युक्तं पि°।

मधुमागधिकाविडङ्गसारत्रिफलाहेमघृतं सितां च खादेत् ।
जरयानवलीढदेहकान्तिः समधातुश्च समाः शतं च जीवेत् ॥ १०० ॥
आयुष्कामः शङ्खपुष्प्या समेतं मेधाकामः काञ्चनं सोग्रगन्धम् ।
लक्ष्मीकामः पद्मकिञ्जल्कयुक्तं खादेत्कामं कामकामो विदार्या ॥ १०१ ॥
सपद्मबीजामलकाभयाक्षं सर्पिर्मधुभ्यां कनकं लिहन्तः ।
दीर्घायुषो मन्दजरोपतापाः सरीसृपाणां च भवन्त्यगम्याः ॥ १०२ ॥
मृतानि लोहानि रसीभवन्ति निघ्नन्ति रोगान्परिशीलितानि ।
किञ्चोपचारस्य समग्रयोगात्पुष्यन्ति धातूनतिदीर्घमायुः ॥ १०३ ॥ ३५८० ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये
मृतलोहकल्पनिरूपणं नामाष्टाविंशोऽध्यायः ॥ २८ ॥

---

## अथैकोनत्रिंशत्तमोऽध्यायः ।

### [ अथ विषकल्पः । ]

ईश्वर उवाच । शृणु देवि प्रवक्ष्यामि यत्रोत्पन्नं महाविषम् ।
भेदांस्तस्य वरारोहे यत्र तत्र सविस्तरम् ॥ १ ॥
देवदैत्योरगाः सिद्धा अप्सरोयक्षराक्षसाः ।
पिशाचाः किंनराश्चैव मिलित्वा च वरानने ॥ २ ॥
एकतो बलिराजश्च ब्रह्माद्याश्च तथैकतः ।
मन्थानं मन्दरं कृत्वा नागराजेन वेष्टितम् ॥ ३ ॥
क्षीराब्धिमन्थनं तत्र प्रारब्धं सुरसुन्दरि ।
निर्गतास्तत्र रत्नौघाः कामधेन्वादयः प्रिये ॥ ४ ॥
अमला कमलोत्पन्ना पश्चादुच्चैश्रवास्ततः ।
ऐरावतो महाकायो निर्गतं देवि चामृतम् ॥ ५ ॥
अतीव मन्थनाद्देवि मन्दराघातवेगतः ।
अहिराजश्रमाद्देवि विषज्वाला विनिर्गता ॥ ६ ॥
ततोऽति घोरा सा ज्वाला निमग्ना क्षीरसागरे ।
तया तत्रैव चोत्पन्नं कालकूटं महाविषम् ॥ ७ ॥
प्रलयानलसंकाशः क्रुद्धः काल इवोत्कटः ।
तं दृष्ट्वा विबुधाः सर्वे दानवाश्च महाबलाः ॥ ८ ॥

---

१ घ. खादन् । २ घ. घ्नन्त्येव । ३ ग. तुष्णाति । ४ घ. ननु दी° । ५ ज. भेदं तस्य ।
६ घ. °र्गताः । ७ क. काम । ८ क. तद्दृष्ट्वा । ९ ज. महर्षयः ।

विषण्णवदनाः[1] सद्यः प्राप्ताश्चैव मदन्तिकम् ।
ततस्तैः प्रार्थ्यमानोऽहमपिबं विषमुत्तमम् ॥ ९ ॥
ततोऽवशिष्टमभवन्मूलरूपेण तद्विषम् ।
पत्ररूपेण कुत्रापि मृत्तिकारूपतः क्वचित् ॥ १० ॥
कुत्रचित्तोयरूपेण धातुरूपेण कुत्रचित् ।
कन्दरूपेण कुत्रापि त्रयोदशविधं विषम् ॥ ११ ॥
तेषु श्रेष्ठं कन्दविषं त्रयोदशविधं स्मृतम्[2] ।
कर्कटं कालकूटं च वत्सनाभं हलाहलम् ॥ १२ ॥
वालुकं कर्दमं चैव सक्तुकं मूलकं तथा ।
सर्षपं[3] शृङ्गकं देवि मुस्तकं च महाविषम् ॥ १३ ॥
हारिद्रकमिति प्रोक्तं त्रयोदशविधं विषम् ।
कर्कटं कपिवर्णं स्यात्काकचञ्चुनिभं पुनः ॥ १४ ॥
कालकूटं ततो ज्ञेयं वत्सनाभं तु पाण्डुरम् ।
भङ्गुराकन्दवद्देवि नीलवर्णं हलाहलम् ॥ १५ ॥
वालुकं वालुकाभं च कर्दमं कर्दमोपमम् ।
सक्तुकं श्वेतवर्णं[4] तच्छुक्लकन्दं तु मूलकम् ॥ १६ ॥
सर्षपं पीतवर्णं स्याच्छृङ्गीकं कृष्णपिङ्गलम् ।
मुस्ताभं मुस्तकं प्रोक्तं रक्तवर्णं महाविषम् ॥ १७ ॥
हारिद्रकं पीतवर्णं विषभेदाः प्रकीर्तिताः ।
चतुर्धा वर्णभेदेन विषं ज्ञेयं मनीषिभिः ॥ १८ ॥
ब्रह्मक्षत्रियविट्शूद्राः श्वेतरक्ताश्च पीतकाः ।
कृष्णवर्णः क्रमाज्ज्ञेयो वर्णनामानुपूर्वशः[5] ॥ १९ ॥
मारणे कृष्णवर्णं स्याद्रक्तं तु रसकर्मणि ।
पीतवर्णं[6] क्षुद्रकार्ये श्वेतवर्णं[7] रसायने ॥ २० ॥
क्षीरोदसागरे देवि मथ्यमाने वरानने ।
उत्पन्नममृतं देवि तथोत्पन्नं महाविषम् ॥ २१ ॥
आरोटं भक्षयेद्देवि विषं सर्षपमात्रकम् ।
प्रथमे दिवसे पश्चाद्द्वितीयादौ द्विसर्षपम् ॥ २२ ॥

---

१ क. बिवर्णव° । २ च. स्मृतम् । ३ ज. °पं भृङ्गकं चेति मु° । ४ ग. °र्णं स्याच्छुक्तकं° । ५ ग. वर्णानामनु° । ६ च. °वर्णः क्षु° । ७ च. °वर्णो र° ।

पञ्चमे दिवसे देवि भक्षयेत्सर्षपत्रयम् ।
षट्सप्ताष्टदिनेऽप्येवं नवमे वेदसंख्यया ॥ २३ ॥
भक्षयेद्राजिकावृद्ध्या यावद्गुञ्जामितं भवेत् ।
मासमात्रप्रयोगेण कुष्ठान्यष्ट हरेद्विषम् ॥ २४ ॥
पुण्डरीकं सविस्फोटं श्वेतमौदुम्बरं तथा ।
छिन्नाभिन्नं कपालाख्यं क्लिन्नाह्वं शवगन्धि च ।
कुष्ठानि गदितान्यष्ट हन्यादेवि महाविषम् ॥ २५ ॥
षण्मासस्य प्रयोगेण कामरूपो भवेन्नरः ।
संवत्सरप्रयोगेण सर्वरोगान्व्यपोहति ॥ २६ ॥
द्विवत्सरप्रयोगेण दिव्यदेहो भवेन्नरः ।
मात्रया भक्षितं देवि विषमप्यमृतायते ॥ २७ ॥
मात्राधिकं वरारोहे ह्यमृतं वा विषं भवेत् ।
अमृतं सहसा युक्तं शीलितं विषमेव वा ॥ २८ ॥
सात्म्यासात्म्यं विकाराय मृत्यवे च वरानने ।
वेगान्यष्ट प्रजायन्ते सहसा विषशीलिनः ॥ २९ ॥
प्रथमे त्वग्विकारः स्याद्द्वितीये वेपथुर्भवेत् ।
दाहो वेगे तृतीये स्याच्चतुर्थे विकृतो भवेत् ॥ ३० ॥
फेनोद्गतिः पञ्चमे स्यात्स्कन्धयोर्भञ्जता ततः ।
जाड्यता सप्तमे वेगे चाष्टमे मरणं ध्रुवम् ।
एवं ज्ञात्वा वरारोहे प्रतीकारं समाचरेत् ॥ ३१ ॥
पित्तान्तं वमनं कुर्यादामान्तं *रेचनं तथा ।
जातीनीलीश्वरीसिन्धुकाचमाच्यद्रिकर्णिका ॥ ३२ ॥
त्रिफला करवीरं च कुष्ठं मधुकजीरकम् ।
क्षीरवृक्षत्वगेलेति विषघ्नोऽयं गणः स्मृतः ॥ ३३ ॥
विषघ्नं गोघृतं देवि माङ्गल्यं जीवनं स्मृतम् ।
अश्वगन्धां सगोजिह्वां त्रिशूलीं त्रिफलामपि ॥ ३४ ॥
प्रथमं भक्षयित्वा च सेवयेद्गरलं ततः ।
ब्रह्मचर्यं वरारोहे विषकाले समाचरेत् ॥
पथ्यं स्वस्थमना भुक्त्वा तदा सिद्धिर्न संशयः ॥ ३५ ॥

* इत्यक्षराणि मयैव कल्पितानि ।

१ झ. त्युक्तं । २ अ. °सात्म्यवि°। ३ झ. वाहो मोहस्तृती°।

गव्ये क्षीरघृते पेये शाल्यन्नमिदमेव च ।
शीतलं च पिबेत्तोयं पित्तलानि च वर्जयेत् ॥ ३६ ॥
जाङ्गलानि च मांसानि छागलोहं च मद्गुरान् ।
शर्करां माक्षिकं क्षीरं सेवनीयं प्रयत्नतः ॥
एकादेवि सदा पथ्यमपथ्यं दूरतस्त्यजेत् ॥ ३७ ॥
उद्धृतं फलपाकेन नवं स्निग्धं घनं गुरु ।
अव्यापन्नं विषहरैरवातातपशोषितम् ॥ ३८ ॥
रक्तसर्षपतैलेन लिप्ते वाससि धारितम् ।
सक्तुकं मुस्तकं शृङ्गीवालुकं सर्षपाह्वयम् ॥ ३९ ॥
वत्सनाभं च कर्मण्यं कालकूटादिकं ततः ।
न जात्वन्यत्प्रयोक्तव्यं विषे तीक्ष्णे च चारिते ॥ ४० ॥
अतिमात्रे च कर्मण्ये पेयं घृतमनन्तरम् ।
सभार्ङ्गीदधिधूमोत्थं सारिवातन्दुलीयकम् ॥ ४१ ॥
आगारधूममञ्जिष्ठायष्ट्याह्वैर्वा समन्वितम् ।
लिह्याद्वा मधुसर्पिर्भ्यां चूर्णितामर्जुनत्वचम् ॥ ४२ ॥
टङ्कणं मेघनादेन मधुना वाऽपि पल्लवान् ।
विषं युञ्जीत नित्यं वै रसायनगुणैषिणः ।
घृतोपस्कृतदेहस्य विशुद्धस्य हिताशिनः ॥ ४३ ॥
सात्त्विकस्योदिते भानौ योज्यं शीतवसन्तयोः ।
ग्रीष्मे चाऽऽत्ययिके व्याधौ न वर्षासु न दुर्दिने ॥ ४४ ॥
न क्रोधिने न पित्तार्ते न क्लीबे राजवेश्मनि ।
क्षुत्तृष्णाश्रमघर्माध्वव्याध्यन्तरनिपीडिते ॥ ४५ ॥
गर्भिण्यां बालवृद्धेषु न रूक्षेषु न मर्मसु ।
अभ्यस्तेऽपि विषे यत्नाद्वर्जनीयान्विवर्जयेत् ॥
कट्वम्ललवणं तैलं दिवा स्वप्नानलातपान् ॥ ४६ ॥
दृग्विभ्रमं कर्णरुजमन्यांश्चानिलजान्गदान् ।
विषं रूक्षाशिनः कुर्यान्मृत्युमेव त्वजीर्णिनः ॥ ४७ ॥
अथ गोमूत्रसंयुक्तमातपे शोषयेत्त्र्यहम् ।
विषं बृंहणमेतद्धि विषस्याऽऽदौ प्रशस्यते ॥ ४८ ॥

---

१ अ. °का देवि । २ घ. °लुकास° । ३ झ. क्रमः । ४ च. वारिते । ५ घ. °धिधर्मोत्थसा° । ६ घ. °ष्टया चैव स° । ७ ज. °ना वलिप° । ८ झ. वालिप° । ९ ग. °वान् । १० च. °नगवेधि° । ११ घ. कृशेषु । १२ घ. °र्णितः ।

तत्पिबेन्मस्तुना वातज्वरे क्षीरेण पित्तजे।
यकृन्मूत्रेण कफजे सर्वजे त्रिफलाम्भसा ॥ ४९ ॥
रोध्रचन्दनषड्ग्रन्थाशर्करावृतमाक्षिकैः।
क्षीरेण च विषं युक्तं जीर्णज्वरहरं परम् ॥ ५० ॥
निकुम्भकुम्भत्रिफलासर्पिर्मधुविषैः कृतः।
निहन्ति मोदको जीर्णज्वरमेहत्वगामयान् ॥ ५१ ॥
शिखिकर्कि[1]रसोपेतं विषमज्वरजिद्विषम् ॥ ५२ ॥
विषं यष्ट्याह्वयं रास्ना सेव्यमुत्पलकन्दकम्।
तन्दुलोदकपीतानि रक्तपित्तस्य भेषजम् ॥ ५३ ॥
रास्नाविडङ्गत्रिफलादेवदारुकटुत्रयम्।
पद्मकं क्षौद्रममृताविषं च श्वासकासजित् ॥ ५४ ॥
सितारसविषक्षीरप्रवालमधुनाऽन्विताः।
श्वासहिध्मापहा लीढाश्छर्दिघ्नास्तु विषान्विताः[2] ॥ ५५ ॥
क्षौद्रोशीर[3]मधुक्षाररजनीकुटज[4]त्वचः।
च्यवनप्राशनोपेतं विषं क्षपयति क्षयम् ॥ ५६ ॥
विजयापिप्पलीमूलं पिप्पलीद्वयचित्रकैः।
पुष्कराह्वासटीद्राक्षायवानीक्षार[5]दीप्यकैः ॥ ५७ ॥
सितायष्टिद्विबृहतीसैन्धवैः पालिकैः पचेत्।
सविषार्धपलैः प्रस्थं घृतात्तज्जीर्णभुक्पिबेत् ॥ ५८ ॥
दुर्नाममेहगुल्मार्श[6]तिमिरक्रिमिपाण्डुकान्[7]।
गलग्रहग्रहोन्मादकुष्ठानि च नियच्छति ॥ ५९ ॥

**अथ विषविद्रावणो घृतः**—मुस्तावत्सकपाठाग्निव्योषप्रतिविषाविषम्।
धातकीमोचनिर्यासं[8] चूतास्थि[9]ग्रहणीहरम् ॥ ६० ॥
कृच्छ्रघ्नं विषपथ्याग्निदन्तीद्राक्षानिशावृषाः।
शिलाजतु विषं त्र्यूषमुदावर्त्ताश्मरीहरम् ॥ ६१ ॥
गोमूत्रक्षीर[10]सिन्धूत्थविषपाषाणभेदकम्।
वज्रवद्दारयत्येतदेकतः[11] पीतमश्मरीम् ॥ ६२ ॥
त्रिफलास्वर्जिकाक्षारै[12]र्विषं गुल्मप्रभेदनम्।
पिप्पली पिप्पलीमूलं विषं शूलहरं तथा ॥ ६३ ॥

१ ख. °कर्णिर°। २ घ. °न्वितः। ज. °न्विता। ३ ग. क्षौद्रक्षीर°। ४ घ. °कुष्ठज°। ५ घ. °नीसार°। ६ झ. °ल्मार्शति°। ७ ग. °ण्डुकाः। ८ क. °र्यासचू°। ९ ग. चूलास्थि°। १० घ. °त्र्क्षारसिन्धूत्थविषं पा°। ११ ज. त्येव तदन्तः पी°। १२ ग. °क्षारे वि°।

विषं द्रवन्तीम[1]धुकं द्राक्षारास्नासठीक[2]णाः।
वि[3]षं वेल्लमिशिक्षीरं गुल्मप्लीहनिबर्हणम् ॥ ६४ ॥
प्लीहोदरघ्नं पयसा शताह्वाक्रमिजिद्विषम्।
वायसीमूलनिष्क्वाथपीतं कुष्ठहरं विषम् ॥ ६५ ॥
पर्य[4]स्या राजवृक्षत्वक्त्रायन्ती बाकुची ब[5]लात्।
प्लीह[6]घ्नी[7]भकणाभ्यां च विषं क्वाथे[8]न कुष्ठजित् ॥ ६६ ॥
अवल्गुजै[9]लकजयाबिडक्षारद्वयं विषम्।
लेप[10]ः ससैन्धवः पिष्टो वारिणा कुष्ठनाशनः ॥ ६७ ॥
चित्रकार्कजटाहस्ति[11]पिप्पलीबाकुचीविषैः।
सच[12]न्द्रकैरेडगजकरञ्जफलसैन्धवैः ॥ ६८ ॥
सव्योष[13]सर्जिकाक्षारयवक्षारनिशा[14]ह्वयैः।
अगारधूमसहितैर्बस्तमूत्रेण कल्कितैः ॥ ६९ ॥
भल्लातकाग्निशम्याकविषैर्वा मूत्रपेषितैः।
लेपो विचर्चिकादद्रुरसिकाकिटिभापहः ॥ ७० ॥
शम्याकपत्रत्वङ्मूलं विषं तक्रं च तद्गुणम्।
कुष्ठतुम्बरुबीजानि वाजिगन्धाम्लवेतसम् ॥ ७१ ॥
हरिद्रा वायसी रास्ना हरितालं मनःशिला।
पटोलनिम्बपत्राणि कणागन्धकसैन्धवम् ॥
विषं दारु शिरीषास्थि तत्र लेपेन कुष्ठजित् ॥ ७२ ॥
करञ्जकरवीरार्कमालतीरक्तचन्दनैः।
आस्फोताकुष्ठमञ्जिष्ठासप्तच्छदनिशानतैः ॥ ७३ ॥
सिन्धुवारवचाक्ष्वेलैर्गवां मूत्रे चतुर्गुणे।
सिद्धं कुष्ठहरं तैलं दुष्टव्रणविशोधनम् ॥ ७४ ॥
कुष्ठाश्वमारभृङ्गार्कमूलस्नुक्क्षीरसैन्धवैः।
तैलं सिद्धं विषावाप्यमभ्यङ्गात्कुष्ठजित्परम् ॥ ७५ ॥
भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः।
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ॥ ७६ ॥
ब्राह्मीरसार्कजक्षीरगोशकृद्रससंयुतम्।
प्रस्थं सर्षपतैलस्य सिद्धमाशु व्यपोहति ॥ ७७ ॥

---

१ च. °धुकद्रा°। २ क. °कणा। ३ ग. विषवे°। ४ झ. °यसा रा°। ५ च. बलान्। ६ ग. °हघ्नाभ°। ७ च. °घ्नीटङ्कणा°। ८ च. °थे च कु°। ९ झ. °जैडगजयोर्बीजं क्षा°। क. °जैकविज°। १० घ. °पः सैन्धवसंपि°। ११ क. °जहास्तिन्या पि°। १२ झ. °चण्डकै°। १३ घ. °षस्वर्जि°। १४ क. °शाद्वयैः।

पानाद्यैः शीलितं कुष्ठदुष्टनाडीव्रणाप[1]चीः ।
विषं भल्लातकी[2]द्वीपिगुञ्जानिम्बफलैर्जयेत् ॥ ७८ ॥
लेपोऽम्ल[3]पिष्टैः श्वित्राणि पुण्डरीकं च दारुणम् ॥ ७९ ॥
ककुभारुष्करद्वीपिस्पृक्कापत्रैलवालुकम् ।
पिष्टं[4] खादिरतोयेन त्रिरात्रमुषितं पिबेत् ॥ ८० ॥
श्वित्री विषेण संघृष्टं तत्तत्स्फोटान्किलास[5]जान् ।
कण्टकेन विभिद्याशु लेपैर्लिम्पेच्च कौष्टिकैः ॥ ८१ ॥
अथवा करवीरार्कमूलबाकुचिकाविषैः ।
बस्ताम्बुपिष्टैः सद्वीपिद्विपपिप्पल्यरुष्करैः ॥ ८२ ॥

**अथाऽऽस्तिकोक्तं श्वित्रारि तैलं**—लाक्षासुराह्वमञ्जिष्ठाकुष्ठपद्मकसारिवाः ।
गुञ्जा मही कुरबको लाङ्गली वज्रकन्द[6]कः ॥ ८३ ॥
वाराहीकन्दका[7]स्फोता सप्ताह्वा गिरिकर्णिका ।
अर्काश्वमारयोर्मूलं नागपुष्पं नतं निशे ॥ ८४ ॥
[8]दन्तीविषं हस्तिविषं पिप्पल्यो मरिचानि च ।
तैस्तैलं कटुतैलं वा[9] चित्रस्याभ्यञ्जनं पचेत् ।
सवर्णकरणं श्रेष्ठमास्ति[10]कस्य वचो यथा ॥ ८५ ॥
एरण्ड[11]तैलं त्रिफला गोमूत्रं चित्रकं विषम् ।
सर्पिषा सहितं पीतं वालार्तत्वमपोहति ॥ ८६ ॥
कोरकं[12] चिरनि[13]ष्क्काथैर्लाङ्गलीविषसर्षपैः ।
गन्धका[14]ङ्कोल्लमरिचैः सस्नुक्क्षीरैर्विपाचितम् ॥
जयेज्ज्योतिष्मतीतैलमनलत्वग्गदानपि ॥ ८७ ॥
स्वरसं बीजपूरस्य वचाब्राह्मीरसं घृतम् ।
वन्ध्या पिबेत सविषं[15] सा पुत्रैः परिवार्यते ॥ ८८ ॥
वीरालाङ्गलिकादन्तीविषपाषाणभेदकैः ।
[16]प्रयोज्यो मूढगर्भाणां प्रलेपो गर्भमोचनः ॥ ८९ ॥
देवदारु विषं सर्पिर्गोमूत्रं कण्टकारिका ।
वचा वाक्स्खलनं हन्ति बुद्धेश्च परिवर्धनम् ॥ ९० ॥
विषं सर्पिः सिता क्षौद्रं तिमिरापहमञ्जनम् ।
विषं चैकमजाक्षीरकल्कितं घृतधूपितम् ॥ ९१ ॥

---

१ ज. पहम् । २ क. °कीदन्तीगु° । ३ घ. °पित्तैः श्वि° । ४ घ. °ष्टं खदि° । ५ ग. °साजित् । ६ क. °न्दका । ७ घ. °स्फोतस° । ८ घ. दान्ती° । ९ घ. वा श्वित्र° । १० च. °स्तिकयस्य । ११ घ. °तैलत्रि° । १२ ज. °कं चीरनिष्क्काथे लाङ्ग° । १३ घ. °ष्क्काथे लाङ्ग° । १४ ग. °ङ्कोलम° । १५ घ. °षं सुपु° । १६ घ. प्रयोज्यं ।

विषं धात्रीफलरसैरसकृत्परि[1]वारितम् ।
अञ्जनं शङ्खसहितं प्रगाढं तिमिरं जयेत् ॥ ९२ ॥
विषमिन्द्रायुधं स्तै[2]न्यैर्घृष्टं काचजिदञ्जनम् ॥ ९३ ॥
बीजपूररसैर्घृष्टं विषं तद्वत्सितान्वितम् ।
विषं मागधिका द्वे च[3] निशि काचघ्न[4]मञ्जनम् ॥ ९४ ॥
शुक्रार्मजिद्विषं कृष्णायुक्तं गोमूत्रभावितम् ।
समुद्रफे[5]नैस्फटिकाकुरुविन्दरसाञ्जनम् ॥ ९५ ॥
कूर्मपृष्ठं च तुल्यानि तेभ्योऽर्धांशं मनःशिला ।
अर्धमानानि मरिचसैन्धवायोरजांसि च* ॥
अथो यथो[6]त्तरं दद्यादयसा च समं विषम् ॥ ९६ ॥

**अथ सर्वनेत्रामयहरा वर्तिः**—आगारधूमसहितैर्बस्तमूत्रेण कल्कितैः ।
भल्लातकाग्निशम्याकविषैर्वा मूत्रपेषितैः ॥
लेपो विचर्चिकादद्रु[7]रसिकाकिटिभापहः ॥ ९७ ॥

**अथ कुष्ठजिल्लेपः**—शम्याकपत्रत्वङ्मूलं विषं तक्रं च तद्गुणम् ।
विषं तुम्बुरुबीजानि वाजिगन्धाम्लवेतसम् ॥ ९८ ॥
हरिद्रावायसीरास्नाहरितालं मनःशिला ।
पटोलनि[8]म्बपत्राणि कणागन्धकसैन्धवम् ॥ ९९ ॥
विषं दारु शिरीषास्थि तक्रं लेपेन कुष्ठजित् ॥ १०० ॥

**अथ कुष्ठहारि तैलम्**—करञ्जकरवीरार्कमालतीरक्तचन्दनैः ।
आस्फोताकुष्ठमञ्जिष्ठासप्तच्छदनिशानतैः ॥ १०१ ॥
सिन्धुवारवचाक्ष्वेलैर्गवां मूत्रे चतुर्गुणे ।
सिद्धं कुष्ठहरं तैलं दुष्टव्रणविशोधनम् ॥ १०२ ॥

**अथ नवनेत्रवर्तिः**—कुष्ठाश्वमारभृङ्गार्कमूलस्नुक्क्षीरसैन्धवैः ।
तैलं सिद्धं विषावापमभ्यङ्गात्कुष्ठजित्परम् ॥ १०३ ॥
भद्रश्रीदारुमरिचद्विहरिद्रात्रिवृद्घनैः ।
गोमूत्रपिष्टैः पलिकैर्विषस्यार्धपलेन च ॥ १०४ ॥
ब्राह्मीरसार्क[9]जक्षीरगोशकृद्रससंयुतम् ।
प्रस्थं सर्षपतैलस्य सि[10]ध्ममाशु व्यपोहति ॥ १०५ ॥
*रसक्रियेयं मधुना पिल्लशुक्रार्मकाचनुत् ॥ १०६ ॥

---

* † * पूर्वोत्तरपुष्पाचिन्हद्वयसंधानेन किं भविष्यति ? ।

---

१ क. °रिभावित°। २ ज. स्तन्ये घृष्टं। ३ ज. च काचघ्नं हितम°। ४ झ. °घ्नमौषधम्। ५ झ. °नस्फुटिककु°। ६ क. °त्तरीं द°। ७ च. °रास्तिका°। ८ क. °निम्बुप°। ९ क. °कैजं क्षीरं गो°। १० क. सिद्धमा°।

**अथ सूर्यप्रभा**—अभीक्ष्णं शीततोयेन सिञ्चेन्नेत्रे [1]विषाञ्जिते।
रक्तचन्दनमञ्जिष्ठातिन्तिणीफ[2]लैसक्तुकैः।
अयसा लोध्रकतकनिशाशङ्खकणोषणैः ॥ १०७ ॥
मनःशिलाकरञ्जाक्षबीजोग्राफेनसैन्धवैः।
[3]अजाक्षीरैः समवि[4]षैर्वर्तयो विहिता हिताः।
शुक्लार्ममांसपिल्लेषु ग्रन्थिगण्डार्बुदेषु च ॥ १०८ ॥
रसोनकन्दमरिचविषं सर्षपसैन्धवैः।
पिल्ले[5]क्षणहितं कार्यं सुरसारसपेषितैः ॥
पूरयेत्सर्पिषा चानु सर्पिरेव च [6]पाययेत् ॥ १०९ ॥
मधूक[7]सारमधु[8]कविषक्षीरजलैर्घृतम्।
पक्वं संतर्पणं श्रेष्ठं न[9]क्तान्ध्ये त्वचिरोत्थिते ॥ ११० ॥
अञ्जनं नरपित्तेन [10]रोचनं मधुशृङ्गिभिः।
स्वर्जिकाक्षारसिन्धू[11]त्थं[12] शुक्लशुक्लं वरं विषम् ॥
कर्णयोः पूरणं [13]तीव्रकर्णशूलनिबर्हणम् ॥ १११ ॥
नस्यं शिरोरुक्शम[14]नं प्रत्यक्पुष्पीसिताविषम्।
अथ[15]वा कतयष्ट्या[16]ह्वशर्करा विषसंयु[17]ताः ॥
शुण्ठी पथ्या विषं पाठा त्रायन्ती पूतिनासजित् ॥ ११२ ॥
प्रपौण्ड[18]रीकमञ्जिष्ठावि[19]षतिन्दुसमुद्भवैः।
निहन्ति साधितं तैलं गण्डूषेण मुखामयान् ॥ ११३ ॥
[20]ऐलाखदिरकङ्कोलजातीकर्पूरचन्दनैः।
बोलाब्दवालैर्द्विगु[21]णविषैः साराम्बुपेषितैः ॥ ११४ ॥
समूत्रा वटिकाः [22]क्लृप्ता धृता घ्नन्ति मुखामयान्।
कटु[23]तैलविषं नस्यं पलितारुंषिकापहम् ॥ ११५ ॥
स्नुह्यर्कक्षीरभृङ्गाम्बुगोमूत्रहलिनीविषैः।
गुञ्जाविशालामरिचैः कटुतैलं विपाचितम् ॥ ११६ ॥

---

१ झ. °षान्विते। २ च. °लसूतकैः। ३ घ. आजक्षी°। ४ घ. विषस°। ५ ग. °क्षणाहि°। ६ च. पाचये°। ७ क. °सारं म°। ८ क. °धुकं वि°। ९ घ. °क्तान्ध्यत्वे चि°। च. °क्तान्धे त्व°। १० झ. रोचना। ११ ज. °न्धूत्थशुक्लशुक्लाम्बरं। झ. °न्धूत्यशुक्ले पित्तं व°। १२ क. °त्थं तथा शुक्लव°। १३ झ. तीव्रं क°। १४ घ. °नं पृथक्पु°। १५ च. °वा कृत°। घ. °वा नत°। ज. °वा घृत°। १६ क. ज. °ष्ट्याह्वा श°। १७ ज. घ. °युता। १८ घ. °रीकं म°। १९ घ. °विषं ति°। २० घ. शालः ख°। च. शालं ख°। ज. शालाख°। २१ च. °गुणं वि°। २२ च. कृत्वा। २३ घ. °तैलं वि°।

खलतिं शमयत्यम्लपिष्टमष्टगुणं विषात् ।
सिन्धूत्थकार्पासफलं पिण्डितं सह सर्पिषा ॥
क्षीरेणाऽऽजेन वा लेपाद्विषैदिग्धायुधव्रणुत् ॥ ११७ ॥
विषं रसाञ्जनं भार्ङ्गी वृश्चिकाली महासहा ।
सवेदने सपाके च व्रणे दुष्टे प्रलेपनम् ॥ ११८ ॥
कृतमालार्कपूतीकवत्सकातिविषाविषम् ।
सिद्धं यदिङ्गुदक्काथैः सर्पिस्तदपचीहरम् ॥ ११९ ॥

**अथापचीघ्नं तैलम्**—काकादनीमागधिकानलिकातुण्डिकाफलैः ।
जीमूतबीजकर्कोटविशालाकृतवेधनैः ॥ १२० ॥
पाठान्वितैः पलार्धांशैर्विषकर्षयुतैः पचेत् ।
प्रस्थं करञ्जतैलस्य निर्गुण्डीस्वरसाढके ॥ १२१ ॥
तज्जयेदपचीं घोरां नावनाभ्यङ्गपानतः ॥१२२॥ इत्यपचीघ्नं तैलम् ।
गुञ्जाटङ्कणशिग्रुमूलरजनीशम्याकभल्लातका[4]-
स्नुह्यर्काग्निकरञ्जसैन्धववचाकुष्ठाभयालाङ्गलीः ।
वर्षाभूशठभूशिरीषवरणव्योषाश्वमाराविषं
गोमूत्रं शमये[7]द्विलिप्तमपचीग्रन्थ्यर्बुदश्लीपदान् ॥ १२३ ॥
[ इत्यपचीग्रन्थिश्लीपदनाशनलेपः ।
विषे प्रतिविषं युञ्ज्यान्मन्त्रतन्त्रैरसिद्ध्यति ।
अतीते पञ्चमे वेगे सप्तमस्यानतिक्रमे ॥ १२४ ॥
[9]युञ्ज्यान्मूलविषं [10]सर्पदष्टानां पानलेपयोः ।
चतुर्भिः षड्भिरष्टाभिर्हीनमध्योत्तमा [11]यवैः ॥ १२५ ॥
[12]मात्रां विषस्य [13]मूलस्य प्रयुञ्जीत च सर्वदा ।
दष्टस्य द्वौ यवौ कीटैस्तिलमात्रं तु वृश्चिकैः[14] ॥ १२६ ॥
नैवत्वस्त्वस्थे पाने तु लूतादष्टस्य नेष्यते ।
[15]वृश्चिपा लेपयेद्दंशं तस्य ज्ञात्वा सुनिश्चितम् ॥ १२७ ॥
[16]क्षीरि[17]रक्षीरघृतैर्युक्तं पीतं हन्ति विषं विषम् ।
ससिन्दुवारतगरं मृतसञ्जीवनं विषम् ॥ १२८ ॥

---

१ ग. °द्विपदाद्यायु°। २ घ. °षदुग्धा°। झ. °षदग्धा°। ३ घ. °लिकोत्तुण्डि°। ४ ज. °तकस्नु°। ५ झ. °भूषठ°। ६ ज. °शठिभू°। ७ ख. °द्विलुप्त°। ८ घ. °विषे यु°। ९ ज. गुञ्जामूलं वि°। १० च. सर्पदंष्ट्रानां । ११ च. मताः । १२ च. मात्रा । १३ च. मेतस्य । ज. मेलस्य । १४ घ. °श्चिके ॥१२६॥ १५ ज. व्रश्चिके । झ. व्रश्चाया । १६ ज. क्षीरीक्षी°। १७ झ. °रक्षौद्रघृतैर्नित्यं पी°।

शिरीषकुसुमं पत्रं विषमाखुविषापहम् ।
देवदारु नतं मांसी द्रामिली बाकुची विषम् ।
कुष्ठं च पानलेपाभ्यां समस्तविषनाशनम् ॥ १२९ ॥
मनःशिला[1]ञ्जना[2]लैलासिन्दुवा[3]रामरा[4]ह्वयम् ।
सरक्तं[5] कुङ्कुमविषं ध्मातं[6] निःसंज्ञबोधनम् ॥ १३० ॥
दाहे विषोद्भवे लेपः सक्तुक्षीरघृतैर्युतः ।
अन्येष्वपि च रोगेषु शेषोपायपरिक्षये ॥ १३१ ॥
प्रत्यहं विषकन्दस्य त्रियवं[7] यवमेव वा ।
शुद्धस्य राजिकावृद्ध्या वर्षं भुक्त्वा जयेद्गदान् ॥ १३२ ॥
वचागन्धकसिन्धूत्थत्रायमाणाम्लवेतसम् ।
व्योषाग्निवेल्लपाठा[8]म्लकर्णी[9]करिकणाविषम् ॥ १३३ ॥
शा[10]ङ्गेरीनागदमनीवायसीत्रिफलारसैः ।
भावितं मधुसर्पिर्भ्यां भक्षितं स्याद्रसायनम् ॥ १३४ ॥
विषशुल्बरसव्योषगन्धकानां पलं पलम् ।
पलद्वयं हरीतक्याश्चित्रकस्य पल[11]त्रयम् ॥ १३५ ॥
कौन्तीमुस्ताचतुर्जातं कर्षांशं च विचूर्णितम् ।
त्रिगु[12]णश्च गुडः कार्या वटिका माषसंमिता ॥ १३६ ॥
भक्षयेत्तां जराग्रस्तो महारोगैश्च पीडितः ॥ १३७ ॥
हरिद्रा निम्बपत्राणि पिप्पल्यो मरिचानि च ।
मुस्ताविडङ्गं मूत्रेण पिष्टमाजेन पिण्डितम् ॥ १३८ ॥
नावनाञ्जनपानेषु गोमूत्रासृग्रसाञ्जनैः ।
जयेत्प्रयुक्तं विषमज्वरान्सघृतसानिलम् ॥ १३९ ॥
सर्वजं समधु व्योषं गवां मूत्रेण सू[13]तकम् ।
चन्दनस्य कषायेण रक्तपित्तं वृषस्य वा ॥ १४० ॥
क्षयं क्षीराश्वगन्धाभ्यां कासश्वासं समाक्षिकम् ।
तक्रेण ग्रहणीरोगं कृच्छ्रं तन्दुलवारिणा ॥ १४१ ॥
प्रमेहं मधुना गुल्मं शूलं च गुडवारिणा ।
पाण्डुशोफे गवां क्षीरेणाम्भसा त्रैफलेन वा[14] ॥ १४२ ॥

---

१ ग. °लाजलालै°। २ ज. °ञ्जलालै°। ३ ग. °वारम°। ४ झ. °महाह्व। ५ ज. सरक्ता°। ६ ज. °तं नृसं°। ७ झ. °वं द्वयमे°। ८ झ. °ठाब्दकिण्वं क°। ९ ग. °कटीक°। ज. °कण्टकारि°। १० झ. चाङ्गेरी°। ११ ज. °लद्वय°। १२ घ. °गुणं च गु°। १३ ज. शीतकम्। १४ च. च°।

गवां मूत्रेण कुष्ठानि क्षौद्रे[1]णौदुम्बराह्वयम् ।
तक्रेण युक्तं चाऽऽलेपाद्दद्रुपामाविचर्चिकाः ॥ १४३ ॥
पीतमुष्णाम्भसा वायुं तुलस्याऽऽलेपनाद्ग्रहान् ।
समूत्रं वि[2]स्मृतिं नस्येनाञ्जनेन दृगामयान् ॥ १४४ ॥
स्यन्दाधिमन्थौ सस्तन्यममर्मकोपं सशोणितम् ।
सकासमर्दं [3]काचा[4]दीन्सभृङ्गोदं नि[5]शोन्धताम् ॥ १४५ ॥
रम्भाकन्दाम्भसा पुष्पं पिल्लं ताम्रमधूत्[6]कटम् ।
[7]सतूलमार्तिं दन्तानां गण्डूषेण विलेपनात् ॥ १४६ ॥
सगोमूत्रं शीरः[8]शूलं सक्षौद्राम्लं क्षतव्रणान् ।
भगन्दरापचीग्रन्थीन्सक्षौद्रं सगुडं व्रणान् ॥ १४७ ॥
नारिकेलाम्भसा लिङ्गविकारान्से[9]वनात्पुनः ।
प्रदरं भृङ्गसारे[10]णं नागपुष्पस्य सर्पिषा ॥ १४८ ॥
रम्भाकन्दाम्बुसर्पिर्भ्यां पीतं लिप्तमहेर्विषम् ।
गोतक्रनरमू[11]त्राभ्यामथाऽऽखोर्वृश्चिकस्य तु ॥ १४९ ॥
सार्कक्षीरं विलेपेन लूतानां तु [12]जलौदनम् ।
शतपत्ररसाज्याभ्यां [13]विषं सर्वं च सर्वथा ॥ १५० ॥

**अथ जयगुलिका**—भस्म[14]सूतगुडक्षौद्रघृतैः सह निषे[15]विता ।
जरां जयेदतो नाम्ना गुलिकेयं जयोदिता ॥ १५१ ॥
वचाश्वगन्धामरिचोपकुल्यातालीसमुस्तापिचुमन्दपाठाः ।
विषं च तेषां वटिका जयन्त्यः [16]फले प्रयोगे च जयासमानाः ॥ १५२ ॥

## अथ द्वितीयजयवटिका ।

[17]वासामृताखदि[18]रनिम्बविडङ्गपथ्याक्वाथे विषत्रिकटुचित्रकलोहतिक्ताः ।
आवाप्य माषतुलिता वटिका प्रणीता क्षौद्रान्विता क्षपयति क्षयकुष्ठ[19]जातम् ॥ १५३ ॥
कान्ताभ्रकशि[20]लाधातुविषसूतकमाक्षिकम् ।
[21]शीलितं मधुसर्पिर्भ्यां व्याधिवा[22]र्धकमृत्युजित् ॥ १५४ ॥

---

१ घ. °द्रेणोदु° । २ घ. विस्मृतं । ३ ज. कासादी° । ४ च. °दीन्सुभ्र भृङ्गान्निशा° । घ. °दीसभ्र-भृङ्गान्निशा° । ५ घ. °शान्ध्यता । ६ च. °त्कटः । ७ च. समूल° । ८ क. °शूले स° । ९ क. °वया पुनः । १० झ. °ण नग° । ११ क. °त्राभ्यां विषं सर्वं च सर्वथा ॥ १४९ ॥ १२ ज. समेजलम् । झ. जलोदरम् । १३ ज. विषमी संनियच्छति ॥ १५० ॥ १४ ज. °सूतं गु° । १५ ज. °वितम् । १६ ज. फलप्र° । १७ ज. वत्सामृ° । १८ ज. °रविश्ववि° । १९ च. °जातान् ॥ १५३ ॥ २० च. °लायां तु विषं सू° । २१ ज. शीतलं । २२ घ. °र्धक्यमृ° ।

नष्टशुक्रः पयोद्राक्षाकपिकच्छू[1]महाविषम् ।
शीलयेन्मधुसर्पिर्भ्यां सखर्जूरं सयष्टिकम् ॥ १५५ ॥
शत्रुप्रयुक्ताद्विषतो गराद्वा लूताभुजङ्गाखुविषाज्जरायाः ।
अकालमृत्युग्रहपाप्मनोऽपि विषाशिनो नास्ति भयं नरस्य॥१५६॥३७३६॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये विषकल्पो नामैकोनत्रिंशोऽध्यायः ॥ २९ ॥

---

## अथ त्रिंशत्तमोऽध्यायः ।

### [ अथ रसकल्पः । ]

**अथ मृतसूताध्यायः**—पीतासवाम्ल[2]खात्सत्वं कान्ताद्वा[3] तीक्ष्णमेव वा ।
चतुःषष्टि[4]तमांशेन प्रमितं क्षिप्तमल्पशः ॥ १ ॥
तप्तखल्वे[5]ऽम्लयोगेन[6] श्लक्ष्णवस्त्रा विमर्द[7]नात् ।
भूर्जे[8] क्षाराम्ललवण[9]स्नुह्यर्कक्षीरलेपिते ॥ २ ॥
बद्धं वस्त्रावृते स्विन्नमम्ले समर[10]से रसम् ।
धौत[11]मुष्णारनालेन शुष्कमङ्गुलिमर्दितम् ॥ ३ ॥
पचेत्कच्छपयन्त्रस्थमष्ट[12]मांशं षडावृतम् ।
स्व[13]प्रमाणं रसं तिष्ठे[14]ज्जीर्णे ग्रासे त्वजीर्यति ॥ ४ ॥
पातयेदासवाम्लेन मर्द[15]येत्स्थापयेच्च तम्[16] ।
जारणे जारणे वह्निं[17] ग्रासं च परिव[18]र्धयेत् ॥ ५ ॥
द्विगुणं योजयेदेवं सत्वमभ्रकसंभवम् ।
पूती[19]लोहं विषं मूत्रं रसकं गन्ध[20]कत्रयम् ॥ ६ ॥
न युञ्ज्या[21]ज्जारणे सूत[22]स्तैर्जीर्णैः स्फोटकुष्ठ[23]जित् ।
गुञ्जासैन्धवयोश्चूर्णं देवदालीदलद्रवैः ॥ ७ ॥
टङ्कणं किंशुकरसैर्जम्बीराम्लेन चू[24]लिकाम् ।
मूलकक्षारगोमूत्रप्रसादे[25]न च गन्ध[26]कम् ॥ ८ ॥
स्वर्जिका[27]भूखगव्योषशिग्रुमूलरसेन च ।
श[28]तशो भावयेत्सर्वं बिडोऽयं वडवानलः ॥ ९ ॥

---

१ च. °च्छूर्महा°।२ झ. °वाम्लं खा°। ३ झ. °द्वा पीतमे°। ४ झ. °ष्टिसमां°। ५ झ. °ल्वेऽल्पयोगेन प्रस्त्रवन्तं नि°।६ ज. °न सूक्ष्मवस्त्रवि°। ज. °न सूक्ष्मवक्त्रवि°।७ ख. °र्दयेत् । ८ च. भूर्जक्षा°। ९ च. वर्णं स्नु°। १० ग. °रसै र°। ११ झ. °तमम्लार°। १२ ज. °मांशविडा°। १३ ज. सप्र°। १४ च. °जीर्णो ग्रा°। १५ झ. °येत्स्वेदये°।१६ घ. ताम् । १७ ज. वह्निग्रा°। १८ ट. °वर्जये°। १९ घ. पूतिलोहवि°। २० घ. °न्धकं त्र°। २१ ज. °ञ्ज्याज्जर°। २२ ज. °तस्तज्जीर्णैः । २३ च. °ष्ठकृत् । २४ झ. शूलिकाम् । २५ ग. °दे नवगन्धकः ॥ ८ ॥ २६ च. °न्धकः ॥ ८ ॥ २७ झ. °काभ्रख°। २८ ज. शतधा ।

एवमग्निसहो[1] हंससंयुक्तः केवलोऽथ वा ।
नि[2]यामकौषधसिताङ्कोलमूलरसादिभिः ॥ १० ॥
वैक्रान्तप्रमुखैर्वाऽपि रसेन्द्रः सहमर्दितः ।
यन्त्रस्थः क्रमवृद्धेन वह्निनोर्ध्वेन पाचितः ॥ ११ ॥
मृतो[3]ऽधराग्निना तप्तोऽप्यक्षीणो नोर्ध्वमाश्रयेत् ।
अथापामार्गतैलेन तथा[4] पुष्करतन्दुलैः ॥ १२ ॥
अथवा मले[5]यूक्षीरभावि[6]तः श्वेतहिङ्गुना ।
मर्दितः पुटपाकेन भस्मतां प्रतिपद्यते ॥ १३ ॥
गोमूत्रद्रोणपु[7]ष्पाभ्यां पाकाद्वा कान्तभाजने[8] ।
कङ्गुणीकृष्णधत्तूरतैलाभ्यां वा विमर्दितः ॥ १४ ॥
मृ[9]णालतन्तुवर्ति[10]स्थः पी[11]तगन्धर्वतैलयुक् ।
ज्वलितो याममात्रं वा मृतवैक्रान्तसंयुतः ॥ १५ ॥
वन्ध्यामृताकन्दगै[12]तः पचनाद्भूधरेऽथवा ।
चपलोपलनिर्गुण्डीरसाभ्यां रसकेन वा ॥ १६ ॥
वाराहीरसयुक्तेन चक्रमर्दरसेन वा ।
गन्धपाषाणयुक्तेन बद्धं[13] वा वासे[14]सा रसम् ॥ १७ ॥
पचेद्गन्धकतैलेन यावदाखोटबन्धनम् ।
गन्धाश्मे[15]पिष्टं द्विगु[16]णगन्धं वा[17] कान्तसंपुटे ॥ १८ ॥
गन्धकाद्वा तृतीयांशं कान्तपर्पटमिश्रितम् ।
मू[18]लकान्मर्दितं लो[19]हं पर्पटान्तर्गतं धमे[20]त् ॥ १९ ॥
यद्वा गन्धकपादेन मर्दितं मूलिकारसैः ।
लोहसंपुटमध्यस्थमङ्गारैर्ध्मातमुत्खनेत् ॥ २० ॥
रोगोक्तयोगयुक्तोऽयं[21] तत्तद्रोगहरो भवेत् ।
समु[22]स्तपर्पटकाथो भस्मसूतो हरेज्ज्वरम् ॥ २१ ॥
दशमूलकषायेण पिप्पल्या च स[23]मुस्तजम् ।
माक्षिका[24]भयया वा[25]सापिप्पल्या[26] चास्रपित्तनुत् ॥
कण्टकारीकषायेण पिप्पल्या च स कासजित् ॥ २२ ॥

१ ख. °हो ज्ञात्वा सं° । ज. °हो लोहं सं° । झ. °हो लोहसं° । २ झ. नियमैनौष° । ३ ग. °तो धारा° । ४ घ. °था पौष्क° । ५ ग. °लयक्षी° । ६ ग. °विते श्वे° । ज. °वितैश्चैव हि° । झ. °वितश्चैव हि° । ७ ज. °पुष्पीभ्यां । ८ च. °जनः । ९ झ. मृनालतन्तुवह्निस्थः । १० ग. °र्तिस्थपी° । ११ घ. पीनग° । १२ ज. °गतप° । १३ झ. बध्वा । १४ झ. °समार° । १५ ज. °श्मपिष्टद्विगुणगन्धकान्तसमर्दितम् ॥१८॥ १६ क. °गुणं ग° । १७ झ. वा ताम्रसं° । १८ ज. मूलिकामार्दि° । १९ घ. लोहपर्पटान्ते गतं । झ. लोहप° २० ग. नयेत् । २१ घ. °यं न तद्रो° । २२ झ. °मुस्ताप° । २३ घ. समस्त° । २४ क. °काममया । २५ ग. वासपि° । २६ ग. °ल्या वास्र° ।

अजायाः क्षीरसिद्धेन कणायुक्तेन सर्पिषा ।
त्रिफलागन्धकव्योषगुडैर्वा क्षपयेत्क्षयम् ॥ २३ ॥
अथ लोहमयीं मूषामायामे द्वादशाङ्गुलाम् ।
मर्दितं हेमवाराहीगृहकन्यारसै रसम् ॥ २४ ॥
रसोनपिण्डे [1]दधतीं [2]लोहमय्या [3]सुरन्ध्रया ।
निर्गुण्डीपत्रनिर्या[4]सपीतपादासुगन्धया ॥ २५ ॥
गर्भमूषिकया युक्तां सचक्रां सपि[5]धानकाम् ।
लम्बितां जलपात्रस्थ[6]खर्परे द्वारि पाचयेत् ॥ २६ ॥
ऊर्ध्वं वनोत्पलैश्चित्रैरङ्गारैः खादिरैरधः ।
एवमष्टगुणे जीर्णे गन्धके क्षयकुष्ठजित् ॥ २७ ॥
हिक्कां निहन्ति रुचकबीजपूराम्लमाक्षिकैः ।
छर्दि[7]दाहौ मधुसि[8]तालाजामुद्गसिताम्बुभिः ॥ २८ ॥
अर्शांसि तैलसिन्धूत्थपुटपाचितसूरणैः ।
त्वक्पल्लवैः [9]कषायेण [10]शृतेनोदखिलाम्भसा ॥ २९ ॥
क्षीरिण्या वाऽप्यतीसारं विषूचीं कणहिङ्गुना ।
अजीर्णं काञ्जिकैरण्डक्काथपथ्यावलेहतः ॥ ३० ॥
कषायपल्लवैः पक्वं बालबिल्वं सनागरम् ।
सगुडं सरसं हन्ति बिम्बिसीं दारुणामपि ॥ ३१ ॥
बिल्वकर्कटिकागर्भं मसूरक्कथिताम्बु वा ।
[11]कृच्छ्रं मृतरसक्षीरगोक्षुरक्षीरमाक्षिकैः ॥ ३२ ॥
पारदभस्मशिलाजतु[12]कृष्णालोहमलत्रिफला[13]कुलबीजम् ।
ताप्यनिशारजकोपलकान्तव्योषरजः खपुरश्च कपित्थात् ॥३३॥
सर्वमिदं परिचूर्ण्य समांशं भावितभृङ्गरसं [14]दिवसादौ ।
विंशतिवारमिदं मधुलीढं विंशतिमेहहरं हरिदृष्टम् ॥ ३४ ॥
न्यग्रोधाद्यसनाद्यैर्वा क्काथयुक्तो मृतो रसः ।
[15]पथ्याल्लशुनगोमूत्रैः प्लीहगुल्मनिबर्हणः ॥ ३५ ॥
कलाययूषशम्बूकक्षाराभ्यां पक्तिशूलनुत् ।
सत्र्यूषणतिलक्काथेनामशूलस्य नाशनः ॥ ३६ ॥

---

१ च. दधती । २ घ. लोहमध्या । ३ च. सरन्ध्रया । ४ ज. पीतं पादांशग° । ५ घ. °धानिका° । ६ घ. °परद्वा° । ७ घ. °दाहो म° । ८ ज. °ताराजमुद्गसृता° । ९ ग. घ. कषायाणां । १० घ. शृतोनोदशिला° । ११ झ. कृच्छ्रसृत° । १२ ज. °कृष्टलो° । १३ ज. °कुबी° । १४ ज. दिवादौ । १५ ज. पथ्यालशुनगोमूत्रैः सद्यो गु° ।

नवनीतसुधाक्षारभाविता भयपोदरे ।
[1]रहितः सहितो यष्टीवारिणा कामलामये ॥ ३७ ॥
फलत्रिकादिक्काथेन पाण्डुशोफे सकामले ।
शोफे सविश्वभूनिम्बक्काथगोमूत्रसंयुतः ॥ ३८ ॥
निम्बामलककल्कुष्ठैः प्रशस्तः सामृतारसः ।
रसोनराजिकावह्निनीलिमार्कवपल्लवैः ॥ ३९ ॥
तुल्यं भल्लातकं क्षिप्त्वा क्षीरे[2] तैलं विपाचितम् ।
भूशिरीषसुपर्णाक्षोः पञ्चाङ्गमाक्षिकं घृतम् ॥ ४० ॥
रसं च लीढ्वा कुष्ठार्तो लिम्पेत्त्रिकटुना तनुम् ।
रसगन्धक[3]पिष्ट्या वा कटुतैला[4]भियुक्तया ॥ ४१ ॥
कर्पूर[5]मूलीसहनिम्बतै[6]लपातालमूली[7]रसभावितेन ।
रसेन लिह्यात्सकलं ह[8]ठं वा विचूर्णितं पुष्पर[9]सं स कुष्ठी ॥ ४२ ॥
फेनिलफला[10]हिदर्वीकन्दरसं खादतोऽनुदिनम् ।
फेनिलमूलोद्वर्तनमाचरतोऽपि च कुतः कुष्ठम् ॥ ४३ ॥
चित्रकवानरिवायसितुण्डीबाकुचिका द्विगुणाः परिपीताः ।
मूत्रयुता मृतसूतसमेतास्तक्रभुजः शमयन्ति किलासम् ॥ ४४ ॥
[11]हुतगगनमरी[12]ची बाकुचीतालपत्र्यौ सलिलरिपुनकुल्यौ कृष्णशु[13]ण्ठ्या सभृङ्गम् ।
मरिचमसितसोमश्चित्रकाङ्कोलबीजं वरतिलशशिलेखे त्वक्च शाखोटकस्य ॥ ४५ ॥
[14]फलत्रयं च तत्सर्वं मृतसूतसमन्वितम् ।
क्षीरान्नवर्तनो जग्ध्वा श्वित्रमाशु निवर्तयेत् ॥ ४६ ॥
सनिम्बपल्लवक्षौद्रैः कृमीन्हन्ति हु[15]तो रसः ।
पीतो लशुनसिद्धेन तैलेनानिलजान्गदान् ॥ ४७ ॥
विश्वैरण्ड[16]शृतक्षीरसहितो गृध्रसीं जयेत् ।
गुडाभयागुडूच्यम्बुयुक्तः पवनशोणितम् ॥ ४८ ॥
त्रिकटुत्रिफलावेल्लैः समांशो गुग्गुलुर्जयेत् ।
वातारितैलसंयुक्तः स्थौल्यं भस्मरसान्वितः ॥ ४९ ॥

---

१ ज. सहितः २ ज. क्षीरते° । ३ ग. °कयष्ट्या । ४ च. °लालियु° । ५ झ. °रवल्लीस° । ६ क. झ. तैलां पा° । ७ घ. °लीसहभा° । ८ घ. हटे वा । झ. हतं वा । ९ ग. °रसेन कु° । १० घ. °लादिद° । झ. °लाहिदार्वीक° । ११ ज. हत° । १२ ज. °चीवायसीता° । १३ घ. °ष्णपुलास° । १४ च. पल° । १५ झ. मृतो । १६ घ. °ण्डसृत° । झ. °ण्डघृत° ।

मधूदकाभ्यां युक्तो वा का[1]र्श्यं तु शर्करान्वितः ।
हिङ्गुसौवर्चलव्योषमूत्रसिद्धेन सर्पिषा ॥ ५० ॥
रसो हन्यादपस्मारमुन्मादं च तथाञ्जनात् ।
मधूककुनटीताक्ष्यपाराप[2]तैर्मलैर्युतः ॥ ५१ ॥
धान्याम्लपिष्टाष्ट[3]मपिप्पलीकान्कार्पासबीजा[4]न्करम[5]र्दनेन ।
आदाय तैलं घृतसूतयुक्तमक्षिण प्रयुञ्जीत विशीर्णरो[6]म्णि ॥५२॥
बर्बूरनिम्बकिसलाजपुरीषधू[7]मैः
कांस्येक्षुराश्मवनितास्तनजेन घृष्टम् ।
भल्लातधूपितरसाञ्जनमञ्जयित्वा
साभ्यञ्जनै[8]स्त्रपनमक्षिण रुजं निहन्ति ॥ ५३ ॥
महो[9]भेरीमूलं[10] तुरग[11]पृथुकाम्बोधि[12]कुवलं
[13]रसो जम्बीराम्लं जयति तिमिरं काचमपि च ।
उपात्तं जीमूताद्रविजधरप[14]र्णाम्बुमृदिता
[15]द्रसस्तैलं लेपादिह विविधजाड्यं च गुदजान् ॥ ५४ ॥
वटप्र[16]रोहपिण्डीतमूलत्वक्[17]कृष्णसैर्यकैः ।
केतकीस्तन[18]भृङ्गायःशकलीत्रिफलार्जुनैः ॥ ५५ ॥
पृथग्दशपलैः सार्धं चतुर्द्रोणेष्वपां पचेत् ।
अष्टभागावशिष्टेऽस्मिन्भृङ्गस्वरसपेषिते ॥ ५६ ॥
त्रिफलानीलयश्चूर्णैः पृथग्द्विपलिकैर्युतम् ।
तैला[19]ढकं [20]समक्षीरं पक्त्वा मृतरसान्वितम् ॥ ५७ ॥
[21]महानीलं समुद्रस्थं मण्डं धान्याम्लमध्यगम् ।
अभ्यङ्गविधियोगेन केशानां रञ्जनं परम् ॥ ५८ ॥
त्रिफलापटोलमूलव्योषगुडूचीविडङ्गबीजानि ।
समगुग्गुलानि मारितरसमिलितानि व्रणघ्नानि ॥ ५९ ॥
ग्रन्थीन्विलेप[22]येत्तेषां लेपान्मूलरसान्वितम् ।
नारिकेलोदकं तद्वत्पीतं हन्ति मसूरिकाः ॥ ६० ॥

१ च. °र्श्यं भूशर्करासवः ज. °र्श्यं भूशर्करासखः । २ ग. °तपलैर्यु° । ३ च. °ष्टसपि° । ४ घ. °जान्कुरम° । ५ ज. °र्दकेन । ६ च. °रोचिषा ॥ ५२ ॥ ७ क. °धूम्रैः का° । ज. धूपैः का । ८ च. न-स्तप° । ९ घ. °हाभाराम्रू° । १० ज. °लं तरगपृ° । ११ घ. पृथका° । १२ घ. °कुचलं । १३ झ. रसं जम्बीराम्ले ज° । १४ ज. °पर्ण्यम्बु° । १५ घ. °द्रसतैलाले° । ज. °द्रवैस्तै° । १६ च. °रोहं पि° । १७ ज. °कृष्टसै° ।१८ घ. °ननिर्यासः श° । १९ ज. °ढकस° । २० घ. समं क्षी° । २१ घ. महानीलसमुद्रस्थं मण्डं धान्यकमध्यगम् । ज. महामूलं मुद्रस्थं मण्डलं धान्यमध्यगम् । झ. महानीलं समुद्रस्थमण्डधान्यस्य मध्यगम् । २२ झ. °येल्लेपाद्घ्नन्तिमूल° ।

मञ्जिष्ठा शबरोद्भवं तुवरिका लाक्षा हरिद्राद्वयं
नेपाली हरितालकुङ्कुमगदा[1]गोरोचनागैरिकम् ।
पत्रं पाण्डु वटस्य चन्दनयुगं कौ[2]लेयकं पारदं
पत्तङ्गं कनकत्वचं कमलजं बीजं तथा केसरम् ॥ ६१ ॥
सि[3]क्थं तुत्थं लोहकिट्टं वसाज्यमाजं क्षीरं क्षीरवृक्षाम्बु चाग्नौ ।
सिद्धं सिध्मव्यङ्गनील्यादिनाशे वक्त्रच्छायामैन्दवीमाशु धत्ते ॥ ६२ ॥
कार्पासपल्लवानन्तार[4]सतैलयुतो हितः ।
अस्थिस्रावे मृतरसो विषे स्थावरजङ्गमे ॥ ६३ ॥
तन्दुलीयकमूलेन वीरामूलेन वा युतः ।
तन्दुलोदकसंमि[5]श्रः पाननावनलेप[6]ने ॥ ६४ ॥
सुरभिशक्रद्रसभावितकर्पूरसमन्वितो मृतः सूतः ।
स्थावरजङ्गमकृत्रिमविषजिद्गुञ्जामितो दं[7]ष्ट्रा ॥ ६५ ॥
यक्षाक्षफेनिलरसोनकटुत्रयोग्रा[8]राजीवराङ्घ्रिबकुलं लकुचा[9]म्बुपिष्टम् ।
छायाविशोषितमिदं नरवा[10]रिघृष्टं सर्पापहं सरसमञ्जनतस्त्रिवारान् ॥६६॥
[11]सर्पिषा पञ्चवर्णस्य बीजं मूलं पुनर्नवात् ।
देवदाल्याः फलं मूलं मूलं च विषपर्णतः ॥ ६७ ॥
पेषितं नरमूत्रेण सर्वथा हि विषापहम् ।
क[12]पित्थपञ्चकर्णालीरसं चाखुविषापहम् ॥ ६८ ॥
कांस्ये ताम्बूल्या नागरं पिष्टमद्भिः पत्रं शैरीषं पि[13]प्पली छागदुग्धैः ।
पत्रं कार्पासात्सर्पिषा वा[14] विलेपात्सूतेनोपेतं वृश्चिकानां विषघ्नम् ॥६९॥
भावितश्चणकाम्लेन वस्त्रमम्लेन मर्दयेत् ।
तेन बाकुचिचक्राह्वकार्पासागस्तिपल्लवान् ॥ ७० ॥
एकस्य[15] कुट्टि[16]तस्याम्ले स्वरसेन रसेन यः ।
प्रक्षालितः प्रयात्येव विषदि[17]ग्धव्रणः शमम् ॥ ७१ ॥
रसायनोक्तविधिना शुद्धो लब्धबलः पुनः ।
प्रातः प्रातः कणापथ्याविश्वसैन्धवचित्रकम् ॥ ७२ ॥

---

१ च. °दान्गोरो°। २ घ. कालीयकं । ३ घ. सेव्यं । च. °सिक्यं । ४ झ. °रसं तै°। ५ च. °मिश्रं पा°। ६ क. °पनम् ॥ ६४ ॥ ७ झ. जग्धः। ८ च. °ग्रासाजी°। ९ झ. °चाम्लपि°। १० क. °रिपिष्टं । ११ क. पिशाचा प°। च. पिशाच प°। १२ झ. °पित्थं पञ्चकं नीरं र°। १३ घ. पिप्पलीं । १४ ज. वाऽपिले°। झ. वारिले°। १५ झ. °स्य लकुचस्या°। १६ ग. कुटित°। १७ च. °षदग्ध°।

पीत्वा संरक्षणायाग्नेरीषदुष्णेन वारिणा ।
भृङ्गामलकनिर्यासे[1] भावितं व्योमकान्तयोः ॥ ७३ ॥
भस्मायःसंपुटे धान्ये स्थापितं मधुसर्पिषा ।
खादेन्निशि कणापथ्या मासमेकं तथा पुनः ॥ ७४ ॥
पातनाभस्मै[2] वा युक्तमथ सूतस्य भस्मना ।
जीर्णा[3]म्लहेम्नः[4] षण्मासाच्छतावर्या रसेन च ॥ ७५ ॥
[5]त्रिफलां मधुसर्पिर्भ्यां[6] खादिरासनभाविताम्[7] ।
मृतहेमरसोपेतां भक्षये[8]द्वक्षयेत्तराम् ॥ ७६ ॥
गन्धकेन हतं[9] सूतं[10] कान्तं धात्रीरसेन च ।
त्रिफलासहितं खादेज्जीवेदाचन्द्रतारकम् ॥ ७७ ॥
चित्रकं त्रिफला भृङ्गो हरिद्राञ्जनपत्रिका ।
रसस्त्रिमधुरश्चापि जरावैरूप्यनाशनः ॥ ७८ ॥

**अथ वज्रपञ्जररसः**—रसौषधीनां रसभावितानां सितायुतैः क्षीरमधूदकाज्यैः ।
जरां रसो हन्ति च कान्तपात्रे क्षीरं शृतं काञ्चनपादपिष्टया ॥ ७९ ॥
क्षेत्रीकरणमित्युक्तं वज्रभस्मसमं रसम् ।
हंसपादीरसैर्घृष्टं [11]विपचेत पुटानले ॥ ८० ॥
तुल्य[12]मीश्वरसं तेन पूर्ववन्मर्दितं पचेत् ।
यावच्छक्यं चतुर्थांशमाने[13]नानेन भस्मना ॥ ८१ ॥
अम्ल[14]पिष्टेन सौवर्णं पत्रमालिप्य मा[15]रयेत् ।
राजिकार्धार्धमारभ्य यावन्माषं विवर्धितः[16] ॥ ८२ ॥
चित्रकार्द्रकसिन्धूत्थ[17]तीक्ष्णासौवर्चलैः सह ।
सेवितः पलपर्यन्तं रसोऽयं वज्रपञ्जरः ॥
शरण्यः[18] परिभूतानां व्याधिवार्ध[19]कमृत्युभिः ॥ ८३ ॥

**अथ पञ्चामृतः**—हेममाक्षिककान्ताभ्रवज्रभस्म प्रवेशयेत् ।
रसे[20] सहेम्नि सप्ताहं मूलिकारसमर्दिताम् ॥ ८४ ॥

---

१ ख. °र्यासैः भा°। ज. °र्यासो भा°। २ च. °स्मना यु°। ३ घ. °र्णाल्पहे°। ज. °र्णाभ्रहे°। ४ ज. °हेम ष°। ५ घ. त्रिफला। ६ घ. °र्भ्यां खदिरासवभा°। ७ घ. °वितम्। ८ झ. °येज्जराम्। ९ ज. हितं। १० घ. सृतं। च. घृतं। ११ क. विपुटेत्ततपुटा°। १२ झ. °मन्यं र°। १३ झ. °नेन रसभ°। १४ झ. अम्लेपि°। १५ घ. मादये°। १६ क. °र्धितम् ॥८२॥ १७ च. °तीक्ष्णसौ°। १८ च. झ. °ण्यः सर्वभू°। १९ झ. °र्धक्यमृत्युजित् ॥ ८३ ॥ २० झ. °सेन हे°।

तां पि[1]ष्टिं यन्त्रयोगेन पचेत्पञ्चामृताह्वयः ।
रसोऽयं मधुसर्पिर्भ्यां यु[2]क्तः पूर्वाधिको गुणैः ॥ ८५ ॥ इति पञ्चामृतः ।
घनसारचतुर्जातक[3]ङ्कोलं कटुकीफलम् ।
[4]फलं ताम्बूलवल्लीनां र[5]सस्याक्रमणं परम् ॥ ८६ ॥
भुञ्जीत शालिगोधूमयवषष्टिकजाङ्गलम् ।
मुद्गयूषं गवां क्षीरं मस्तु स्नायात्सु[6]खाम्भसा ॥ ८७ ॥
रूपयौवनसंपन्नामनु[7]रूपां प्रियां भजेत् ।
अभ्यङ्गं कटुतैलेन का[8]ञ्जीतैलं सुरां दधि ॥ ८८ ॥
कालिङ्गकारवे[9]ल्लाम्ललशुनासुरिमूलकम् ।
[10]द्विदलं बिल्ववार्ताकं छत्राकं का[11]कमाचि[12]काम् ॥ ८९ ॥
अ[13]ङ्गसंमर्दनं रात्रौ जागरं स्वपनं दिवा ।
अत्यम्लतिक्तलवणं स्वा[14]दूष्णं शिशिरौषधम् ॥ ९० ॥
[15]शोकवातातपक्रो[16]धचिन्तां च परिवर्जयेत् ।
सा[17]हसं रसलोहानां मारकं च विशेषतः ॥ ९१ ॥
सेवया परिहार्याणां रस[18]स्यो[19]जरणा भवेत् ।
शू[20]लो नाभितले जाड्यं निद्रालस्यं ज्वरस्तमः ॥ ९२ ॥
अङ्गभङ्गोऽरुचिर्दाहः पिबेत्तत्र दिनत्रयम् ।
सौवर्चलं सगोमूत्रं कर्कोटीमूलवारिणा ॥ ९३ ॥
मातुलुङ्गस्य वा[21]ऽम्लेन मा[22]णिमन्थं सनागरम् ।
नागवङ्गयुतः सूतः प्रमादाद्भक्षितो यदि ॥ ९४ ॥
सैन्धवं कारवेल्लस्य कन्दं मूत्रैः पिबेद्द्रवाम् ।
कर्कोटीगरुडीपथ्याशरपुङ्खैर्विपाचि[23]तैः ॥ ९५ ॥
अष्टभागावशिष्टं वा [24]गोमूत्रं सैन्धवान्वितम् ।
यत्क्षेत्रीकरणं पूर्वं वेधकं च रसं ततः ॥ ९६ ॥
सेवेत तस्य सिद्धिः स्यादन्यथा मरणं ध्रुवम् ।
कान्ताभ्रताप्यसत्त्वानां वज्रहेम्नो रसस्य च ॥ ९७ ॥

---

१ ग. पिष्टित्रयया°। २ क. उक्तः । घ. भुक्तः । ३ ज. °क्कोलकटुकं फ°। झ. °क्कोलं क°। ४ घ. फलां। ज. पलं। ५ घ. रसः स्यात्क्रम°। झ. रसे स्यात्क्रम°। ६ ज. °खान्बुना ॥८७॥ ७ झ. °लुकूलां प्रि°। ८ ज. काञ्जिते°। ९ झ. °लाम्रल°। झ. °लाम्रल°। १० घ. विदलं । झ. बबूलवि°। ११ घ. काचमा°। १२ क. °चिका ॥८९॥ १३ घ. सङ्गमं म°। झ. सर्ग सम°। १४ च. स्यादुष्णं । १५ ज. शोकं वा। १६ ज. °क्रोधं चि°। १७ झ. सहसं। १८ क. °सस्य ज°। १९ अ. °स्याजार°। २० ग. शूले। २१ घ. °स्य चाम्ले°। २२ झ. मणिमन्थं । २३ ज. °चितैः। २४ ग. गोमूत्रः। झ. गोमूत्रैः।

सप्ताहमम्लपिष्टानां गोलके लेपितेऽन्वहम्।
*गोजिह्वावायसीपथ्यानिर्गुण्डीमधुसैन्धवम् ॥ ९८ ॥
स्विन्ने भू[1]धरयन्त्रस्थे पश्चात्कठिनतां गते।
यवचिञ्चापलाशा[2]क्षरा[3]जिकापांसतन्दुलैः ॥ ९९ ॥
आव[4]र्तितान्तर्लिप्तायां मूषायां खदिराग्निना।
टङ्कणं श्वेतका[5]चं च दत्त्वा दत्त्वा विशोषिते ॥ १०० ॥
मूषायां बिडयोगेन समांशं हेम जारयेत्।
संवत्सरं मु[6]खधृता मृतसंजीवनी मता ॥ १०१ ॥
गुटिका च शस्त्रस्तम्भं कुरुते हरते जरामरणम् ॥ १०२ ॥
समचीर्णजीर्णहेममाक्षिकयोगेन मारितो वृष्यः।
घृतमधुशतावरीरसदुग्धयुतो मदनवर्धनः सूतः ॥ १०३ ॥
लोहितागस्त्यसारेण कृष्णरम्भाफलद्रुतम्।
रसं च घनसारं च पीत्वा स्त्रीषु वृषायते ॥ १०४ ॥

युगस्वभावाद्यदि चौषधीनां क्रियासु शक्तिः परिक[7]ल्प्यतेऽल्पा।
आयुर्बलादिष्वपि सा तथे[8]ति तस्मान्निषे[9]व्यानि रसायनानि ॥ १०५ ॥
न[10] चौषधीनामपि सर्वथैव प्रभावहानिः परिकल्पनीया।
फलं प्रयात्यूर्ध्वमधस्त्रिवृ[11]च्च प्रत्यक्षतः कस्य न सि[12]द्धमेतत् ॥ १०६ ॥
[13]अदेशकालो[14]पहितानि सात्म्यान्यत्युष्णतीक्ष्णानि यथौषधानि।
नाशं नयन्ते सहसैव देहं सम्यक्प्रवृत्तानि यथैव वृद्धिम् ॥ १०७ ॥
जित्वा तस्मादिन्द्रियादिप्रदुष्टान्कालोपेतः श्रद्दधानो यथावत्।
आयुःप्रज्ञातेजसां यद्विवृद्ध्यै वीर्योपेतं शीलयेदौषधं तत् ॥ १०८ ॥

शास्त्रानु[15]सारिणी च[16]र्या चित्तज्ञाः पार्श्ववर्तिनः।
बु[17]द्धिरस्खलिताऽर्थेषु परिपूर्णं रसायनम् ॥ १०९ ॥
दानं शीलं दया सत्यं ब्रह्मचर्यं कृतज्ञता।
रसायनानि मैत्री च पुण्यायुर्वृद्धिकृ[18]द्गणः ॥ ११० ॥

* इदं श्लोकार्धं झसंज्ञितपुस्तके नास्त्येव।

१ झ. भूमध्यय°। २ झ. °शानां राजीका° ३ घ. राजीका°। ४ ख. °र्तितं तु लिप्ता°। घ. °र्तितेऽन्त°। ५ घ. °कान्तं च। ६ मुखे धृत्वा मृ°। ७ क. °कल्पते। ८ च. °पि सर्वथे°। ९ झ. °थेयं यत्नान्निषेव्याणि र°। १० झ. नैवौष°। ११ ग. °वृते प्र°। १२ ग. सिद्धिमे°। १३ ज. अशेष°। १४ ज. °परिता°। १५ क. °नुचारि°। १६ ग. चर्योचितज्ञाः। १७ घ. वृद्धि°। १८ च. °कृद्गुणः। ज. °कृद्गुणाः ॥ ११० ॥

एतदागमसिद्धत्वात्प्रत्यक्षफलदर्शनात्।
मन्त्रवत्संप्रयोक्तव्यं न मीमांस्यं कथंचन॥ १११॥
[1]लोभयन्त्यातुरं मूर्खा विचित्रैः कर्मकौशलैः।
तेभ्यो रक्षेत्सदाऽऽत्मानमात्मा यस्मात्सुदुर्लभः॥ ११२॥
ते घुणाक्षरव[2]त्किंचिदुत्थाप्य नियतायुषम्।
घ्नन्ति वैद्याभिमानेन शतान्यनियतायुषाम्॥ ११३॥
अज्ञातशास्त्रसद्भावाञ्शास्त्रमात्रपरायणान्।
[3]तान्वर्जयेद्भिषक्पाशान्पाशान्वैवस्वतानिव॥ ११४॥
प्रदीपभूतं शास्त्रं हि [4]दर्शितं विपुला मतिः।
ताभ्यां भिषक्सुयुक्ताभ्यां चिकित्सन्नापराध्यति॥ ११५॥
क्वचिदर्थः क्वचिन्मैत्री क्वचिद्धर्मः क्वचिद्यशः।
क्वचिदभ्यासयोगश्च चिकित्सा नास्ति निष्फला॥ ११६॥
ये क्रियां विक्रियां कु[5]र्वन्त्युपेक्षन्ते स्खलन्ति वा।
खादन्ति ते परप्राणान्निजानि सुकृतानि च॥ ११७॥
यावदुच्छ्वसिति प्राणी याव[6]द्भेषजमत्ति च।
तावच्चिकित्सा कर्तव्या दैवस्य कुटिला गतिः॥ ११८॥
अनाथान्रोगिणो वैद्यः पुत्रवत्समुपाचरेत्।
प्राणा[8]चार्यश्च पितृवत्संपूज्यः शक्तिभक्तितः॥ ११९॥
न प्राणिरहितो देशो न च प्राणी निरामयः।
तस्मात्सर्वत्र भिषजां कल्पिता एव वृत्तयः॥ १२०॥
यज्ञस्य च शिरश्छिन्नमश्विभ्यां संधितं पुरा।
पातिता दशनाः पूष्णो भगस्य च विलोचने॥ १२१॥
राजयक्ष्मार्दितश्चन्द्रस्ताभ्यामेव चिकित्सितः।
भार्गवश्च्यवनः कामी वृद्धः सन्विकृतिं गतः॥ १२२॥
वीर्यवर्णबलोपेतः कृतस्ताभ्यां पुनर्युवा।
[9]ऐभिश्चान्यैश्च बहुभिः कर्मभिर्भिषगुत्तमौ॥ १२३॥
बभूवतुर्भृशं पूज्याविन्द्रादीनां महात्मनाम्।
सौत्राम[10]ण्यां च भगवानश्विभ्यां सह मोदते॥ १२४॥

---

१ घ. क्षोभ°। २ च. °वत्किंचि°। ३ च. तद्वर्ज°। ४ च. दर्शनं। ५ घ. °र्वन्त्यपे°। ६ ज. °वद्भेषज्यमस्ति च। घ. °मस्ति च°। ७ क. अन्यथा। ८ क. °चार्यं च पितृवत्संपूज्याथ स्वशक्तितः। झ. °चार्यं च पितृवत्संपूज्य भक्तिशक्तितः। ९ झ. एतैश्चा°। १० घ. °मण्यश्च भ°। झ. °मण्याश्च भ°।

अश्विभ्यां सहितः सोमं प्रायः पिबति वासवः ।
अश्विभ्यां कल्पितो भागो यज्ञेषु च महर्षिभिः ॥ १२५ ॥
अश्विनावग्निरिन्द्रश्च वेदेषु सुतरां स्तुताः ।
वैद्यावित्यश्विनौ देवौ पूज्येते विबुधैरपि ॥ १२६ ॥
अजरैरमरैर्नित्यं सुखितैरेवमादृतैः ।
व्याधिमृत्युजराग्रस्तैर्दुःखप्रायैः सुखार्थिभिः ।
किं पुनर्भिषजो मर्त्यैः पूज्याः स्युर्नाऽऽत्मशक्तितः ॥ १२७ ॥

*रसरत्नसमुच्चयो मयेत्थं रचितः
साधु नितान्तमाद्रियन्ताम् ।
सुधियो यदि विद्यतेऽत्र दोषः
कचिदर्हन्ति ममाप्यलं विसोढुम् ॥ १२८ ॥ ३८६४ ॥

इति श्रीवैद्यपतिसिंहगुप्तस्य सूनोर्वाग्भटाचार्यस्य कृतौ रसरत्नसमुच्चये रसकल्पो नाम त्रिंशोऽध्यायः ॥ ३० ॥

॥ समाप्तश्चायं ग्रन्थः ॥

---

* दृश्यतेऽयं श्लोको गचसंज्ञितपुस्तकयोरेव ।

१ च. देवेषु । २ घ. °रमृतैर्नि° । ३ घ. °मादृतैः । ४ ग. स्युर्नास्ति श° । घ. स्युर्नातिश° । ज. स्युर्नैतिश° । झ. स्युश्चाऽऽत्मश° ।

# अथ रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| भालुकी मैथि .. .... .... | भालुकिर्मर्य्य... .... .... | १ | ७ | १ |
| काकचण्डी.... .... .... | काकश्चण्डी.... .... .... | १ | ६ | १ |
| निरक्षिन्ते .... .... .... | निरीक्षन्ते .... .... .... | १ | १८ | २ |
| धश्चि... .... .... .... | धीश्च... .... .... .... | १ | ३७ | १ |
| चञ्चलः .... .... .... | निर्मलः .... .... .... | १ | ७० | १ |
| राज्यस्य...... .... .... | राजस्य .... .... .... | १ | ८६ | १ |
| श्रुक्रं... .... .... .... | शुक्रं... .... .... .... | २ | २ | १ |
| चंद्रसंयुक्तं .... .... .... | चन्द्रिकायुक्तं.. .... .... | २ | १४ | २ |
| घनं.... .... .... .... | हतं.... .... .... .... | २ | २२ | १ |
| घनध्वान .... .... .... | घना धान्य.... .... .... | २ | ३० | १ |
| घर्मे भूयो .... .... .... | धमेद्भूयो .... .... .... | २ | ३६ | १ |
| वर्तितम् .... .... .... | मर्दितम् .... .... .... | २ | ८७ | १ |
| सत्त्वेन रसेंद्र.. .... .... | सत्त्वं च रसेन .... .... | २ | ९२ | १ |
| विलीने .... .... .... | विलीनं .... .... .... | २ | १०५ | २ |
| जारयेत्रिगुणात्लकम् .. .... | जायते त्रिगुणात्मकम् .... | २ | १०५ | २ |
| भस्मदशांशेन.. .... .... | भस्म दशांशेन .... .... | २ | १०६ | २ |
| गर्भं गिरे .... .... .... | गर्भगिरे .... .... .... | २ | ११३ | २ |
| कारमधू .... .... .... | कारं सधू .... .... .... | २ | ११४ | १ |
| ऽथ.... .... .... .... | ऽप्य... .... .... .... | २ | ११४ | २ |
| धातुःश्वसनैर्लोह .... .... | धातुस्तत्क्षणाल्लोह.... .... | २ | १२४ | १ |
| पञ्च.... .... .... .... | तुत्थ.... .... .... .... | २ | १३१ | २ |
| शिला.. .... .... .... | शिखि. .... .... .... | २ | १३६ | १ |
| भुक्.... .... .... .... | युक् ... .... .... .... | २ | १३७ | १ |
| मुद्रिते. .... .... .... | मुद्रिते. .... .... .... | २ | १३९ | १ |
| तु .... .... .... .... | च .... .... .... .... | २ | १५४ | १ |
| कृतिं.... .... .... .... | कृति... .... .... .... | २ | १६५ | १ |
| ध्रुवम्... .... .... .... | ध्रुवम्.. .... .... .... | २ | १७० | १ |
| सत्या.. .... .... .... | सत्त्वा .... .... .... | ३ | १६ | ४ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| बलिना. .... .... .... | प्रकारान्तरेण गन्धकोत्पत्तिः। बलिना .... .... .... | ३ | १७ | १ |
| भन्नो.. .... .... .... | स्विन्नो .... .... .... | ३ | २३ | २ |
| कृति.... .... .... .... | कृतिं... .... .... .... | ३ | २४ | २ |
| सर्वत्र प्रति .... .... .... | सर्वत्राप्रति .... .... .... | ३ | ३६ | २ |
| क्लिन्न.... .... .... .... | स्विन्न.. .... .... .... | ३ | ५० | १ |
| शनी.... .... .... .... | शिनी.. .... .... .... | ३ | ६० | २ |
| शनी.... .... .... .... | शिनी.. .... .... .... | ३ | ६३ | २ |
| त्वम्लेन .... .... .... | मल्लेन.. .... .... .... | ३ | ७६ | २ |
| तेलै.... .... .... .... | तैले.... .... .... .... | ३ | ८० | २ |
| धुवम्.. .... .... .... | ध्रुवम्.. .... .... .... | ३ | ८१ | १ |
| कुप्यां.. .... .... .... | कूप्यां. .... .... .... | ३ | ८३ | १ |
| कुपि.... .... .... .... | कूपी... .... .... .... | ३ | ८५ | १ |
| त्रिफले. .... .... .... | त्रिपले. .... .... .... | ३ | ८६ | २ |
| उत्तरोक्तगुणैः.. .... .... | उत्तरोत्तरतः... .... .... | ३ | ९० | २ |
| निरङ्कणा .... .... .... | नीरकणा.. .... .... .... | ३ | ११४ | २ |
| भावितं .... .... .... | भाविता .... .... .... | ३ | ११५ | १ |
| क्काथ.... .... .... .... | क्काथो... .... .... .... | ३ | ११९ | १ |
| शनी.... .... .... .... | शिनी.. .... .... .... | ३ | १३२ | १ |
| पातयेन्नात्र .... .... .... | जायते नात्र.... .... .... | ३ | १४४ | २ |
| गुरुत्व .... .... .... | गुरुश्च... .... .... .... | ३ | १४९ | २ |
| क्षिर.... .... .... .... | क्षीर.... .... .... .... | ३ | १५४ | २ |
| बन्धस्य कारकाः .... .... | बन्धनकारकाः. .... .... | ४ | १ | १ |
| च्छ्रेष्ठ.... .... .... .... | च्छ्रेष्ठं... .... .... .... | ४ | १० | २ |
| हूलादि .... .... .... | हूलादि .... .... .... | ४ | १३ | १ |
| बिम्बी .... .... .... | बिम्ब... .... .... .... | ४ | १७ | १ |
| सूक्ष्मं.. .... .... .... | रूक्षं.... .... .... .... | ४ | १८ | १ |
| कण्डरा .... .... .... | कोटरा. .... .... .... | ४ | १८ | १ |
| शुल्ब .. .... .... .... | शुभ्र.... .... .... .... | ४ | १८ | २ |
| शुशम्.. .... .... .... | शुभम्.. .... .... .... | ४ | २० | १ |
| पाण्डु कृष्णं च लाघवम् .... | पांडुकृष्णमलाघवम्.... .... | ४ | २१ | १ |
| पीतं श्यामं.... .... .... | पीतश्यामं .... .... .... | ४ | २४ | १ |
| गौरत्रा .... .... .... | ग्रासत्रा .... .... .... | ४ | ३३ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| तैर्मर्द्य वेष्टयेत् .... .... | तैः परिवेष्ट्य च .... .... | ४ | ३६ | १ |
| रुक्तः .... .... .... | रुक्तं .. .... .... .... | ४ | ३७ | २ |
| विधिक्रमः .... .... .... | विधिः क्रमात् .... .... | ४ | ३७ | २ |
| क्वात्थ .... .... .... | क्वाथ .. .... .... .... | ४ | ३८ | १ |
| स्यास्रे .... .... .... | स्यास्रैः .... .... .... | ४ | ४१ | १ |
| वर्तते .... .... .... | वर्तयेद् .... .... .... | ४ | ४६ | २ |
| भ्रमच्छुभ्रो .... .... .... | अभ्रशुभ्रो .... .... .... | ४ | ५७ | २ |
| स्थूलं .... .... .... | स्थूल .. .... .... .... | ४ | ६५ | १ |
| त्यसौ .... .... .... | त्यलम् .... .... .... | ४ | ७३ | २ |
| अशुद्धं न मृतं .... .... | अशुद्धममृतं.... .... .... | ५ | ११ | २ |
| समाचरेत् .... .... | च मारयेत् .... .... .... | ५ | ११ | २ |
| पिष्टं .... .... .... | पत्रं पिष्टिं वा .... .... | ५ | ३५ | २ |
| मिव .... .... .... | मवि ... .... .... .... | ५ | ७१ | १ |
| पागे .... .... .... | पोग .. .... .... .... | ५ | ७६ | १ |
| भूमिकं .... .... .... | भूमिजं .... .... .... | ५ | ७८ | २ |
| लोहघाते .... .... .... | लोहाघाते .... .... .... | ५ | ८१ | २ |
| सुम .... .... .... | सम .... .... .... .... | ५ | ८२ | १ |
| वा .... .... .... | चा .... .... .... .... | ५ | ८७ | १ |
| कारतां .... .... .... | कारकं .... .... .... | ५ | ९४ | ३ |
| लोहमादौ .... .... | शुद्धलोहं .... .... .... | ५ | ९६ | २ |
| संमिश्रं .... .... .... | संलिप्तं .... .... .... | ५ | ९९ | १ |
| य .... .... .... .... | ये .... .... .... .... | ५ | १०४ | २ |
| तम्र .... .... .... .... | तम्रू.... .... .... .... | ५ | १०९ | २ |
| द्रवणे स्थितैः. .... .... | द्रवपेषितैः .... .... .... | ५ | ११९ | १ |
| गन्धं गुडत्रिफलकांभसा .... | गन्धगुडत्रिफलया सह .... | ५ | १२२ | १ |
| पुटैस्त्रि .... .... .... | पुटैस्त्रि .... .... .... | ५ | १२२ | २ |
| पुद्मी.. .... .... .... | पुटी.... .... .... .... | ५ | १२३ | २ |
| त्रि .... .... .... .... | त्रिः.... .... .... .... | ५ | १२५ | २ |
| ली .... .... .... .... | लि .... .... .... .... | ५ | १२८ | १ |
| गोलकं. .... .... .... | गोजले .... .... .... | ५ | १२८ | १ |
| वापेन... .... .... .... | तापेन .... .... .... | ५ | १२८ | २ |
| खल्वेतु कृतकज्ञलीम्. .... | खल्वेन कृतकज्जलम् .... | ५ | १३४ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| ता भवेत् .... .... .... | तां व्रजेत् .... .... .... | ५ | १३५ | २ |
| ध्रुवम्.. .... .... .... | मृतम्.. .... .... .... | ५ | १३७ | १ |
| मयानि .... .... .... | मयांश्च .... .... .... | ५ | १४१ | २ |
| शनम्.. .... .... .... | शम्.... .... .... .... | ५ | १४१ | ४ |
| त्तरम्.. .... .... .... | त्तमम्.. .... .... .... | ५ | १४२ | १ |
| जंबू.... .... .... .... | जंबु.... .... .... .... | ५ | १४२ | १ |
| त्रि .... .... .... .... | त्रिः.... .... .... .... | ५ | १४२ | ३ |
| तत्क्षारं वापेत्कान्तं हति .... | तत्क्षारवापात्कान्तहृति .... | ५ | १४२ | ३ |
| लोहास्तिष्ठन्ति .... .... | लोहं तिष्ठति .... .... | ५ | १४४ | २ |
| सुतप्तं तु .... .... .... | सुसंतप्तं .... .... .... | ५ | १४७ | १ |
| तृणाम् .... .... .... | गुणान् .... .... .... | ५ | १४९ | २ |
| कट्वलाबु .... .... .... | कट्फलाम्बु .... .... | ५ | १५७ | २ |
| घोषा.. .... .... .... | घोषे .... .... .... | ५ | १५८ | १ |
| कीर्तितम् .... .... .... | शस्यते .... .... .... | ५ | १६० | १ |
| पत्राणि लेपयेत् .... .... | पत्रं प्रलेपयेत् .... .... | ५ | १६२ | १ |
| सिला.. .... .... .... | शिला .... .... .... | ५ | १६६ | १ |
| कृष्ण.. .... .... .... | कृष्णं.. .... .... | ५ | १७१ | १ |
| सिन्धुवारजटाकान्ती .... | सिन्दुरवारजटाकौन्ती .... | ५ | १७३ | १ |
| वारे ... .... .... .... | वारं.... .... .... .... | ५ | १७३ | २ |
| विघृष्य नि .. .... .... | घर्षयित्वा .... .... .... | ५ | १७७ | १ |
| मकैकं.. .... .... .... | मेकैकं .... .... .... | ५ | १७७ | १ |
| शीतिका .... .... .... | शीतक .... .... .... | ५ | १९० | २ |
| संतप्ता. .... .... .... | संतप्त्वा .... .... .... | ५ | १९२ | १ |
| तप्ता .. .... .... .... | तप्त्वा .... .... .... | ५ | १९७ | १ |
| धौतं भू .... .... .... | धौतभू .... .... .... | ५ | २२० | १ |
| खकांश्चरेत्.... .... .... | खकाह्वरेत्.... .... .... | ५ | २२२ | ३ |
| संभूत.. .... .... .... | संभूति .... .... .... | ५ | २२५ | २ |
| तमं.... .... .... .... | मिदं .... .... .... | ५ | २३१ | १ |
| षाण... .... .... .... | शाण .... .... .... | ५ | २३१ | २ |
| पेषिकां .... .... .... | पेशिकां .... .... .... | ५ | २३२ | २ |
| बाकूची .... .... .... | बाकुची .... .... .... | ५ | २४१ | १ |
| विशोधयेत्.... .... .... | निरोधयेत् .... .... .... | ५ | २४२ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| पश्चादुद्धृतं.... .... .... | पक्षादुद्धृत्य.... .... .... | ५ | २४२ | २ |
| कार्य.... .... .... .... | सूत .... .... .... .... | ६ | ७ | २ |
| चौर्यच्छन्न .... .... .... | चौर्याच्छन्न .... .... .... | ६ | ९ | २ |
| यथा.... .... .... .... | यदा.... .... .... .... | ६ | ११ | २ |
| सं .... .... .... .... | सा .... .... .... .... | ६ | १२ | १ |
| च्छत्र .... .... .... | छत्र .... .... .... .... | ६ | १७ | १ |
| गोहत्या अयुतानि च .... | स्त्रीगोहत्यायुतानि च .... | ६ | २२ | १ |
| लिंगं.... .... .... .... | लिंगे.... .... .... .... | ६ | २४ | २ |
| राः .... .... .... .... | रान्.... .... .... .... | ६ | २८ | २ |
| स्तु .... .... .... .... | श्च .... .... .... .... | ६ | २९ | १ |
| कालिनी शक्तिसंयुक्ता .... | कालिनीशक्तिसंयुक्तं .... | ६ | ३४ | २ |
| यणा .... .... .... | यणम् .... .... .... | ६ | ३४ | २ |
| लेश्चे.... .... .... .... | लेष्वे.... .... .... .... | ६ | ४८ | ३ |
| त्पलाः .... .... .... | पलाः .... .... .... | ६ | ५२ | २ |
| का शिला .... .... .... | काः शिलाः.... .... .... | ६ | ५३ | १ |
| दिव्यौषधादि .... .... | दिव्यौषधीनां .... .... | ६ | ५४ | २ |
| लंको लंपट.... .... | लंकालंपट । लंको लंपक .... | ६ | ५९ | १ |
| राजेन्द्रा .... .... .... | सूतेन्द्रा .... .... .... | ६ | ६० | १ |
| रोगिणां .... .... .... | रोगिणा .... .... .... | ६ | ७१ | २ |
| सर्वौषध .... .... .... | सर्वौषधि .... .... .... | ७ | १ | २ |
| ग्व.... .... .... .... | ग्वि .... .... .... .... | ७ | २ | १ |
| यक्षत्र्यक्षां सहस्राक्षां दि .... | यक्षत्र्यक्षसहस्राक्षदि<br>यक्षराजसहस्राक्षदि साधीयः | ७ | २ | १ |
| त्कौ.... .... .... .... | त्को.... .... .... .... | ७ | ६ | १ |
| श्चालिके पंक .... .... | नालिके वंश .... .... | ७ | ७ | १ |
| कृतान्त .... .... .... | कृतस्त .... .... .... | ७ | ७ | २ |
| कण्डणी .... .... .... | कण्डनी .... .... .... | ७ | ८ | २ |
| कुण्डनी .... .... .... | कुण्डली .... .... .... | ७ | १० | १ |
| गोर्वरं .... .... .... | गोवरं .... .... .... | ७ | १६ | १ |
| शितोपला .... .... .... | सितोपलाः .... .... .... | ७ | १६ | १ |
| च्छ .... .... .... .... | छ .... .... .... .... | ७ | १८ | १ |
| समाचरेत् .... .... .... | समर्चयेत् .... .... .... | ७ | २९ | २ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| वार्तिकाः .... .... .... | वार्त्तिकाः .... .... .... | ७ | २३ | २ |
| भाषज्ञाः .... .... .... | भाषाज्ञाः .... .... .... | ७ | २४ | १ |
| अदैष्टिकः .... .... .... | अदेशिकः .... .... .... | ७ | २७ | २ |
| हस्तो विवर्जितः .... .... | हस्तः स उच्यते .... .... | ७ | २८ | १ |
| भाषज्ञा .... .... .... | भाषाज्ञा .... .... .... | ७ | ३२ | २ |
| क्ता .... .... .... .... | क्त्वा .... .... .... | ७ | ३४ | २ |
| विमर्घा .... .... .... | विमर्घात् .... .... .... | ८ | ७ | २ |
| कृष्णीं .... .... .... | कृष्टीं.... .... .... .... | ८ | ११ | १ |
| संशुद्धि .... .... .... | संसिद्ध .... .... .... | ८ | १८ | २ |
| व्यूहं विशेषतः .... .... | व्यूहमशेषतः .... .... | ८ | १९ | २ |
| मपि.... .... .... .... | मिति.... .... .... .... | ८ | २२ | २ |
| र्त्तो .... .... .... .... | र्त्ती .... .... .... .... | ८ | २८ | २ |
| ण्युनमं .... .... .... | ण्युत्तमं ? .... .... .... | ८ | २८ | २ |
| साधनम् .... .... .... | नाशनम् .... .... .... | ८ | ३१ | २ |
| स्पृष्ट.... .... .... .... | सृष्ट .... .... .... .... | ८ | ३१ | २ |
| प्राप्यै.... .... .... .... | प्राप्तै .... .... .... .... | ८ | ३४ | २ |
| निर्द्रवे वंग .... .... .... | द्रुद्रावे वंश .... .... .... | ८ | ३५ | २ |
| वरं नागं .... .... .... | वरनागं .... .... .... | ८ | ३८ | २ |
| वार्तिकै .... .... .... | वार्त्तिकै .... .... .... | ८ | ४१ | २ |
| दलै .... .... .... .... | द्रवै .... .... .... .... | ८ | ४६ | १ |
| लोहेतारत्व .... .... .... | लोहे तारे च .... .... | ८ | ४६ | २ |
| का .... .... .... .... | कः .... .... .... .... | ८ | ४८ | १ |
| कृतम् .... .... .... | हि यत् .... .... .... | ८ | ५८ | १ |
| निर्वापणं .... .... .... | निर्यातनं .... .... .... | ८ | ६० | २ |
| मतिः .... .... .... | मितिः .... .... .... | ८ | ६४ | १ |
| गर्भद्रावणं .... .... .... | गर्भे द्रावणं .... .... .... | ८ | ६५ | १ |
| वार्तिकैः .... .... .... | वार्त्तिकैः .... .... .... | ८ | ६५ | २ |
| रुया परा .... .... .... | रुयाः पराः .... .... .... | ८ | ६६ | १ |
| संमुखा .... .... .... | समुखा.... .... .... .... | ८ | ६९ | २ |
| क्षपणं .... .... .... | क्षेपणं.... .... .... .... | ८ | ७१ | १ |
| बहुवारं द्रुतिं .... .... | बहिरेवं द्रुती.... .... .... | ८ | ७२ | १ |
| रा .... .... .... .... | र .... .... .... .... | ८ | ७६ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| लेपेन.. .... .... .... | लेपनं... .... .... .... | ८ | ८० | २ |
| सदाग्नियुतचूल्यंतं .... .... | मंदाग्नियुतचुल्ल्यंतः... .... | ८ | ८७ | २ |
| यः अध्यायो.... .... .... | ऽयमध्यायो.... .... .... | ८ | ९० | १ |
| ना .... .... .... .... | नाम्.... .... .... .... | ८ | ९० | १ |
| भाण्डे मुखं .... .... .... | भाण्डमुखं .... .... .... | ९ | ७ | १ |
| अधो... .... .... .... | अथो.... .... .... .... | ९ | ९ | १ |
| लिप्तं स्था .... .... .... | लिप्तस्था .... .... .... | ९ | ९ | १ |
| तस्मिन्निपतितसूतः... .... | यस्मिन्निपतति सूतः.. .... | ९ | १० | २ |
| तले क्रि .... .... .... | तलक्रि. .... .... .... | ९ | २० | २ |
| पूर्णतर. .... .... .... | पूर्वोक्त.. .... .... .... | ९ | २३ | २ |
| सोमनाल .... .... .... | सोमानल .... .... .... | ९ | २७ | २ |
| णम्.... .... .... .... | कम्.... .... .... .... | ९ | २८ | १ |
| लोहस्य .... .... .... | लोणस्य .... .... .... | ९ | २९ | २ |
| वालुकासु प्रतिष्ठितम्.. .... | वालुका सुप्रतिष्ठिता.... .... | ९ | ३५ | १ |
| भागस्य .... .... .... | तद्भाण्डम् .... .... .... | ९ | ३५ | २ |
| पूर्णं भा .... .... .... | पूर्णभा.. .... .... .... | ९ | ३७ | १ |
| लेपात्ताम्र .... .... .... | लेपताम्र .... .... .... | ९ | ३८ | २ |
| न्नालिका .... .... .... | न्नलिका .... .... .... | ९ | ४१ | २ |
| यत्र.... .... .... .... | [१९ अथ वलभीयंत्रम्] यत्र | ९ | ४५ | १ |
| परिन्यस्तस्वल्प .... .... | परि न्यस्य स्वल्प.... .... | ९ | ४६ | १ |
| ज्जलहार्यं .... .... .... | द्वलभीय .... .... .... | ९ | ४७ | १ |
| रसषा.. .... .... .... | रसे षा. .... .... .... | ९ | ४७ | १ |
| णम्.... .... .... .... | कम्.... .... .... .... | ९ | ४७ | १ |
| [१९ अथ जलहार्यंत्रम्] एत | एत.... .... .... .... | ९ | ४७ | १ |
| वार्तिकै. .... .... .... | वार्त्तिकै .... .... .... | ९ | ५० | २ |
| वर्तुलां गर्तां.... .... .... | वर्त्तुलं गर्त्तं.... .... .... | ९ | ५३ | १ |
| कृष्ट.... .... .... .... | कृष्टि... .... .... .... | ९ | ५८ | १ |
| गत्रोच्य .... .... .... | र्यत्रोच्च .... .... .... | ९ | ६१ | २ |
| रंध्रणार्थं .... .... .... | रंधनार्थं .... .... .... | ९ | ६८ | ३ |
| स्थ.... .... .... .... | स्तात्.. .... .... .... | ९ | ६९ | २ |
| जलाधारं .... .... .... | गलाधारे .... .... .... | ९ | ७० | २ |
| पात्राधो .... .... .... | पत्राधो. .... .... .... | ९ | ७२ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| पात्राणां .... .... .... | पत्राणां .... .... .... | ९ | ७५ | १ |
| नम्.... .... .... .... | ने .... .... .... .... | ९ | ७६ | २ |
| यंत्रे .... .... .... .... | यंत्रं .... .... .... .... | ९ | ७८ | १ |
| तृणो... .... .... .... | मुखो ? .... .... .... | ९ | ७९ | १ |
| मर्दने... .... .... .... | कर्मणि .... .... .... | ९ | ८२ | ३ |
| स्थितैर्वांऽगु.... .... .... | स्तथैवांगु .... .... .... | ९ | ८४ | २ |
| पाल्या. .... .... .... | पाल्यां .... .... .... | ९ | ८४ | ३ |
| निवेशितं .... .... .... | निवेश्य तं .... .... .... | ९ | ८९ | २ |
| रसेन म .... .... .... | तदंतर्म .... .... .... | ९ | ९० | १ |
| भादिका .... .... .... | हाटिका .... .... .... | १० | १ | १ |
| षेया ... .... .... .... | षा या .... .... .... | १० | २ | १ |
| रंध्राणं. .... .... .... | अंभ्रणं .... .... .... | १० | ४ | २ |
| सा खलु .... .... .... | स्यात्खलु .... .... .... | १० | ६ | २ |
| रैः .... .... .... .... | रे .... .... .... .... | १० | ७ | १ |
| च योग्यं च... .... .... | कृष्णमृत्स्ना.... .... .... | १० | ७ | २ |
| तथा.... .... .... .... | तया.... .... .... .... | १० | १० | १ |
| संयुता.. .... .... .... | मर्दिता .... .... .... | १० | ११ | २ |
| केरिता .... .... .... | कोचिता .... .... .... | १० | १२ | २ |
| एषा.... .... .... .... | तया.... .... .... .... | १० | १२ | २ |
| दुग्ध ... .... .... .... | दुग्ध.... .... .... .... | १० | १३ | १ |
| ध्या कि .... .... .... | ष्टकि .. .... .... .... | १० | १३ | १ |
| सहिता .... .... .... | रहिता .... .... .... | १० | १६ | १ |
| म्बु .... .... .... .... | नु .... .... .... .... | १० | १६ | १ |
| दासाधिता .... .... .... | या साधिता .. .... .... | १० | १६ | २ |
| यो .... .... .... .... | गु .... .... .... .... | १० | १७ | १ |
| मष्टगु... .... .... .... | मृष्टश .... .... .... | १० | १९ | १ |
| पक्षसूत्रे .... .... .... | पत्रमात्रे .... .... .... | १० | २० | १ |
| लिप्त्वा .... .... .... | लिप्ता .. .... .... .... | १० | २० | २ |
| मूखे .... .... .... .... | मुखे .... .... .... .... | १० | २२ | १ |
| मूस .... .... .... .... | मुस .... .... .... .... | १० | ३२ | २ |
| मूर्ध .... .... .... .... | मूर्ध्व .... .... .... .... | १० | ३८ | २ |
| गर्तद्वाराणि प. .... .... | गर्त्ताद्धरणिप .... .... | १० | ४१ | २ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् | अ० | श्लो० | पं० |
|---|---|---|---|---|
| मिति .... .... .... | मिदं .... .... .... .... | १० | ४७ | २ |
| दृढ .... .... .... .... | दृढं .... .... .... .... | १० | ४७ | २ |
| स्रष्ट .... .... .... .... | मृष्ट .... .... .... .... | १० | ४८ | १ |
| शनी .... .... .... | शिनी .... .... .... | १० | ४८ | १ |
| इति यन्त्राणि .... .... | इति मूषाकोष्ठिकायन्त्राणि.... | १० | ४९ | २ |
| ज्वालिता .... .... .... | जारिता .... .... .... | १० | ५२ | २ |
| निम्ने वि .... .... .... | निम्नवि .... .... .... | १० | ५४ | १ |
| संधीभिः .... .... .... | साठीभिः .... .... .... | १० | ५७ | १ |
| लं .... .... .... .... | ले .... .... .... .... | १० | ६० | १ |
| गोर्वरं .... .... .... | गोवरं .... .... .... | १० | ६२ | २ |
| नम् .... .... .... .... | ने .... .... .... | १० | ६२ | २ |
| र्वं .... .... .... .... | व .... .... .... .... | १० | ६३ | १ |
| र्वं .... .... .... .... | व .... .... .... .... | १० | ६३ | २ |
| मात्रै .... .... .... .... | मूत्रै .... .... .... .... | १० | ६७ | १ |
| क्तपू .... .... .... .... | कर्पू .... .... .... .... | १० | ९३ | १ |
| तज्जा .... .... .... | यज्जा .... .... .... | १० | ९७ | १ |
| शस्तास्थिर्नीच वर्गो .... | शशास्थीनि च योगो .... | १० | ९९ | २ |
| ग्धां .... .... .... .... | ग्ध्यं .... .... .... | १० | १०१ | २ |
| तु .... .... .... .... | स्यात् .... .... .... | १० | १०२ | १ |
| स स्या .... .... .... | साक्षा .... .... .... | १० | १०३ | १ |
| षाणनिष्ककलाः .... .... | शाणं निष्ककला .... .... | ११ | ३ | २ |
| णं न .... .... .... | णन .... .... .... .... | ११ | ८ | २ |
| स्यादुत्थितिः .... .... | उत्थापनं .... .... .... | ११ | ११ | २ |
| संयोज्यो .... .... .... | न योज्यो .... .... .... | ११ | १३ | १ |
| स मृद्ध .... .... .... | समृद्धा .... .... .... | ११ | १३ | २ |
| न्यैः .... .... .... .... | न्ये .... .... .... | ११ | १६ | २ |
| स्का .... .... .... .... | स्क .... .... .... .... | ११ | २० | २ |
| नैव .... .... .... .... | नापि .... .... .... | ११ | २२ | १ |
| चरेत् .... .... .... | रभेत् .... .... .... | ११ | २२ | २ |
| मूलम् .... .... .... | मूलकम् .. .. .... | ११ | २३ | १ |
| बीजं .... .... .... .... | बीज .... .... .... .... | ११ | २६ | १ |
| नम् .... .... .... .... | ने .... .... .... .... | ११ | ३३ | १ |

# रसरत्नसमुच्चयस्य शोधनपत्रम् ।

| वर्जनीयम् । | स्वीकरणीयम् । | अ० | श्लो० | पं० |
|---|---|---|---|---|
| कुमारि | कुमारी | ११ | ३४ | १ |
| रक्ता भ्र | रक्ताभ | ११ | ४८ | २ |
| तदा | तथा | ११ | ५५ | १ |
| भिघातश्च | भिधश्चेति | ११ | ५८ | १ |
| क्षते देही | ष्यते देहे | ११ | ५९ | १ |
| क्षेत्र | क्षेत्री | ११ | ६१ | १ |
| ऽधो | यो | ११ | ६१ | २ |
| यातो | याति | ११ | ६५ | २ |
| भूतो | सूतो | ११ | ७१ | २ |
| स्त्वतः | स्तब्धः | ११ | ७३ | २ |
| ११ बन्धो [ साधीयान् ] | ११ बद्धो [ साधीयान् ] | ११ | ७३ | २ |
| सोऽग्निना | नाग्निना | ११ | ८१ | १ |
| बद्धवत् | बंधवान् ? | ११ | ८२ | १ |
| लोह | योग | ११ | ८३ | १ |
| स हि परो | सहचरो | ११ | ८४ | १ |
| निचितो | निबिडो | ११ | ८४ | २ |
| घृष्टे | घृष्टो | ११ | ८४ | ३ |
| मतो ब | महाब | ११ | ८४ | ४ |
| इति रसबद्ध | इति रसबन्ध | ११ | ८४ | ४ |
| कूलिकैः | मूलकैः ? | ११ | ८५ | १ |
| कुतुंबकैः | कुरंटकैः | ११ | ८५ | २ |
| पात्रं | पात्रे | ११ | ९१ | १ |
| रससमजरितं | समरसजारितं | ११ | ९६ | २ |
| स्तु | सु | ११ | ९९ | २ |
| तु | च | ११ | १०० | २ |
| तु | च | ११ | १०० | २ |
| र्णं | र्णम् | ११ | १०७ | २ |
| ध्रुवं | धृतं | ११ | १२० | २ |
| सा | षा | ११ | १२१ | २ |
| कमठ | कलम | ११ | १२५ | १ |
| न्ध्य | ध्य | १२ | १४ | १ |
| क्रमात् | पुनः | १२ | २३ | १ |

